घो व्यक्तकृष्णलोहितः पिङ्गंगस्तृणवह्रिवर्णः त्रिवर्णः शवलो विचित्रकर्बुर इत्यर्थः ॥२५॥ कालंधुरो वर्णविशेषः नामतः स्वायंभुवादिना वर्णतः अकारादिना पुनर्वर्णतः श्वेतत्वादिन। समाख्याता इत्यग्रिमेणान्वयः ॥ २६ ॥ २७ ॥ २८ ॥ सप्तमांतरतः सप्तमेंतरे इत्यर्थः ॥२९॥ योगावतारान् कथयति आद्येत्यादिना—आद्ये स्वायंभुवमनोः प्रथमे कलौ रुद्रः श्वेतः श्वेतसंज्ञः १ सुतारः २ मदनः ३ ॥३०॥ सुहोत्रः ४ कंकणः कंकः तदुक्तं चतुर्विंशे 'तदापि च भविष्यामि कंको नाम महातपाः' इति ५ लोकाक्षिः ६ जैगीषव्यः ७ दधिवाहनः८

कालंधुरस्तु कथिता वर्णतो मनवः शुभाः ॥ नामतो वर्णतश्चैव वर्णतः पुनरेव च ॥ २६ ॥ स्वरात्मानः समाख्याताश्चांतरेशाः समासतः ॥ वैवस्वत ऋकारस्तु मनुः कृष्णः सुरेश्वरः ॥ २७ ॥ सप्तमस्तस्य वक्ष्यामि युगावर्तेषु योगिनः ॥ समतीतेषु कल्पेषु तथा चानागतेषु वै ॥ २८ ॥ वाराहः सांप्रतं ज्ञेयः सप्तमांतरतः क्रमात् ॥ योगावतारांश्च विभोः शिष्याणां संततिस्तथा॥२९॥संप्रेक्ष्य सर्वकालेषु तथावर्त्तेषु योगिनाम्॥ आद्ये श्वेतः कलौ रुद्रः सुतारो मदनस्तथा ॥ ३० ॥ सुहोत्रः कंकणश्चैव लोकाक्षिर्मुनिसत्तमाः ॥ जैगीषव्यो महातेजा भगवान् दधिवाहनः ॥ ३१ ॥ ऋषभश्च मुनिर्धीमानुग्रश्चात्रिः सुवालकः ॥ गौतमश्चाथ भगवान् सर्वदेवनमस्कृतः ॥ ३२ ॥ वेदशीर्षश्च गोकर्णो गुहावासी शिखंडभृत् ॥ जटा माल्याट्टहासश्च दारुको लांगली तथा ॥ ३३ ॥ महाकायमुनिः शूली दंडी मुंडीश्वरः स्वयम् ॥ सहिष्णुः सोमशर्मा च नकुलीशो जगद्गुरुः ॥ ३४ ॥ वैवस्वतेंतरे सम्यक् प्रोक्ता हि परमात्मनः ॥योगाचार्यावतारा ये सर्वावर्तेषु सुव्रताः ॥३५॥ व्यासाश्चैवं मुनिश्रेष्ठा द्वापरेद्वापरे त्विमे ॥ योगेश्वराणां चत्वारः शिष्याः प्रत्येकमव्ययाः ॥ ३६ ॥ श्वेतः श्वेतशिखंडी च श्वेताश्वः श्वेतलोहितः ॥ दुंदुभिः शतरूपश्च ऋचीकः केतुमांस्तथा ॥ ३७ ॥ विशोकश्च विकेशश्च विपाशः पापनाशनः॥सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः ॥३८॥ सनकश्च सनंदश्च प्रभुर्यश्च सनातनः ॥ ऋभुः सनत्कुमारश्च सुधामा विरजास्तथा ॥ ३९ ॥ शंखपा द्वैरजश्चैव मेघः सारस्वतस्तथा ॥ सुवाहनो मुनिश्रेष्ठो मेघवाहो महाद्युतिः ॥ ४० ॥

॥ ३१ ॥ ऋषभः ९ मुनिः १० उग्रः ११ अत्रिः १२ सुवालकः वालिः तदुक्तं चतुर्विंशे 'तदाप्यहं भविष्यामि वालिर्नाम महामुनिः' इति १३ गौतमः १४॥३२ ॥ वेदशीर्षः १५ गोकर्णः १६ गुहावासी १७ शिखंडभृत् १८ जटामाली १९ अट्टहासः २० दारुकः२१ लांगली २२ ॥ ३३ ॥ महाकायमुनिः२३ शूली २४ मुंडीश्वरः २५ सहिष्णुः २६ सोमशर्मा २७ लकुलीशः २८ ॥ ३४ ॥ शेषाणि तत्तद्विशेषणानि ज्ञेयानि ॥ ३५ ॥ प्रत्येकं योगेश्वराणां चत्वारः शिष्या अव्यया इत्यन्वयः ॥३६॥ योगावतारशिष्यान्नामभिर्निरूपयति श्वेत इत्यादिना ॥ ३७ ॥ ३८ ॥ ३९॥ ४० ॥

कपिलादयो धर्मात्मानो महौजस इत्यन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ परा ब्रह्माद्या अवराः पिशाचादयस्तेषां विभूतये परमैश्वर्यप्राप्तय इत्यर्थः ॥ ५५ ॥ पशुपाशमोचनार्थं योगेशव्यासशिष्यरूपेण अवतीर्णोस्मान् रुद्रो मुंचतु भवसंज्ञकात्पाशात्॥५६॥इति श्रीलिंगमहापुराणेपूर्वभागे शिवतोषण्यां टीकायां मनुव्यासयोगीश्वरतच्छिष्यनामवर्णनं नाम सप्तमोध्यायः ॥७॥ अष्टमे योगमार्गेण श्रीसांवाराधनाविधिः।अ

कपिलश्चासुरिश्चैव तथा पंचशिखो मुनिः ॥ वाल्कलश्च महायोगी धर्मात्मानो महौजसः ॥ ४१ ॥ पराशरश्च गर्गश्च भार्गवश्चांगिरास्तथा ॥ वलबंधुर्निरामित्रः केतुश्रृंगस्तपोधनः ॥ ४२ ॥ लंबोदरश्च लंबश्च लंबाक्षो लंबकेशकः ॥ सर्वज्ञः समबुद्धिश्च साध्यः सर्वस्तथैव च ॥ ४३ ॥ सुधामा काश्यपश्चैव वासिष्ठो विरजास्तथा ॥ अत्रिर्देवसदश्चैव श्रवणोऽथ श्रविष्ठकः ॥ कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥ ४४ ॥ कश्यपो प्युशनाश्चैव च्यवनोऽथ वृहस्पतिः ॥ उतथ्यो वामदेवश्च महायोगो महावलः ॥ ४५ ॥ वाचश्रवा सुधीकश्च श्यावाश्वश्च यतीश्वरः ॥ हिरण्य नाभः कौशल्यो लोगाक्षिः कुथुमिस्तथा ॥ ४६ ॥ सुमंतुर्ववंरी विद्वान् कवंधः कशिकंधरः ॥ प्लक्षो दाल्भ्यायणिश्चैव केतुमान् गोपनस्तथा ॥ ४७ ॥ भल्लावी मधुपिंगश्च श्वेतकेतुस्तपोनिधिः ॥ उशिको वृहदश्वश्च देवलः कविरेव च ॥ ४८ ॥शालिहोत्रोग्निवेशश्च युवनाश्वः शरद्वसुः ॥ छगलः कुंडकर्णश्च कुंभश्चैव प्रवाहकः ॥ ४९ ॥ उलूको विद्युतश्चैव मंडूको ह्याश्वलायनः ॥ अक्षपादः कुमारश्च उलूको वत्स एव च ॥ ५० ॥ कुशिकश्चैव गर्भश्च मित्रः कौरुष्य एव च॥शिष्यास्त्वेते महात्मानः सर्वावर्तेषु योगिनाम् ॥ ५१ ॥ विमला ब्रह्मभूयिष्ठा ज्ञानयोगपरायणाः ॥ एते पशुपाताः सिद्धा भस्मोद्धूलितविग्रहाः ॥ ५२ ॥ शिष्याः प्रशिष्याश्चैतेषां शतशोथ सहस्रशः ॥ प्राप्य पाशुपतं योगं रुद्रलोकाय संस्थिताः॥५३॥ देवादयः पिशाचांताः पशवः परिकीर्तिताः ॥ तेषां पतित्वात्सर्वेशो भवः पशुपतिः स्मृतः ॥ ५४ ॥ तेन प्रणीतो रुद्रेण पशूनां पतिना द्विजाः ॥ योगः पाशुपतो ज्ञेयः परावरविभूतये ॥ ५५ ॥ इतिश्रीलिंगमहापुराणे पूर्वभागेमनुव्यासयोगेश्वरतच्छिष्यकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥ सूत उवाच ॥ संक्षेपतः प्रवक्ष्यामि योगस्थानानि सांप्रतम् ॥ कल्पितानि शिवेनैव हिताय जगतां द्विजाः ॥१॥ गलादधो वितस्त्या यन्नाभेरुपरि चोत्तमम् ॥ योगस्थानमधोनाभेरावर्तं मध्यमं भ्रुवोः ॥ २ ॥ सर्वार्थज्ञाननिष्पत्तिरात्मनो योग उच्यते॥एकाग्रता भवेच्चैव सर्वदा तत्प्रसादतः ॥ ३ ॥

ष्टांगसाधनानां च क्रमः सर्वो निरूप्यते ॥ १ ॥ योगश्चित्तवृत्तिनिरोधः तस्य स्थानानि शिवेन परिकल्पितानि संक्षेपतः प्रवक्ष्यामीत्यन्वयः ॥ १ ॥ वितस्त्या वितस्तिपरिमाणेन यद्ग लादधः नाभेरुपरि चोत्तमं श्रेष्ठं हृत्पुण्डरीकमित्यर्थः नाभेरधः योगस्थानं मूलाधारसंज्ञं भ्रुवोर्भ्रूकुटयोः मध्ये भवं मध्यमं आवर्तं त्रिकूटसंज्ञं च जानीयादिति शेषः ॥ २ ॥ सर्वा र्थविषयकं ज्ञानं सर्वार्थज्ञानं तस्य निष्पत्तिः प्राप्तिरेवात्मनो जीवस्य योग उच्यत इत्यन्वयः॥अतएव ज्ञाने योगजधर्मरूपः संनिकर्षोऽतिरिक्तः स्वीक्रियते तदुक्तं मुक्तावल्याम् 'योगजस्तु द्वेधा प्रोक्तो युक्तयुंजानभेदतः।युक्तस्य सर्वदा भानं चिंतासहकृतोऽपरः' इति तस्यात्मनः॥३॥४॥तस्य निर्वाणाख्यतुरीयमहेशपदस्य हेतुः कारणम् ऋषेः रुद्रस्य तत्र श्रुतिः-विश्वाधियो रुद्रो महर्षिः'' इति ज्ञानमस्तीति शेषः अतस्तत्प्रसादतः ज्ञानं तारयत्यगाधसंसारसागरादिति तारकं सर्वाणि महदादीनि तत्त्वानि विषयो यस्येति सर्वविषयमिति योगसूत्रवृत्तावु

प्रसादस्य स्वरूपं यत्स्वसंवेद्यं द्विजोत्तमाः ॥ वक्तुं न शक्यं ब्रह्माद्यैः क्रमशो जायते नृणाम् ॥ ४ ॥ योगशब्देन निर्वाणं माहेशं पदमुच्यते ॥ तस्य हेतुऋंषेर्ज्ञानं ज्ञानं तस्य प्रसादतः ॥ ५ ॥ ज्ञानेन निर्दहेत्पापं निरुध्य विषयान्सदा ॥ निरुद्धेंद्रियवृत्तेस्तु योगसिद्धिर्भविष्यति ॥ ६ ॥ योगो निरोधो वृत्तेषु चित्तस्य द्विजसत्तमाः ॥ साधनान्यष्टधा चास्य कथितानीह सिद्धये ॥ ७ ॥ यमस्तु प्रथमः प्रोक्तो द्वितीयो नियमस्तथा ॥ तृतीयमासनं प्रोक्तं प्राणायामस्ततः परम् ॥ ८ ॥ प्रत्याहारः पंचमो वै धारणा च ततः परा ॥ ध्यानं सप्तममित्युक्तं समाधिस्त्वष्टमः स्मृतः ॥९॥ तपस्युपरमश्चैव यम इत्यभिधीयते ॥ अहिंसा प्रथमो हेतुर्यमस्य यमिनां वराः ॥ १० ॥ सत्यमस्तेयमपरं ब्रह्मचर्यापरिग्रहौ ॥ नियमस्यापि वै मूलं यम एव न संशयः ॥ ११ ॥ आत्मवत्सर्वभूतानां हितायैव प्रवर्तनम्॥ अहिंसैषा समाख्याता या चात्मज्ञानसिद्धिदा ॥ १२ ॥ दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः ॥ कथनं सत्यमित्युक्तं परपीडाविवर्जितम् ॥१३॥ नाश्लीलं कीर्तयेदेवं ब्राह्मणानामिति श्रुतिः ॥ परदोषान् परिज्ञाय न वदेदिति चापरम् ॥ १४ ॥ अनादानं परस्वानामापद्यपि विचारतः ॥ मनसा कर्मणा वाचा तदस्तेयं समासतः ॥ १५ ॥ मैथुनस्याप्रवृत्तिर्हि मनोवाक्कायकर्मणा ॥ ब्रह्मचर्यमिति प्रोक्तं यतीनां ब्रह्मचारिणाम् ॥ १६ ॥ इह वैखानसानां च विदाराणां विशेषतः ॥ सदाराणां गृहस्थानां तथैव च वदामि वः ॥ १७ ॥ स्वदारे विधिवत्कृत्वा निवृत्तिश्चान्यतः सदा ॥ मनसा कर्मणा वाचा ब्रह्मचर्यमिति स्मृतम् ॥ १८ ॥ मेध्यास्वनारी संभोगं कृत्वा स्नानं समाचरेत् ॥ एवं गृहस्थो युक्तात्मा ब्रह्मचारी न संशयः ॥ १९ ॥ अहिंसाप्येवमेवैषा द्विजगुर्वग्निपूजने ॥ विधिना याहशी हिंसा सात्वहिंसा इति स्मृता ॥ २० ॥ स्त्रियः सदा परित्याज्याः संगं नैव च कारयेत् ॥ कुणपेषु यथाचित्तं तथा कुर्याद्विचक्षणः ॥ २१ ॥ विण्मूत्रोत्सर्गकालेषु वहिर्भूमौ यथा मतिः ॥ तथा कार्या रतौ चापि स्वदारे चान्यतः कुतः ॥ २२ ॥ अंगारसदृशी नारी घृतकुंभसमः पुमान् ॥ तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत् ॥ २३ ॥ भोगेन तृप्तिर्नैवास्ति विषयाणां विचारतः ॥ तस्माद्विरागः कर्तव्यो मनसा कर्मणा गिरा ॥ २४ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभि वर्धते ॥ २५ ॥

क्तं तादृशं जायत इति शेषः ॥ ५ ॥ ६ ॥ [illegible] योग इत्याख्यायत इति योगवृत्तावुक्तम् ॥ ७ ॥ यमादीनां व्याख्या मूल एवाग्रे स्फुटा ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥२६॥न कर्मणेति तैत्तिरीयश्रुतेरनुवादमाह–त्यागेनेति।कर्मणा अग्निहोत्रादिसहस्रसंवत्सरसत्रांतेन प्रजया पितृविषयादृणाद्विमोचनहेतुपुत्रादिना द्रव्येण धनदानस्य बहुविधफलसाधनत्वावगमात्तद्धेतुभूतेन॥२७॥ ततो मनोवाक्कायकर्मणा रतिनिवृत्तिर्ब्रह्मचर्यं स्मृतमित्यन्वयः तदुक्तं–"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्॥संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः ॥ विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्" इति। "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" इति योगसूत्रम् ॥२८॥२९॥ अनीहादिशिवप्रणीधानांत

तस्मात्त्यागः सदा कार्यस्त्वमृतत्वाय योगिना ॥ अविरक्तो यतो मर्त्यो नानायोनिषु वर्तते ॥२६॥ त्यागेनैवामृतत्वं हि श्रुतिस्मृतिविदां वराः ॥ कर्मणा प्रजया नास्ति द्रव्येण द्विजसत्तमाः॥२७॥तस्माद्विरागः कर्तव्यो मनोवाक्कायकर्मणा॥ऋतौ ऋते निवृत्तिस्तु ब्रह्मचर्यमिति स्मृतम् ॥२८॥ यमाः संक्षेपतः प्रोक्ता नियमांश्च वदामि वः ॥ शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ॥ २९ ॥ व्रतोपवासमौनं च स्नानं च नियमा दश ॥ नियमस्यादनीहा च शौचं तुष्टिस्तपस्तथा॥ ३० ॥ जपः शिवप्रणीधानं पद्मकाद्यं तथासनम् ॥ बाह्यमाभ्यंतरं प्रोक्तं शौचमाभ्यंतरं वरम् ॥ ३१ ॥ बाह्यशौचेन युक्तः संस्तथा चाभ्यंतरं चरेत् ॥ आग्नेयं वारुणं ब्राह्मं कर्तव्यं शिवपूजकैः ॥ ३२ ॥ स्नानं विधानतः सम्यक् पश्चादाभ्यंतरं चरेत्॥ आदेहांतं मृदालिप्य तीर्थतोयेषु सर्वदा ॥ ३३ ॥ अवगाह्यापि मलिनो ह्यंतश्शौचविवर्जितः ॥ शैवला झषका मत्स्याः सत्त्वा मत्स्योपजीविनः ॥ ३४ ॥ सदावगाह्य सलिले विशुद्धाः किं द्विजोत्तमाः ॥ तस्मादाभ्यंतरं शौचं सदा कार्यं विधानतः ॥ ३५ ॥ आत्मज्ञानांभसि स्नात्वा सकृदालिप्य भावतः ॥ सुवैराग्यमृदा शुद्धः शौचमेवं प्रकीर्तितम् ॥ ३६ ॥ शुद्धस्य सिद्धयो दृष्टा नैवाशुद्धस्य सिद्धयः ॥ न्यायेनागतया वृत्त्या संतुष्टो यस्तु सुव्रतः ॥ ३७ ॥ संतोषस्तस्य सततमतीतार्थस्य चास्मृतिः ॥ चांद्रायणादिनिपुणस्तपांसि सुशुभानि च ॥ ३८ ॥ स्वाध्यायस्तु जपः प्रोक्तः प्रणवस्य त्रिधा स्मृतः ॥ वाचिकश्चाधमो मुख्य उपांशुश्चोत्तमोत्तमः ॥ ३९ ॥ मानसो विस्तरेणैव कल्पे पंचाक्षरे स्मृतः ॥ तथा शिवप्रणीधानं मनोवाक्कायकर्मणा ॥ ४० ॥

नियमः स्यादित्यन्वयः॥३०॥पद्मकाद्यं तदुक्तं योगवृत्तौ–अस्यतेनेनेत्यासनं पद्मदंडस्वस्तिकादि शौचद्वैविध्यं कथयति बाह्येत्यादिना॥३१॥आग्नेयं भस्मस्नानं वारुणमुदकस्नानं ब्राह्मं मंत्रस्नानम्॥३२॥३३॥३४॥३५॥३६॥३७॥तुष्टिं कथयति धनादिलाभे संतोषस्तु सर्वेषां जायते स तुष्टिपदवाच्यो न भवतीत्यत आह संतोषेति॥सततं निरंतरमित्यर्थः॥अनोद्यं कथयति अतीतस्य अविद्यमानस्येत्यर्थः॥३८॥३९॥ गुरोरचलाऽस्त एव सुप्रतिष्ठिता भक्तिस्तया मनोवाक्कायकर्मणा शिवः ज्ञायतेऽनेनेति शिवज्ञानं शिवोपासनं शिवः प्रणिधीयते संनिधीयतेऽननेति शिवप्रणीधानम् अत्र दीर्घश्छांदसः प्रोक्तमिति शेषमादायाग्रिमस्थैरन्वयः तथा च श्रुतिः-"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः" इति।विषयेषु प्रसक्तानींद्रियाणि आशु त्वरयापहृत्य निग्रहो नियमनं समासेन संक्षेपेण प्रत्याहारः प्रकीर्तित इत्यग्रिमेणान्वयः॥४०॥४१॥चित्तस्य स्थाने पूर्वोक्तहृदयादौ बंधो नियमनं समासतः धारणा प्रोक्तेत्यन्वयः॥४२॥तस्याः धारणायाः स्वास्थ्येन ध्यानं विचारतः समाधिश्च भवतीति शेषः।एकचित्तता ऐकाग्र्यम्।प्रत्ययांतरवर्जितं ध्यानं प्रोक्तमिति शेषः॥४३॥अयं मात्रस्य अर्थमात्र इत्यर्थः चित् चैतन्यमेव भासते यस्मिन् तत् चिद्भासं यद्वाऽर्थमात्रस्य यावदर्थस्य चिच्चैतन्यं भासतेऽनेनेति चिद्भासं भासृदीप्तावस्मात् घञ् देहाः स्थूललिंगसूक्ष्मरूपाः शून्याः लीनाः यस्मिंस्तद्देहशून्यं विदेहकैवल्यमिव अवस्थितं तुरीयाख्यावस्थानं समाधिः तदुक्तं हठदीपिकायां–"सलिले सैंधवं यद्वत् साम्यं भवति योगतः । तथात्ममनसो रैक्यं समाधिरभिधीयते ॥ तत्समं च द्वयोरैक्यं जीवात्मपरमात्मनोः ॥ प्रनष्टसर्वसंकल्पं समाधिः सोऽभिधीयते ॥" इति च परं सर्वेषां ध्यानसमाधीनां हेतुरिति प्राणायामः स्मृत

शिवज्ञानं गुरोर्भक्तिरचला सुप्रतिष्ठिता ॥ निग्रहो ह्यपहृत्याशु प्रसक्तानींद्रियाणि च ॥ ४१ ॥ विषयेषु समासेन प्रत्याहारः प्रकीर्तितः ॥ चित्तस्य धारणा प्रोक्ता स्थानबंधः समासतः ॥४२॥ तस्याः स्वास्थ्येन ध्यानं च समाधिश्च विचारतः ॥ तत्रैकचित्तता ध्यानं प्रत्ययांतरवर्जितम् ॥४३॥ चिद्भासमर्थमात्रस्य देहशून्यमिव स्थितम् ॥ समाधिः सर्वहेतुश्च प्राणायाम इति स्मृतः ॥ ४४ ॥ प्राणः स्वदेहजो वायुर्यमस्तस्य निरोधनम् ॥ त्रिधा द्विजैर्यमः प्रोक्तो मंदो मध्योत्तमस्तथा ॥ ४५ ॥ प्राणापाननिरोधस्तु प्राणायामः प्रकीर्तितः ॥ प्राणायामस्य मानं तु मात्राद्वादशकं स्मृतम् ॥ ४६ ॥ नीचो द्वादशमात्रस्तु उद्घातो द्वादशः स्मृतः ॥ मध्यमस्तु द्विरुद्घातश्चतुर्विंशति मात्रकः ॥ ४७ ॥ मुख्यस्तु यस्त्रिरुद्घातः षट्त्रिंशन्मात्र उच्यते ॥ प्रस्वेदकंपनोत्थानजनकश्च यथाक्रमम् ॥ ४८ ॥ आनंदोद्भवयोगार्थं निद्राघूर्णिस्तथैव च ॥ रोमांचध्वनिसंविद्धस्वांगमोटनकंपनम् ॥ ४९ ॥ भ्रमणं स्वेदजं न्यासासंविन्मूर्छा भवेद्यदा ॥ तदोत्तमोत्तमः प्रोक्तः प्राणायामः सुशोभनः ॥ ५० ॥

इत्यन्वयः ॥ ४४ ॥ ४५ ॥ ४६ ॥ द्वादशमात्र उद्घातो नीचो नाम पूर्वोक्तमंदसंज्ञः द्वादशः द्वादशमात्रकः स्मृत इत्यन्वयः तदुक्तं मार्कंडेयपुराणे–"निमिषोन्मेषणे मात्रा ततो लघ्वक्षरे तथा । प्राणायामस्य संख्यार्थः स्मृतो द्वादशमात्रकः" इति॥४७॥यथाक्रमं नीचमध्यमुख्यक्रमेण स्वेदकंपनोत्थानजनकः भवतीति शेषः॥४८॥आनन्दस्य उद्भवः प्रादुर्भावो यस्मिन्नसौ आनन्दोद्भवश्चासौ योगश्च आनन्दोद्भवयोगस्तदर्थं तत्प्राप्त्य इत्यर्थः निद्रावघूर्णिः घूर्णनमनेन भस्त्राख्यः कुंभकः सूचितः रोमांचाः पुलकाः ध्वनयो भ्रमरगुंजारवाः तैः संविद्धं व्याप्तं यत्स्वांगस्य मोटनमासनबंधादौ मोडनं तथा कंपनमानंदेनांदोलनमनेन भ्रामरीसंज्ञकः कुंभकः सूचितः ॥ ४९ ॥ स्वेदः प्राणायामायासाद्धर्मः तज्जन्या सा पूर्वोक्तसमाधिसंज्ञा संविद्रूपा मूर्च्छा संविन्मूर्च्छा अनेन मूर्च्छाख्यः कुंभकः सूचितः भ्राम्यति जले स्थलवत्संचरत्यनेन भ्रमणमनेन प्लावनीसंज्ञकः कुंभकः सूचितः यदा पूर्वोक्तलक्षणः सुशोभनः प्राणायामो भवेत्तदोत्तमोत्तमः प्रोक्त इत्यन्वयः उक्तप्राणायामभेदास्तु हठदीपिकायामुक्ताः "सूर्यभेदनमुज्जायी सीत्कारी शीतली तथा ॥ भस्त्रिका भ्रामरी मूर्छा प्लावनीत्यष्ट कुंभकाः" इति एतल्लक्षणानि तत्र ज्ञेयानि ॥ ५० ॥ सगर्भः पूरकरेचकसहितोऽगर्भः केवलः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ नैव जायते तस्य नोत्पद्यत इत्यर्थः ॥ ५५ ॥ ५६ ॥ ५७ ॥

सगर्भो गर्भ इत्युक्तः सजपो विजपः क्रमात् ॥ इभो वा शरभो वापि दुराधर्षोऽथ केसरी॥५१॥ गृहीतो दम्यमानस्तु यथास्वस्थस्तु जायते ॥ तथा समीरणोऽस्वस्थो दुराधर्षश्च योगिनाम् ॥ ५२ ॥ न्यायतः सेव्यमानस्तु स एवं स्वस्थतां व्रजेत ॥ यथैव मृगराड् नागः शरभो वापि दुर्मदः ॥ ॥ ५३ ॥ कालांतरवशाद्योगाद्दम्यते परमादरात् ॥ तथा परिचयात्स्वास्थ्यं समत्वं चाधिगच्छति ॥ ५४ ॥ योगादभ्यसते यस्तु व्यसनं नैव जायते ॥ एवमभ्यस्यमानस्तु मुनेः प्राणो विनिर्दहेत ॥ ५५ ॥ मनोवाक्कायजान् दोषान् कर्तुर्देहं च रक्षति ॥ संयुक्तस्य तथा सम्यक्प्राणायामेन धीमतः ॥ ५६ ॥ दोषात्तस्माच्च नश्यंति निश्वासस्तेन जीर्यते ॥ प्राणायामेन सिध्यंति दिव्याः शांत्यादयः क्रमात् ॥ ५७ ॥ शांतिः प्रशांतिर्दीप्तिश्च प्रसादश्च तथाक्रमात्॥आदौ चतुष्टयस्येह प्रोक्ता शांतिरिह द्विजाः ॥५८॥ सहजागंतुकानां च पापानां शांतिरुच्यते ॥ प्रशांतिः संयमः सम्यग्वचसामिति संस्मृता ॥ ५९ ॥ प्रकाशो दीप्तिरित्युक्तः सर्वतः सर्वदा द्विजाः ॥ सर्वेंद्रियप्रसादस्तु बुद्धेर्वै मरुतामपि ॥६०॥ प्रसाद इति संप्रोक्तः स्वांतेतिवह चतुष्टये ॥ प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ ६१ ॥ नागः कूर्मस्तु कृकलो देवदत्तो धनंजयः ॥ एतेषां यः प्रसादस्तु मरुतामिति संस्मृतः ॥ ६२ ॥ प्रयाणं कुरुते तस्माद्वायुः प्राण इति स्मृतः ॥ अपानयत्यपानस्तु आहारादीनक्रमेण च ॥ ६३ ॥ व्यानो व्यानामयत्यंगं व्याध्यादीनां प्रकोपकः ॥ उद्वेजयति मर्माणि उदानोऽयं प्रकीर्तितः ॥ ६४ ॥ समं नयति गात्राणि समानः पंच वायवः ॥ उद्गारे नाग आख्यातः कूर्म उन्मीलने तु सः ॥ ६५ ॥ कृकलः क्षुतकायैव देवदत्तो विजृंभणे ॥ धनंजयो महाघोषः सर्वगः स मृतेऽपि हि ॥ ६६ ॥ इति यो दशवायूनां प्राणायामेन सिध्यति ॥ प्रसादोऽस्य तुरीया तु संज्ञा विप्राश्चतुष्टये ॥ ६७ ॥ विस्वरस्तु महान् प्रज्ञा मनो ब्रह्मा चितिः स्मृतिः ॥ ख्यातिः संवित्ततः पश्चादीश्वरो मतिरेव च ॥ ६८ ॥

॥ ५८ ॥ वचसां भाषणानां सम्यग्यथाशास्त्रं संयमः प्रशांतिः संस्मृतेत्यन्वयः तदुक्तं भारते–"अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम् ॥ धर्मं वदेद्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थम्" इति ॥ ५९ ॥ ६० ॥ इह चतुष्टये शांत्यादिचतुष्टये ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ विगतः स्वर उपतापो यस्मादसौ विस्वर

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विरुद्धद्वंद्वोपतापशून्य इत्यर्थः ॥ ६८ ॥ महतः महत्तत्वरूपायाः बुद्धिरेताः पूर्वोक्ताः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ योगीश्वरान् सशिष्यान् सप्तमाध्यायोक्तान् ॥८६॥ स्वस्तिकं स्वस्तिकसंज्ञमेवं पद्ममर्धासनं सिद्धासनं तदुक्तं दीपिकायाम् "जानूर्वोरंतरे सम्यक् कृत्वा पादतले उभे ॥ ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चि

बुद्धेरेता द्विजाः संज्ञा महतः परिकीर्तिताः ॥ अस्या बुद्धेः प्रसादस्तु प्राणायामेन सिद्धयति ॥ ६९ ॥ विस्वरो विस्वरीभावो द्वंद्वानां मुनिसत्तमाः ॥ अग्रजः सर्वतत्त्वानां महान्यः परिमाणतः ॥ ७० ॥ यत्प्रमाणगुहा प्रज्ञा मनस्तु मनुते यतः ॥ बृहत्वाद्बृंहणत्वाच्च ब्रह्मा ब्रह्मविदां वराः ॥ ७१ ॥ सर्वकर्माणि भोगार्थं यच्चिनोति चितिः स्मृता ॥ स्मरते यत्स्मृतिः सर्वं संविद्वै विंदते यतः ॥ ७२ ॥ ख्यायते यत्त्विति ख्यातिर्ज्ञानादिभिरनेकशः ॥ सर्वतत्त्वाधिपः सर्वं विजानाति यदीश्वरः ॥ ७३ ॥ मनुते मन्यते यस्मान्मतिर्मतिमतां वराः ॥ अर्थं बोधयते यच्च बुद्धयते बुद्धिरुच्यते ॥ ७४ ॥ अस्या बुद्धेः प्रसादस्तु प्राणायामेन सिद्धयति ॥ दोषान्विनिर्दहेत्सर्वान् प्राणायामादसौ यमी ॥ ७५ ॥ पातकं धारणाभिस्तु प्रत्याहारेण निर्दहेत् ॥ विषयान्विषवद्ध्यात्वा ध्यानेनानीश्वरान् गुणान् ॥ ७६ ॥ समाधिना यतिश्रेष्ठाः प्रज्ञावृद्धिं विवर्धयेत् ॥ स्थानं लब्ध्वैव कुर्वीत योगाष्टांगानि वै क्रमात् ॥७७॥ लब्ध्वासनानि विधिवद्योगसिद्धयर्थमात्मवित् ॥ अदेशकाले योगस्य दर्शनं हि न विद्यते ॥७८॥ अग्न्यभ्यासे जले वापि शुष्कपर्णचये तथा ॥ जंतुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ॥ ७९ ॥ सशब्दे सभये वापि चैत्यवल्मीकसंचये ॥ अशुभे दुर्जनाक्रांते मशकादिसमन्विते ॥ ८० ॥ नाचरेद्देहबाधायां दौर्मनस्यादिसंभवे ॥ सुगुप्ते तु शुभे रम्ये गुहायां पर्वतस्य तु ॥८१॥ भवक्षेत्रे सुगुप्ते वा भवारामे वने पि वा ॥ गृहे तु सुशुभे देशे विजने जंतुवर्जिते ॥ ८२ ॥ अत्यंतनिर्मले सम्यक्सुप्रलिप्ते विचित्रिते ॥ दर्पणोदरसंकाशे कृष्णागरुसुधूपिते ॥ ८३ ॥ नानापुष्पसमाकीर्णे वितानोपरि शोभिते ॥ फलपल्लवमूलाढ्येकुशपुष्पसमन्विते ॥ ८४ ॥ समासनस्थो योगांगान्यभ्यसेद्धृपितः स्वयम् ॥ प्रणिपत्य गुरुं पश्चाद्भवं देवीं विनायकम् ॥ ८५ ॥ योगीश्वरान् सशिष्यांश्च योगं युंजीत योगवित् ॥ आसनं स्वस्तिकं वद्धा पद्ममर्धासनं तु वा ॥ ८६ ॥ समजानुस्तथाधीमानेकजानुरथापिवा ॥ समं दृढासनो भूत्वा संहृत्य चरणावुभौ ॥ ८७ ॥

मेन विधिना धृत्वा कराभ्यां दृढम् ॥ अंगुष्ठौ हृदये निधाय चुबुकं नासाग्रमालोकयेदेतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते " मतांतरे उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः ॥ ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ ॥ नासाग्रे विन्यसेद्राजदंतमूले तु जिह्वया ॥ उत्तंभ्य चुबुकं वक्षस्युत्थाप्य पवनं शनैः ॥ इदं पद्मासनं प्रोक्तं सर्वव्याधिप्रणाशनम् ॥" अत्र राजदंतमूले दंष्ट्रामूल इति ब्रह्मानंदमेरुशास्त्रिकृतटीकायामुक्तम् "योनिस्थानकमंघ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा हनुं सुस्थिरम् ॥ स्थाणुः संयमितेंद्रियो चलदृशा पश्येद्भ्रुवोरंतरं ह्येतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते" इति तत्रैकजानुनैवास्थितत्वादर्धासनसंज्ञा ज्ञेया ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ नाभेरधस्तात्त्र्यंगुले कमलं ध्यात्वेत्यन्वयः ॥ ९२ ॥ ९३ ॥ धर्मादीनां चतुष्टयं धर्मज्ञानवैराग्यैश्वर्यरूपम् ॥ ९४ ॥ स्वशक्त्या उमया ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

संवृतास्योपवद्धाक्ष उरो विष्टभ्य चाग्रतः ॥ पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥ ८८ ॥ किंचिदुन्नामितशिरा दंतैर्दंतान्न संस्पृशेत् ॥ संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ८९ ॥ तमः प्रच्छाद्य रजसा रजः सत्त्वेन छादयेत् ॥ ततः सत्त्वस्थितो भूत्वा शिवध्यानं समभ्यसेत् ॥ ९० ॥ ॐकारवाच्यं परमं शुद्धं दीपशिखाकृतिम् ॥ ध्यायेद्वै पुंडरीकस्य कर्णिकायां समाहितः ॥ ९१ ॥ नाभेरधस्ताद्वा विद्वान् ध्यात्वा कमलमुत्तमम् ॥ त्र्यंगुले चाष्टकोणं वा पंचकोणमथापि वा ॥ ९२ ॥ त्रिकोणं च तथाग्नेयं सौम्यं सौरं स्वशक्तिभिः ॥ सौरं सौम्यं तथाग्नेयमथ वा नुक्रमेण तु ॥ ९३ ॥ आग्नेयं च ततः सौरं सौम्यमेवं विधानतः ॥ अग्नेरधः प्रकल्प्यैवं धर्मादीनां चतुष्टयम् ॥ ९४ ॥ गुणत्रयं क्रमेणैव मंडलोपरि भावयेत् ॥ सत्त्वस्थं चिंतयेद्रुद्रं स्वशक्त्या परिमंडितम् ॥ ९५ ॥ नाभौ वाथ गले वापि भ्रूमध्ये वा यथाविधि ॥ ललाटफलिकायां वा मूर्ध्नि ध्यानं समाचरेत् ॥ ९६ ॥ द्विदले षोडशारे वा द्वादशारे क्रमेण तु ॥ दशारे वा षडस्रे वा चतुरस्रे स्मरेच्छिवम् ॥ ९७ ॥ कनकाभे तथांगारसन्निभे सुसितेऽपि वा ॥ द्वादशादित्यसंकाशे चंद्रबिंबसमेऽपि वा ॥९८॥ विद्युत्कोटिनिभे स्थाने चिंतयेत्परमेश्वरम् ॥ अग्निवर्णेऽथ वा विद्युद्वलयाभे समाहितः ॥ ९९ ॥ वज्रकोटिप्रभे स्थाने पद्मरागनिभेऽपि वा ॥ नीललोहितबिंबे वा योगी ध्यानं समभ्यसेत् ॥ १०० ॥ महेश्वरं हृदि ध्यायेन्नाभिपद्मे सदाशिवम् ॥ चंद्रचूडं ललाटे तु भ्रूमध्ये शंकरं स्वयम् ॥ १०१ ॥ दिव्ये च शाश्वतस्थाने शिवध्यानं समभ्यसेत् ॥ निर्मलं निष्कलं ब्रह्म सुशांतं ज्ञानरूपिणम् ॥ १०२ ॥

नीललोहितबिंबे सूर्यबिंबे तथा च श्रुतिः—"असौ योऽवसर्पति नीलग्रीवो विलोहितः" अस्यार्थोऽहोबलेनोक्तः "असावादित्यसंविष्टो महारुद्रोऽवसर्पति" लोकानां शिक्षणार्थं प्रवर्तते "यदावसर्पति श्रीमानुदयास्तमयादिकम् ॥ संपादयितुमेवायमसौ रुद्रः प्रवर्तते ॥ नीलग्रीवः कालकंठो नीलग्रीवो विलोहितः ॥ ज्वलत्कल्पावसानाग्निसमूहप्रतिमप्रभः" इति ॥ १०० ॥ १०१ ॥ शाश्वतस्थाने मूर्ध्नि ॥ १०२ ॥

॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ कं मस्तकं न्यस्यतेऽनेन कन्यसः पत्रयं कः कमित्यव्ययं " सुखशीर्षजलेषु कम् " इति विश्वः ॥ मार्गः सुषुम्नानाडीरूपः तदुक्तं शिवगीतायाम् " अनंतेकोर्ध्वगा नाडी मूर्द्धपर्यंतमंजसा ॥ सुषुम्नेति समादिष्टा तया गच्छन्विमुच्यते " इति उद्घातेन द्वादशमात्रककुंभकेन ॥ १०९ ॥ मध्यमेन चतुर्विंशतिमात्रकेण उत्तमेन षट्त्रिंशन्मात्रकेण ॥ ११० ॥ रेचकं पूरकं त्यक्त्वा कुंभकं केवलकुंभकं कृत्वेति शेषः देहमध्ये समरसेनैव शिवं स्मरेदित्यग्रिमेणान्वयः केवलकुंभकमाहात्म्यं हठदीपिकायामुक्तम् " कुंभके केवले सिद्धे रेचपूरकवर्जिते ॥ न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते " इति ॥ १११ ॥

अलक्षणमनिर्देश्यमणोरल्पतरं शुभम् ॥ निरालंबमतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥१०३॥ कैवल्यं चैव निर्वाणं निःश्रेयसमनूपमम् ॥ अमृतं चाक्षरं ब्रह्म ह्यपुनर्भवमद्भुतम् ॥१०४॥ महानंदं परानंदं योगानंदमनामयम् ॥ हेयोपादेयरहितं सूक्ष्मात्सूक्ष्मतरं शिवम् ॥१०५॥ स्वयंवेद्यमवेद्यं तच्छिवं ज्ञानमयं परम् ॥ अतींद्रियमनाभासं परं तत्त्वं परात्परम् ॥ १०६ ॥ सर्वोपाधिविनिर्मुक्तं ध्यानगम्यं विचारतः ॥ अद्वयं तमसश्चैव परस्तात्संस्थितं परम् ॥ १०७ ॥ मनस्येवं महादेवं हृत्पद्मे वापि चिंतयेत् ॥ नाभौ सदाशिवं चापि सर्वदेवात्मकं विभुम् ॥१०८॥ देहमध्ये शिवं देवं शुद्धज्ञानमयं विभुम् ॥ कन्यसेनैव मार्गेण चोद्घातेनापि शंकरम् ॥ १०९ ॥ क्रमशः कन्यसेनैव मध्यमेनापि सुव्रतः ॥ उत्तमेनापि वै विद्वान् कुंभकेन समभ्यसेत् ॥ ११० ॥ द्वात्रिंशद्रेचयेद्धीमान् हृदि नाभौ समाहितः ॥ रेचकं पूरकं त्यक्त्वा कुंभकं च द्विजोत्तमाः ॥१११॥ साक्षात्समरसेनैव देहमध्ये स्मरेच्छिवम् ॥ एकीभावं समेत्यैवं तत्र यद्रससंभवम् ॥ ११२ ॥ आनंदं ब्रह्मणो विद्वान् साक्षात्समरसे स्थितः ॥ धारणा द्वादशायामा ध्यानं द्वादश धारणम् ॥ ११३ ॥ ध्यानं द्वादशकं यावत्समाधिरभिधीयते ॥ अथवा ज्ञानिनां विप्राः संपर्कादेव जायते ॥ ११४ ॥ प्रयत्नाद्वा तयोस्तुल्यं चिराद्वा ह्यचिराद्द्विजाः ॥ योगांतरायास्तस्याथ जायंते युंजतः पुनः ॥ ११५ ॥ नश्यंत्यभ्यासतस्तेऽपि प्रणिधानेन वै गुरोः ॥ ११६ ॥ इति श्रीलिंगे महापुराणे पूर्वभागेऽष्टांगयोगनिरूपणं नामाऽष्टमोध्यायः ॥ ८ ॥ सूत उवाच ॥ आलस्यं प्रथमं पश्चाद्व्याधिपिडा प्रजायते ॥ प्रमादः संशयस्थाने चित्तस्येहानवस्थितिः ॥ १ ॥

॥ ११२ ॥ द्वादश आयामाः प्राणायामा यस्यां भवंति सा धारणा अभिधीयत इत्यग्रिमेणान्वयः ॥ ११३ ॥ ज्ञानिनां संपर्कात् समागमादेवेत्यर्थः ॥ ११४ ॥ प्रयत्नादभ्यासात् अचिरात्स्वल्पकालेन चिराद्बहुकालेन पूर्वजन्माभ्यासिनोऽचिरान्नवीनाभ्यासिनश्चिरादित्यर्थः ॥ ११५ ॥ गुरोः प्रणिधानात्संनिधानादित्यर्थः ॥ ११६ ॥ मुनिमनोलिनिपेवितं सदा सुरतरुं भगवंतमाश्रये ॥ गिरिजवल्लिसमावृतं शिवं सरसभक्तफलैरलंकृतम् ॥ १ ॥ इति श्रीलिंगे महापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टमोऽध्यायः समाप्तः ॥८॥ नवमे योगिनां विघ्नाद्युपसर्गांश्च सिद्धयः ॥ अष्टाष्टविधमैश्वर्यं योगप्रेप्सं निरूप्यते ॥ १ ॥ योगाभ्यासविघ्नान्याह—आलस्यमिति । एतद्व्याख्यानमग्रे मूल एवोच्यते ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ २ ॥ कायचित्तयोर्गुरुत्वादप्रवृत्तिरेवालस्यमित्यर्थः ॥३॥४॥५॥६॥७॥ आध्यात्मिकं शारीरमानसं तदुक्तं विष्णुपुराणे "आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा" इति। आधिभौतिकमन्यप्राणिकृतम् ॥८॥ आधिदैविकं शीतोष्णादिजन्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ उपसर्गाः समाधौ उपद्रवाः असिद्धिसूचकाः व्युत्थाने सिद्धिरूपाः तदुक्तं

अश्रद्धादर्शनं भ्रांतिर्दुःखं च त्रिविधं ततः ॥ दौर्मनस्यमयोग्येषु विषयेषु च योगता ॥ २ ॥ दशधाभिप्रजायंते मुनेर्योगांतरायकाः ॥ आलस्यं चाप्रवृत्तिश्च गुरुत्वात्कायचित्तयोः ॥ ३ ॥ व्याधयो धातुवैषम्यात् कर्मजा दोषजास्तथा ॥ प्रमादस्तु समाधेस्तु साधनानामभावनम् ॥ ४ ॥ इदं वेत्युभयस्पृक्तं विज्ञानं स्थानसंशयः ॥ अनवस्थितचित्तत्वमप्रतिष्ठा हि योगिनः ॥ ५ ॥ लब्धायामपि भूमौ च चित्तस्य भवबंधनात् ॥ ॥ अश्रद्धाभावरहिता वृत्तिर्वै साधनेषु च ॥ ६ ॥ साध्ये चित्तस्य हि गुरौ ज्ञानाचारशिवादिषु ॥ विपर्ययज्ञानमिति भ्रांतिदर्शनमुच्यते ॥ ७ ॥ अनात्मन्यात्मविज्ञानमज्ञानात्तस्य संनिधौ ॥ दुःखमाध्यात्मिकं प्रोक्तं तथा चैवाधिभौतिकम् ॥ ८ ॥ आधिदैविकमित्युक्तं त्रिविधं सहजं पुनः ॥ इच्छाविघातात्संक्षोभश्चेतसस्तदुदाहृतम् ॥९॥ दौर्मनस्यं निरोद्धव्यं वैराग्येण परेण तु ॥ तमसा रजसा चैव संस्पृष्टं दुर्मनः स्मृतम् ॥ १० ॥ तदा मनसि संजातं दौर्मनस्यमिति स्मृतम् ॥ हठात्स्वीकरणं कृत्वा योग्यायोग्यविवेकतः ॥ ११ ॥ विषयेषु विचित्रेषु जंतोर्विषयलोलता ॥ अंतराया इति ख्याता योगस्यैते हि योगिनाम् ॥ १२ ॥ अत्यंतोत्साहयुक्तस्य नश्यंति न च संशयः ॥ प्रनष्टेष्वंतरायेषु द्विजाः पश्चाद्धि योगिनः ॥ १३ ॥ उपसर्गाः प्रवर्तंते सर्वे तेऽसिद्धिसूचकाः ॥ प्रतिभा प्रथमा सिद्धिर्द्वितीया श्रवणा स्मृता ॥ १४ ॥ वार्ता तृतीया विप्रेंद्रास्तुरीया चेह दर्शना ॥ आस्वादा पंचमी प्रोक्ता वेदना षष्ठिका स्मृता ॥ १५ ॥ स्वल्पषट्सिद्धिसंत्यागात्सिद्धिदाः सिद्धयो मुनेः ॥ प्रतिभा प्रतिभावृत्तिः प्रतिभाव इति स्थितिः ॥ १६ ॥ बुद्धिर्विवेचना वेद्यं बुद्ध्यते बुद्धिरुच्यते ॥ सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते ॥ १७ ॥ सर्वत्र सर्वदा ज्ञानं प्रतिभानुक्रमेण तु ॥ श्रवणात्सर्वशब्दानामप्रयत्नेन योगिनः ॥ १८ ॥ ह्रस्वदीर्घप्लुतादीनां गुह्यानां श्रवणादपि ॥ स्पर्शस्याधिगमो यस्तु वेदना तूपपादिता ॥ १९ ॥ दर्शनाद्दिव्यरूपाणां दर्शनं चाप्रयत्नतः ॥ संविद्दिव्यरसे तस्मिन्नास्वादो ह्यप्रयत्नतः ॥ २० ॥

योगसूत्रे "ततः प्रातिभश्रावणवेदनादर्शनास्वादवार्ता जायंते" "ते समाधावुपसर्गा व्युत्थाने सिद्धयः" इति ॥ १४ ॥ १५ ॥ स्वल्पषट्सिद्धिसंत्यागात्पूर्वोक्तसिद्धित्यागात्सिद्धयोऽणिमादयः मुनेर्मननशीलस्येत्यनेन भोगव्यावृत्तस्येति सूचितम्। सिद्धिदाः भवंतीति शेषः। प्रतिभादिसिद्धीर्विवृणोति प्रतिभेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

तस्माद्योगजयभंगरूपसंसर्गेण योगिनः अस्मिन् जगति आब्रह्मभुवनं ब्रह्मलोकमभिव्याप्य देहस्थं स्वदेहे विद्यमानं विंदंते जानंतीत्यर्थः ॥२१॥ औपसर्गिकं नाधिकं चतुःषष्टिगुणं तत्संख्याकगुणयुक्तं समं सर्वम् एतेषु वक्ष्यमाणेषु गुणेषु गुणितं ग्रथितमात्मनः सच्चिदानंदरूपस्य सर्वमौपसर्गिकं दुःखप्रयोजकं सर्वथा सर्वप्रकारेण संत्याज्यमित्यत्रिमेणान्वयः ॥२२॥ आप्यमुदकमयम् ॥२३॥२४॥ बोधं ज्ञानरूपम्। आद्ये पार्थिवे अष्टौ अष्टगुणाः ॥२५॥२६॥ एतत् पूर्वोक्तं पंच विस्तृतं पंच विस्तारयचनेऽस्माद्वन् ॥२७॥ चतुःषष्टिगुणं ब्राह्मं ब्रह्मण ऐश्वर्यं

वार्ता च दिव्यगंधानां तन्मात्रा बुद्धिसंविदा ॥ विंदंते योगिनस्तस्मादाब्रह्मभवनं द्विजाः ॥ २१ ॥ जगत्यस्मिन्हि देहस्थं चतुःषष्टिगुणं समम् ॥ औपसर्गिकमेतेषु गुणेषु गुणितं द्विजाः ॥ २२ ॥ संत्याज्यं सर्वथा सर्वमौपसर्गिकमात्मनः ॥ पैशाचे पार्थिवं चाप्यं राक्षसानां पुरे द्विजाः ॥ २३ ॥ याक्षे तु तैजसं प्रोक्तं गांधर्वे श्वसनात्मकम् ॥ ऐन्द्रे व्योमात्मकं सर्वं सौम्ये चैव तु मानसम् ॥ २४ ॥ प्राजापत्ये त्वहंकारं ब्राह्मे बोधमनुत्तमम् ॥ आद्ये चाष्टौ द्वितीये च तथा षोडशरूपकम् ॥ २५ ॥ चतुर्विंशत्तृतीये तु द्वात्रिंशच्च चतुर्थके ॥ चत्वारिंशत् पंचमे तु भूतमात्रात्मकं स्मृतम् ॥ २६ ॥ गंधो रसस्तथा रूपं शब्दः स्पर्शस्तथैव च ॥ प्रत्येकमष्टधा सिद्धं पंचमे तच्छतक्रतोः ॥२७॥ तथाष्टचत्वारिंशच्च षट्पंचाशत्तथैव च ॥ चतुःषष्टिगुणं ब्राह्मं लभते द्विजसत्तमाः ॥ २८ ॥ औपसर्गिकमाब्रह्मभुवनेषु परित्यजेत ॥ लोकेष्वालोक्य योगेन योगवित्परमं सुखम् ॥ २९ ॥ स्थूलता ह्रस्वता बाल्यं वार्धक्यं यौवनं तथा ॥ नानाजातिस्वरूपं च चतुर्भिर्देहधारणम् ॥ ३० ॥ पार्थिवांशं विना नित्यं सुरभिर्गंधसंयुतः ॥ एतदष्टगुणं प्रोक्तमैश्वर्यं पार्थिवं महत् ॥ ३१ ॥ जले निवसनं यद्वद्भूम्यामिव विनिर्गमः ॥ इच्छेच्छक्तः स्वयं पातुं समुद्रमपिनातुरः ॥ ३२ ॥ यत्रेच्छति जगत्यस्मिंस्तत्रास्य जलदर्शनम् ॥ यद्यद्वस्तु समादाय भोक्तुमिच्छति कामतः ॥ ३३ ॥ तत्तद्रसान्वितं तस्य त्रयाणां देहधारणम् ॥ भांडं विनाथ हस्तेन जलपिंडस्य धारणम् ॥३४॥ अव्रणत्वं शरीरस्य पार्थिवेन समन्वितम् ॥ एतत् षोडशकं प्रोक्तमाप्यमैश्वर्यमुत्तमम् ॥ ३५ ॥ देहादग्निविनिर्माणं तत्तापभयवर्जितम् ॥ लोकं दग्धमपीहान्यददग्धं स्वविधानतः ॥ ३६ ॥ जलमध्ये हुतवहं चाधाय परिरक्षणम् ॥ अग्निनिग्रहणं हस्ते स्मृतिमात्रेण चागमः ॥३७॥ भस्मीभूतविनिर्माणं यथापूर्वं सकामतः ॥ द्वाभ्यां रूपविनिष्पत्तिर्विना तैस्त्रिभिरात्मनः ॥३८॥ चतुर्विंशात्मकं ह्येतत्तैजसं मुनिपुंगवाः ॥ मनोगतित्वं भूतानामंतर्निवसनं तथा ॥ ३९ ॥

लभते प्राप्नोतीत्यर्थः ॥२८॥ आब्रह्मभुवनेषु लोकेषु योगेन औपसर्गिकमालोक्य विचार्य यः परित्यजेत्स योगवित्परमं निरवधिकं सुखं प्राप्नोतीति शेषः ॥२९॥ पार्थिवाद्यष्टगुणान्यैश्वर्याणि रूपयति स्थूलतेत्यादिना अग्रिमस्य पार्थिवांशं विना चतुर्भिर्देहधारणमित्यन्वयः ॥ ३० ॥ नित्यं गंधसंयुतः अत एव "सुरभिर्घ्राणतर्पणः" इत्यमरः ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ दग्धमपि लोकं स्वविधानतः योगैश्वर्येण अन्यददग्धं दाहशून्यं करोतीति शेषः ॥ ३६ ॥ ३७ ॥ द्वाभ्यां वाय्वाकाशाभ्यां रूपस्य देहस्य ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ एतैः पंचविधैश्वर्यैः पुराणि शरीराणि आतनोति उत्पादयतीति पुरातनः मूलविभुजादित्वात्कः कायव्यूहसामर्थ्यवानित्यर्थः उक्तः परिभाषितः ॥४४॥४५॥४६॥ प्राजापत्यं दक्षादिप्रजापतिसंबंधि ॥ ४७ ॥ ४८ ॥ ४९ ॥ एतावतः ब्राह्मैश्वर्यस्य तत्त्वं मुख्यकारणमिति हेतोः प्राधान्यं प्रधानसंबंधि वैष्णवं पदमैश्वर्यम् उक्तं परिभाषितं तस्य प्रधानस्य गुणाः यस्मिंस्तत्तद्गुणं ब्रह्मणा वेत्तुं ज्ञातुं शक्यमन्यैर्न शक्यत इत्यन्वयः अतएव तैत्तिरीयब्रह्मविदोपनिषदि अकामहतस्य श्रोत्रियस्य निष्कामवेदोक्तकर्मकारिणः मानुषानंदमारभ्य ब्रह्मण आनंदपर्यंतमेव प्राप्तिरुक्ता ॥५०॥ परं सर्वोत्कृष्टं शैवं शिवसंबंध्यैश्वर्यं विद्यते सर्वदा वर्तमानं त्रिकालानवच्छिन्नत्वात्तद् प्रतिपाद्यमेवेत्यर्थः तदेवोक्तं

पर्वतादिमहाभारस्कंधेनोद्वहनं पुनः ॥ लघुत्वं च गुरुत्वं च पाणिभ्यां वायुधारणम् ॥ ४० ॥ अंगुल्यग्रनिघातेन भूमेः सर्वत्र कंपनम् ॥ एकेन देहनिष्पत्तिर्वातैश्वर्यं स्मृतं बुधैः ॥ ४१ ॥ छायाविहीननिष्पत्तिरिंद्रियाणां च दर्शनम् ॥ आकाशगमनं नित्यमिंद्रियार्थैः समन्वितम् ॥ ४२ ॥ दूरे च शब्दग्रहणं सर्वशब्दावगाहनम् ॥ तन्मात्रलिंगग्रहणं सर्वप्राणिनिदर्शनम् ॥ ४३ ॥ ऐंद्रमैश्वर्यमित्युक्तमेतैरुक्तः पुरातनः ॥ यथाकामोपलब्धिश्च यथाकामविनिर्गमः ॥ ४४ ॥ सर्वत्राभिभवश्चैव सर्वगुह्यनिदर्शनम् ॥ कामानुरूपनिर्माणं वशित्वं प्रियदर्शनम् ॥ ४५ ॥ संसारदर्शनं चैव मानसं गुणलक्षणम् ॥ छेदनं ताडनं बंधं संसारपरिवर्तनम् ॥ ४६ ॥ सर्वभूतप्रसादश्च मृत्युकालजयस्तथा ॥ प्राजापत्यमिदं प्रोक्तमाहंकारिकमुत्तमम् ॥ ४७ ॥ अकारणजगत्सृष्टिस्तथानुग्रह एव च ॥ प्रलयश्चाधिकारश्च लोकवृत्तप्रवर्तनम् ॥ ४८ ॥ असादृश्यमिदं व्यक्तं निर्माणं च पृथक्पृथक् ॥ संसारस्य च कर्तृत्वं ब्राह्ममेतदनुत्तमम् ॥४९॥ एतावत्तत्त्वमित्युक्तं प्राधान्यं वैष्णवं पदम् ॥ ब्रह्मणा तद्गुणं शक्यं वेत्तुमन्यैर्न शक्यते ॥ ५० ॥ विद्यते तत्परं शैवं विष्णुना नावगम्यते ॥ असंख्येयगुणं शुद्धं को जानीयाच्छिवात्मकम् ॥ ५१ ॥ व्युत्थाने सिद्धयश्चैता ह्युपसर्गाश्च कीर्तिताः ॥ निरोद्धव्याः प्रयत्नेन वैराग्येण परेण तु ॥ ५२ ॥ नाशातिशयतां ज्ञात्वा विषयेषु भयेषु च ॥ अश्रद्धयात्यजेत्सर्वं विरक्त इति कीर्तितः ॥ ५३ ॥ वैतृष्ण्यं पुरुषे स्यातं गुणवैतृष्ण्यमुच्यते ॥ वैराग्येणैव संत्याज्याः सिद्धयश्चौपसर्गिकाः ॥५४॥ औपसर्गिकमाब्रह्म भुवनेषु परित्यजेत ॥ निरुद्ध्यैव त्यजेत्सर्वं प्रसीदति महेश्वरः ॥ ५५ ॥ प्रसन्ने विमला मुक्तिर्वैराग्येण परेण वै ॥ अथवानुग्रहार्थं च लीलार्थं वा तदा मुनिः ॥ ५६ ॥

सुंदरलहर्यामाचार्यैः "विरिंचिः पंचत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् ॥ वितंद्रा माहेंद्री विततिरपि संमीलितदृशां महासंहारेऽस्मिन्विलसति सति त्वत्पतिरसौ ॥" इति यद्विष्णुना नावगम्यते न ज्ञायते तत्को जानीयात् कोऽपि ज्ञातुमसमर्थ इत्यर्थः ॥ ५१ ॥ एताः पूर्वोक्तचतुःषष्टिगुणरूपाः व्युत्थाने ध्यानहारकाले सिद्धयः सिद्धिसंज्ञकाश्च परम् उपसर्गाः समाधिकाले विघ्नरूपाः कीर्तिताः [illegible] अनुग्रहार्थं वा लीलार्थमित्यनेन अना-

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सक्तिः सूचिता ॥ ५६ ॥ ५७ ॥ सूक्ष्मानन्यैरनधिगतान् वेदानर्थांश्च उद्गिरेदुच्चारयेदित्यर्थः ॥ ५८ ॥ दंडकवंधं दंडकसंज्ञकश्लोकवंधं सहस्रशः पद्मस्वस्तिकाद्यनेकप्रकारं वंधप्रप्र रचनारूपं कुर्यादित्यन्वयः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ आत्मविद्यारूपः प्रदीपो विना शीतेन स्वस्थेनात एवाचलनेन निष्कंपेन ॥ ६४ ॥ प्रसादरूपामृतेनपूर्ण यत्सत्त्वरूप पात्रं तस्मिन् स्थितेनविद्यमानेन पुरुषो जीवः तमोज्ञानं निहत्य ध्वंसयित्वा आत्मनि स्वरूपे ईश्वरं शिवं पश्यति साक्षात्करोति ॥ ६५ ॥ तस्येश्वरस्य प्रसादादेव धर्मादयः प्राणिनो भवंतीति शेषः ॥ ६६ ॥ वर्षाणामयुतैरपि विस्तरः शिवमहिमाविस्तरः वक्तुमपि न शक्य इत्यन्वयः । पाशुपते योगे शैवयोगे निष्ठया स्थातव्यं

अनिरुद्धच विचेष्टेद्यः सोप्येवं हि सुखी भवेत् ॥ क्वचिद्भूमिं परित्यज्य ह्याकाशे क्रीडते श्रिया ॥ ५७ ॥ उद्गिरेच्च क्वचिद्वेदान्सूक्ष्मानर्थान् समासतः ॥ क्वचिच्छ्रुते तदर्थेन श्लोकवंधं करोति सः ॥ ५८ ॥ क्वचिद्दंडकवंधं तु कुर्याद्बंधं सहस्रशः ॥ मृगपक्षिसमूहस्य रुतज्ञानं च विंदति ॥ ॥ ५९ ॥ ब्रह्माद्यं स्थावरांतं च हस्तामलकवद्भवेत् ॥ वहुनात्र किमुक्तेन विज्ञानानि सहस्रशः ॥६०॥ उत्पद्यंते मुनिश्रेष्ठा मुनेस्तस्य महात्मनः ॥ अभ्यासेनैव विज्ञानं विशुद्धं च स्थिरंभवेत ॥ ६१ ॥ तेजोरूपाणि सर्वाणि सर्वं पश्यति योगवित् ॥ देवविंवान्यनेकानि विमानानि सहस्रशः ॥ ॥६२॥ पश्यति ब्रह्मविष्ण्वींद्रयमाग्निवरुणादिकान् ॥ ग्रहनक्षत्रताराश्च भुवनानि सहस्रशः ॥६३॥ पातालतलसंस्थाश्च समाधिस्थः स पश्यति ॥ आत्मविद्याप्रदीपेन स्वस्थेनाचलनेन तु ॥ ६४ ॥ प्रसादामृतपूर्णेन सत्त्वपात्रस्थितेन तु ॥ तमो निहत्य पुरुषः पश्यति ह्यात्मनीश्वरम् ॥६५॥ तस्य प्रसादाद्धर्मश्च ऐश्वर्यं ज्ञानमेव च ॥ वैराग्यमपवर्गश्च नात्र कार्या विचारणा ॥ ६६ ॥ न शक्यो विस्तरो वक्तुं वर्षाणामयुतैरपि ॥ योगे पाशुपते निष्ठास्थातव्यं च मुनीश्वराः ॥ ६७ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे योगांतरायकथनं नाम नवमोऽध्यायः ॥ ९ ॥

सूत उवाच ॥ सतां जितात्मनां साक्षाद्द्विजातीनां द्विजोत्तमाः ॥ धर्मज्ञानां च साधूनामाचार्याणां शिवात्मनाम् ॥ १ ॥ दयावतां द्विजश्रेष्ठा स्तथा चैव तपस्विनाम् ॥ संन्यासिनां विरक्तानां ज्ञानिनां वशगात्मनाम् ॥ २ ॥ दानिनां चैव दांतानां त्रयाणां सत्यवादिनाम् ॥ अलुब्धानां मयोगानां श्रुतिस्मृतिविदां द्विजाः ॥ ३ ॥ श्रौतस्मार्तविरुद्धानां प्रसीदति महेश्वरः ॥ सदिति ब्रह्मणः शब्दस्तदंते ये लभंत्युत ॥ ४ ॥ सायुज्यं ब्रह्मणा यांति तेन संतः प्रचक्षते ॥ दशात्मके ये विषये साधने चाष्टलक्षणे ॥ ५ ॥

मरणावधि स्थातव्यमित्यर्थः ॥६७॥ "श्रीसांव त्वन्महैश्वर्यं ब्रह्मविष्णुदुरासदम् ॥ वेदैरगोचरं साक्षात्प्रसादान्मे प्रदर्शय ॥" इति श्रीलिंगे महापुराणे पूर्वभागे शिवतोषिण्यां टीकायां योगान्तरायकथनं नाम नवमोऽध्यायः ॥ ९ ॥ दशमे श्रीमहेशस्य प्रसादार्हान्विशेषतः ॥ श्रद्धयैव तु दृश्यत्वं लिंगे पूज्यत्वमेव च ॥ १ ॥ आदौ प्रसादार्हान्कथयति सतामिति एतद्व्याख्यानमग्रे मूल एवोक्तम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ दशात्मके दशेंद्रियसाध्ये विषये इयं विषयसप्तमी तथा च विषयसंवंधेनेत्यर्थः । अष्टलक्षणे पूर्वाध्यायोक्ताष्टविधे साधने ऐश्वर्यविषये च न क्रुध्यंति न हृष्यंति ये ते जितात्मानः स्मृता इत्यग्रिमेणान्वयः ॥५॥६॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११॥ १२ ॥ १३ ॥ १४ ॥१५॥ १६ ॥ अनुरूपं योग्यमर्थं पृष्टो न गूहति नानुरूपमर्थं पृष्टोपि गूहत्येव इमे द्विविधाः॥१७॥यथादृष्टं प्रवदति सात्यादौ निष्पक्षपात वक्ता एते त्रयः पूर्वोक्ताः वोध्याः ॥ १८ ॥ १९ ॥२०॥ २१ ॥ २२ ॥ साधुः ज्येष्ठः

न क्रुध्यंति न हृष्यंति जितात्मानस्तु ते स्मृताः ॥ सामान्येषु च द्रव्येषु तथा वैशेषिकेषु च ॥६॥ ब्रह्मक्षत्रविशो यस्माद्युक्तास्तस्माद्द्विजातयः ॥ वर्णाश्रमेषु युक्तस्य स्वर्गादिसुखकारिणः ॥ ७ ॥ श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मज्ञ उच्यते ॥ विद्यायाः साधनात्साधुर्ब्रह्मचारी गुरोर्हितः ॥८॥ क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते ॥ साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः ॥९॥ यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥ एवमाश्रमधर्माणां साधनात्साधवः स्मृताः ॥ १० ॥ गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा ॥ धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ॥ ॥११॥ कुशलाकुशलं कर्म धर्माधर्माविति स्मृतौ ॥ धारणार्थे महान्ह्येष धर्मशब्दः प्रकीर्तितः ॥१२॥ अधारणे महत्त्वे च अधर्म इति चोच्यते ॥ अत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ॥ १३ ॥ अधर्मश्चानिष्टफलो ह्याचार्यैरुपदिश्यते ॥ वृद्धाश्चालोलुपाश्चैव आत्मवंतो ह्यदांभिकाः ॥ ॥ १४ ॥ सम्यग्विनीता ऋजवस्तानाचार्यान्प्रचक्षते ॥ स्वयमाचरते यस्मादाचारे स्थापयत्यपि ॥१५॥ आचिनोति च शास्त्रार्थानाचार्यस्तेन चोच्यते ॥ विज्ञेयं श्रवणाच्छ्रौतं स्मरणात्स्मार्तमुच्यते ॥ १६ ॥ इज्यावेदात्मकं श्रौतं स्मार्तं वर्णाश्रमात्मकम् ॥ दृष्ट्वानुरूपमर्थं यः पृष्टो नैवापि गूहति ॥ १७ ॥ यथादृष्टप्रवादस्तु सत्यं लैङ्गेत्र पठ्यते ॥ ब्रह्मचर्यं तथा मौनं निराहारत्वमेव च ॥१८॥ अहिंसा सर्वतः शान्तिस्तप इत्यभिधीयते ॥ आत्मवत्सर्वभूतेषु यो हितायाहिताय च ॥ १९॥ वर्तते त्वसकृद्वृत्तिः कृत्स्ना ह्येषा दया स्मृता ॥ यद्यदिष्टतमं द्रव्यं न्यायेनैवागतं क्रमात् ॥ ॥ २० ॥ तत्तद्गुणवते देयं दातुस्तद्दानलक्षणम् ॥ दानं त्रिविधमित्येतत्कनिष्ठज्येष्ठमध्यमम् ॥ २१ ॥ कारुण्यात्सर्वभूतेभ्यः संविभागस्तु मध्यमः ॥ श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ॥ २२ ॥ शिष्टाचाराविरुद्धश्च स धर्मः साधुरुच्यते ॥ मायाकर्मफलत्यागी शिवात्मा परिकीर्तितः ॥ २३ ॥ निवृत्तः सर्वसंगेभ्यो युक्तो योगी प्रकीर्तितः ॥ असक्तोभयतो यस्तु विषयेषु विचार्य च ॥ २४ ॥ अलुब्धः संयमी प्रोक्तः प्रार्थितोपि समंततः ॥ आत्मार्थं वा परार्थं वा इंद्रियाणीह यस्य वै ॥ २५ ॥ न मिथ्या संप्रवर्तंते शमस्यैव तु लक्षणम् ॥ अनुद्विग्नो ह्यनिष्टेषु तथेष्टान्नाभिनंदति ॥ २६ ॥ प्रीतितापविषादेभ्यो विनिवृत्तिर्विरक्तता ॥ संन्यासः कर्मणां न्यासः कृतानामकृतैः सह ॥ २७ ॥ कुशलाकुशलानां तु प्रहाणं न्यास उच्यते ॥ अव्यक्ताद्यविशेषांते विकारेऽस्मिन्नचेतने ॥ २८ ॥

उक्तान्यत्कनिष्ठं ज्ञेयं मायामयं कर्मफलं त्यजति तच्छीलः मायाकर्मफलत्यागी तदुक्तं शिवगीतायां रामेण "किंचिज्जलं वा चुलुकोदकं वा यच्छंकरत्वं प्रतिगृह्य दत्से ॥ त्रैलोक्यलक्ष्मीमपि यज्जनेभ्यः सर्वं त्वविद्याकृतमेव मन्ये" इति ॥२३॥ भयतः जन्ममृत्यादिभयेन विचार्य अनित्यत्वादि विमृश्य विषयेष्वसक्त इत्यन्वयः ॥२४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ प्रधानमाद्यस्य नास्ति विशेषश्चरमावयवो येभ्यस्तेऽविशेषाः परमाणवोऽन्ते यस्यैतादृशे अचेतने जडे विकारे चेतना जीवा अचेतनाः जडाः तेभ्योऽन्यस्य ब्रह्मणः भावः प्रकारस्तस्य चेतनाचेतनान्यत्वस्य विज्ञानं निश्चयात्मकं ज्ञानं सर्वं हि खल्विदं ब्रह्मेति श्रुतिप्रतिपादितं ज्ञानमुच्यते कथ्यत इत्यर्थः ॥ २९ ॥ गुह्यतममतिशयेन गोपनीयं वक्ष्ये कथयामि किं परमेश्वरे भवे शिवे सर्वत्र सर्वभूतेषु भक्तिः सेवनं तया निर्दिष्टभक्त्या युतो विमुच्यते अत्रेति शेषः। न संदेह इत्यग्रिमेणान्वयः। तदुक्तं कैवल्योपनिषदि-"सर्वभूतस्यमात्मानं सर्वभूतानि चात्मनि ॥ संपश्यन्परमं याति याति नान्येन हेतुना ॥" इति ॥३०॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भगवति शिवे भक्ता ये ते अस्मिल्लोके गिरिवेदवाग्विषये गुहावद्दरिदाशयः

चेतनाचेतनान्यत्वविज्ञानं ज्ञानमुच्यते॥एवं तु ज्ञानयुक्तस्य श्रद्धायुक्तस्य शंकरः॥२९॥प्रसीदति न संदेहो धर्मश्चायं द्विजोत्तमाः ॥ किं तु गुह्यतमं वक्ष्ये सर्वत्र परमेश्वरे ॥ ३० ॥ भवे भक्तिर्न संदेहस्तया युक्तो विमुच्यते ॥ अयोग्यस्यापि भगवान् भक्तस्य परमेश्वरः ॥ ३१ ॥ प्रसीदति न संदेहो निगृह्य विविधं तमः ॥ ज्ञानमध्यापनं होमो ध्यानं यज्ञस्तपः श्रुतम् ॥ ३२ ॥ दानमध्ययनं सर्वं भवभक्त्यै न संशयः ॥ चांद्रायणसहस्रैश्च प्राजापत्यशतैस्तथा ॥ ३३ ॥ मासोपवासैश्चान्यैर्वा भक्तिर्मुनिवरोत्तमाः ॥ अभक्ता भगवत्यस्मिँल्लोके गिरिगुहाशये ॥ ३४ ॥ पतंति चात्मभोगार्थं भक्तो भावेन मुच्यते ॥ भक्तानां दर्शनादेव नृणां स्वर्गादयो द्विजाः ॥ ३५ ॥ न दुर्लभा न संदेहो भक्तानां किं पुनस्तथा ॥ ब्रह्मविष्णुसुरेंद्राणां तथान्येषामपि स्थितिः ॥ ३६ ॥ भक्त्या एव मुनीनां च वलसौभाग्यमेव च ॥ भवेन च तथा प्रोक्तं संप्रेक्ष्योमां पिनाकिना ॥ ॥ ३७ ॥ देव्यै देवेन मधुरं वाराणस्यां पुरा द्विजाः ॥ अविमुक्ते समासीना रुद्रेण परमात्मना ॥ ३८ ॥ रुद्राणी रुद्रमाहेदं लब्ध्वा वाराणसीं पुरीम् ॥ श्रीदेव्युवाच ॥ केन वश्यो महादेव पूज्यो दृश्यस्त्वमीश्वरः ॥ ३९ ॥ तपसा विद्यया वापि योगेनेह वद प्रभो ॥ सूत उवाच ॥ निशम्य वचनं तस्यास्तथा ह्यालोक्य पार्वतीम् ॥ ४० ॥ आह वालेंदुतिलकः पूर्णेन्दुवदनां हसन् ॥ स्मृत्वाथ मेनया पत्न्या गिरेर्गां कथितां पुरा ॥ ४१ ॥

पतनेहत्वभिप्रायः स्वर्गकामोऽग्निष्टोमेन यजेतेत्यादिश्रुतिप्रतिपादितः कर्ममार्गः तस्मिन्नात्मभोगार्थं भोगप्राप्त्याशया पतंति मज्जंतीत्यर्थः । यद्वा । गिरिगुहावदाशयो गांभीर्यं यस्य तस्मिन् संसारे पतंति [illegible] पत्न्या मेनया देव्या सह महात्मनः मम गिरौ हिमालये चिरकालस्थितिं प्रेक्ष्य स्थानार्थं स्थाननिर्माणार्थं गां कथितां स्मृत्वा हसन् देवीं हे विलासिनि विलासपति मात्रा यत्कथितं विस्मृतासि इह अस्मिन् काले त्वया

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पुरी लब्धाऽतः प्रष्टुमर्हसीत्याद्दैत्यग्रिमस्थैरन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ पंचभिः पवित्रैः सद्योजातादिमंत्रैः द्विजैस्त्रैवर्णिकैः स्त्रीशूद्राणां तु नमोंतनाममंत्रैरेवाधिकारोऽनेन ध्वनितः ॥ ४९ ॥ ५० ॥ भावं दत्तमिति पूर्वस्येनान्वयः । अत्र सामान्ये नपुंसकमिति नपुंसकत्वम् ॥५१॥ ५२ ॥ द्रष्टव्यः प्रेक्षितुं योग्यः ॥ ५३ ॥ "श्रीसांब मायया ते रचितब्रह्मांडवस्तुजालात्तु॥गच्छतु मनो विहंगो दृढश्रद्धासिनिकृत्तभवबंधः॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां भक्तिभावकथनं नाम दश

चिरकालस्थितिं प्रेक्ष्य गिरौ देव्या महात्मनः ॥ देवि लब्धा पुरी रम्या त्वया यत्प्रष्टुमर्हसि ॥ ४२ ॥ स्थानार्थं कथितं मात्रा विस्मृतेह विलासिनि ॥ पुरा पितामहेनापि पृष्टः प्रश्नवतां वरे ॥ ४३ ॥ यथा त्वयाद्य वै पृष्टो द्रष्टुं ब्रह्मात्मकं त्वहम् ॥ श्वेते श्वेतेन वर्णेन दृष्ट्वा कल्पे तु मां शुभे ॥ ४४ ॥ सद्योजातं तथा रक्ते रक्तं वामं पितामहः॥पीते तत्पुरुषं पीतमघोरं कृष्णमीश्वरम् ॥ ४५ ॥ ईशानं विश्वरूपाख्यो विश्वरूपं तदाह माम् ॥ ४६ ॥ पितामह उवाच ॥ वामतत्पुरुषाघोर सद्योजात महेश्वर ॥ दृष्टो मया त्वं गायत्र्या देवदेव महेश्वर ॥ केन वश्यो महादेव ध्येयः कुत्र घृणानिधे ॥ ४७ ॥ द्रष्टव्यः पूज्यस्तथा देव्या वक्तुमर्हसि शंकर ॥ श्रीभगवानुवाच ॥ आवोचं श्रद्धयैवेति वश्यो वारिजसंभव ॥४८॥ ध्येयो लिंगे त्वया दृष्टे विष्णुना पयसां निधौ ॥ पूज्यः पंचास्यरूपेण पवित्रैः पञ्चभिर्द्विजैः ॥ ४९ ॥ भवभक्त्याद्य दृष्टोहं त्वयांडज जगद्गुरो ॥ सोपि मामाह भावार्थं दत्तं तस्मै मया पुरा ॥ ५० ॥ भावं भावेन देवेशि दृष्टवान्मां हदीश्वरम् ॥ तस्मात्तु श्रद्धया वश्यो द्रष्टव्यः श्रेष्ठगिरेः सुते ॥ ५१ ॥ पूज्यो लिंगे न संदेहः सर्वदा श्रद्धया द्विजैः ॥ श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ॥ ५२ ॥ श्रद्धा स्वर्गश्च मोक्षश्च द्रष्टव्योहं श्रद्धया सदा ॥ ५३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भक्तिभावकथनं नाम दशमोऽध्यायः ॥ १० ॥ ऋषय ऊचुः ॥ कथं वै दृष्टवान्ब्रह्मा सद्योजातं महेश्वरम् ॥ वामदेवं महात्मानं पुराणपुरुषोत्तमम् ॥ १ ॥ अघोरं च तथेशानं यथावद्वक्तुमर्हसि ॥ सूत उवाच ॥ एकोनत्रिंशकः कल्पो विज्ञेयः श्वेतलोहितः ॥ २ ॥ तस्मिंस्तत्परमं ध्यानं ध्यायतो ब्रह्मणस्तदा ॥ उत्पन्नस्तु शिखायुक्तः कुमारः श्वेतलोहितः ॥ ३ ॥ तं दृष्ट्वा पुरुषं श्रीमान्ब्रह्मा वै विश्वतोमुखः ॥ हृदि कृत्वा महात्मानं ब्रह्मरूपिणमीश्वरम् ॥ ४ ॥ सद्योजातं ततो ब्रह्मा ध्यानयोगपरोऽभवत् ॥ ध्यानयोगात्परं ज्ञात्वा ववंदे देवमीश्वरम् ॥ ५ ॥

मोध्यायः ॥१०॥ एकादशेस्मिन्नध्याये सद्योजातसमुद्भवः ॥ तच्छिष्यसंभवश्चैव कथ्यते पापनाशनः ॥ १ ॥ ऋषयः शौनकादयः सूतं प्रत्यूचुः कथमिति । ब्रह्मा महेश्वर सद्योजातं वामदेवं तत्पुरुषम् अघोरमीशानं च कथं दृष्टवानित्यग्रिमेणान्वयः॥१॥२॥श्वेतं लोहितं रुधिरं यस्य यद्वा श्वेतः श्वेतवर्णश्चासौ लोहितः नेत्रप्रांतनखकरचरणेषु रक्तवर्णः॥३॥४॥५॥ महायशा इदं ब्रह्मविशेषणं श्वेताः शुभ्रवर्णाः ॥ ६ ॥ तत्सद्योजातरूपं ब्रह्म सदावृतं सर्वदा सेवितम् ॥ ७ ॥ तस्य सद्याजातस्य अग्रे तस्मात्सद्योजाताज्जज्ञ अतोसौ श्वेतमुनिः हर एव तदुक्तं सप्तमे 'आद्ये रुद्रः' कलौ श्वेतः इति ॥८॥९॥ प्राणायामः प्राणनिरोधः ॥ १० ॥ व्रजंति गच्छंति॥११॥ "कुंदेंदुशंखस्फटिकावभासं वेदाक्षमालावरदाभयांकम् ॥ सुनंदनंदप्रमुखैर्वृतं तं सद्योऽधिजातं शरणं प्रपद्ये ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सद्योजातमाहात्म्यं नामैकादशोऽध्यायः ॥ ११ ॥

सद्योजातं ततो ब्रह्मा ब्रह्म वै समचिंतयत्॥ ततोस्य पार्श्वतः श्वेताः प्रादुर्भूता महायशाः ॥६॥ सुनंदो नंदनश्चैव विश्वनंदोपनंदनौ ॥ शिष्यास्ते वै महात्मानो यैस्तद्ब्रह्म सदावृतम्॥७॥ तस्याग्रे श्वेतवर्णाभः श्वेतो नाम महामुनिः ॥ विजज्ञेथ महातेजास्तस्माज्जज्ञ हरस्त्वसौ॥८॥तत्र ते मुनयः सर्वे सद्योजातं महेश्वरम्॥ प्रपन्नाः परया भक्त्या गृणंतो ब्रह्म शाश्वतम्॥९॥तस्माद्विश्वेश्वरं देवं ये प्रपद्यंति वै द्विजाः ॥ प्राणायामपरा भूत्वा ब्रह्म तत्परमानसाः ॥ १० ॥ ते सर्वे पापनिर्मुक्ता विमला ब्रह्मवर्चसः ॥ विष्णुलोकमतिक्रम्य रुद्रलोकं व्रजंति ते ॥ ११ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभाग सद्योजातमाहात्म्यं नामैकादशोध्यायः ॥११॥ सूत उवाच ॥ ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्तितः॥ ब्रह्मा यत्र महातेजा रक्तवर्णमधारयत् ॥ १ ॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ॥ प्रादुर्भूतो महातेजाः कुमारो रक्तभूषणः ॥२॥ रक्तमाल्यांबरधरो रक्तनेत्रः प्रतापवान् ॥ स तं दृष्ट्वा महात्मानं कुमारं रक्तवाससम् ॥ ३ ॥ परं ध्यानं समाश्रित्य बुबुधे देवमीश्वरम् ॥ स तं प्रणम्य भगवान् ब्रह्मा परमयंत्रितः ॥ ४ ॥ वामदेवं ततो ब्रह्मा ब्रह्म वै समचिंतयत ॥ तथा स्तुतो महादेवो ब्रह्मणा परमेश्वरः ॥ ५ ॥ प्रतीतहृदयः सर्वं इदमाह पितामहम् ॥ ध्यायता पुत्रकामेन यस्मात्तेहं पितामह ॥ ६ ॥ दृष्टः परमया भक्त्या स्तुतश्च ब्रह्मपूर्वकम् ॥ तस्माद्ध्यानबलं प्राप्य कल्पेकल्पे प्रयत्नतः ॥ ७ ॥ वेत्स्यसे मां प्रसंख्यातं लोकधातारमीश्वरम् ॥ ततस्तस्य महात्मानश्चत्वारस्ते कुमारकाः ॥ ८ ॥ संबभूवुर्महात्मानो विशुद्धा ब्रह्मवर्चसः ॥ विरजाश्च विवाहुश्च विशोको विश्वभावनः ॥ ९ ॥ ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः ॥ रक्तांबरधराः सर्वे रक्तमाल्यानुलेपनाः ॥ १० ॥ रक्तकुंकुमलिप्तांगा रक्तभस्मानुलेपनाः ॥ ततो वर्षसहस्रांते ब्रह्मत्वेध्यवसायिनः ॥ ११ ॥

लैंगेस्मिन्द्वादशाध्याये ब्रह्मणोनुग्रहेच्छया ॥ उद्भवो वामदेवस्य शिष्याणां चैव वर्ण्यते ॥ १ ॥ सूतस्त्रिंशत्कल्पवृत्तांतमाह तत इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ सर्वः सर्वस्वरूपः ॥ ६ ॥ ब्रह्मपूर्वकं ब्रह्मवामदेवायेति मंत्रः पूर्वो यस्मिन् कर्माणि तथा स्तुत इत्यर्थः ॥ ७ ॥ प्रकर्षेण सर्वश्रेष्ठत्वेन संख्यातं सांख्यैर्गणितं लोकधातारं लोकाधारभूतम् ईश्वरं मां वेत्स्यसे विचारतो ज्ञास्यसीत्यर्थः ॥ ८ ॥ ब्रह्मतुल्यं वर्चो येषां ते ब्रह्मवर्चसः ॥ ९ ॥ वीराः विक्रांताः ॥ १० ॥ वर्षसहस्रांते इत्यस्य तृतीयस्थरुद्रं प्रविष्टा इत्यत्रान्वयः ॥ ब्रह्मत्वे ब्रह्मभावे ॥११॥ वामदैवेकं वामदेवदेवताक तत्पूर्वोक्त वामदेवायेति मंत्ररूपम् ॥१२॥१३॥ वामं सुंदरम् ईश्वर युंजानाः समाधिना ध्यायतः॥१४॥ पुनरावृत्तिरेव दुर्लभा यत्र तं रुद्रलोकम्॥१५॥"वराक्षमालाभयटंकहस्तं सरोजकिंजल्कसमानवर्णम् ॥ रक्तांबरं रक्तविभूषणं च तं वामदेवं हृदये युनज्मि॥१॥"इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां वामदेवमाहात्म्यं नाम द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेस्मिन्नध्याये विश्वसृड्ध्यानयोगतः ॥ तत्पुरुषोद्भवः सम्यग्गायत्र्याश्चैव वर्ण्यते ॥ १ ॥

गृणंतश्च महात्मानो ब्रह्म तद्वामदैविकम् ॥ अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया ॥ १२ ॥ धर्मोपदेशमखिलं कृत्वा ते ब्रह्मणः प्रियाः ॥ पुनरेव महादेवं प्रविष्टा रुद्रमव्ययम् ॥ १३ ॥ योपि चान्ये द्विजश्रेष्ठा युंजाना वाममीश्वरम् ॥ प्रपश्यंति महादेवं तद्भक्तास्तत्परायणाः ॥ १४ ॥ ते सर्वे पापनिर्मुक्ता विमला ब्रह्मचारिणः ॥ रुद्रलोकं गमिष्यंति पुनरावृत्तिदुर्लभम् ॥ १५ ॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे वामदेवमाहात्म्यं नाम द्वादशोध्यायः ॥ १२ ॥ सूत उवाच ॥ एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः ॥ ब्रह्मा यत्र महाभागः पीतवासा बभूव ह ॥ १ ॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ॥ प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रधृक् ॥ २ ॥ पीतगंधानुलिप्तांगः पीतमाल्यांबरो युवा ॥ हेमयज्ञोपवीतश्च पीतोष्णीषो महाभुजः ॥ ३ ॥ तं दृष्ट्वा ध्यानसंयुक्तो ब्रह्मा लोकमहेश्वरम् ॥ मनसा लोकधातारं प्रपेदे शरणं विभुम् ॥ ४ ॥ ततो ध्यानगतस्तत्र ब्रह्मा माहेश्वरीं वराम् ॥ गां विश्वरूपां ददृशे महेश्वरमुखाच्च्युताम्॥५॥चतुष्पदां चतुर्वक्त्रां चतुर्हस्तां चतुःस्तनीम् ॥ चतुर्नेत्रां चतुःशृंगीं चतुर्दंष्ट्रां चतुर्मुखीम् ॥ ६ ॥ द्वात्रिंशद्गुणसंयुक्तामीश्वरीं सर्वतोमुखाम् ॥ स तां दृष्ट्वा महातेजा महादेवीं महेश्वरीम् ॥ ७ ॥ पुनराह महादेवः सर्वदेवनमस्कृतः ॥ मतिः स्मृतिर्बुद्धिरिति गायमानः पुनःपुनः ॥ ८ ॥ एह्येहीति महादेवि सातिष्ठत्प्रांजलिर्विभुम् ॥ विश्वमावृत्य योगेन जगत्सर्वं वशीकुरु ॥ ९ ॥ अथ तामाह देवेशो रुद्राणी त्वं भविष्यसि ॥ ब्राह्मणानां हितार्थाय परमार्था भविष्यसि ॥ १० ॥ तथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः ॥ प्रददौ देवदेवेशः चतुष्पादां जगद्गुरुः ॥ ११ ॥ ततस्तां ध्यानयोगेन विदित्वा परमेश्वरीम् ॥ ब्रह्मा लोकगुरोः सोथ प्रतिपेदे महेश्वरीम् ॥ १२ ॥ गायत्रीं तु ततो रौद्रीं ध्यात्वा ब्रह्मानुयंत्रितः ॥ इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रिमीरिताम् ॥ १३ ॥

सूतस्तत्पुरुषोत्पत्तिं वर्णयति एकत्रिंशेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ द्वात्रिंशद्गुणाः सामुद्रशास्त्रप्रसिद्धाः तैः यद्वा षोडशोपचारयोक्तयोगादिद्वात्रिंशद्गुणास्तैः संयुक्ताम् ॥ ७ ॥ ८ ॥ एह्येहीत्यादरे द्विरुक्तिः । विभुं तत्पुरुषं प्रांजलिः साऽतिष्ठत् जगत्सर्वं वशीकुर्वित्याहेत्यन्वयः ॥ ९ ॥ रुद्राणी उमा परमः मोक्षरूपः अर्थो यस्यां सा परमार्था ॥ १० ॥ ११ ॥ लोकगुरोर्महेश्वरस्य सकाशात्प्रतिपेदे ॥ प्राप्तवानित्यर्थः ॥ १२ ॥ इत्युक्तरूपां वैदिकीं वेदभवां विद्यां ज्ञानदां रौद्रीं रुद्रदैवत्यां तत्पुरुषायेति

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्नत्रं पंचगव्यमिति शेषः । ॥ ७ ॥ ८ ॥ वारुणं जलस्नानमित्यर्थः । आग्नेयं भस्मस्नानं मन्त्रस्नानं मार्जनरूपमित्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ चित्तकमलं चित्ताधिकरणभूतं हृत्क मलमित्यर्थः । तमसाऽज्ञानेन प्रसुप्तं ज्ञानभानोर्भासा यदा प्रबुद्धं प्रफुल्लमभवद्भवेत्तदा शुचिर्भवतीत्यन्वयः ॥ १२ ॥ शकृत् गोमयं भसितं भस्म ॥ १३ ॥ १४ ॥ स्नानक्रममाह उद्धृ तासीति "उद्धृतासि वराहेण" इति मंत्रं पठित्वा मृदादाय मृदिति द्वितीयार्थे प्रथमा देहं विशोधयेदित्यन्वयः । ततः स्नात्वाऽनुल्बणं मलशून्यं वस्त्रं परिधायेति शेषः ॥ १५ ॥

त्रिविधं स्नानमाख्यातं देवदेवेन शंभुना ॥ हिताय ब्राह्मणाद्यानां चतुर्मुखसुतोत्तम ॥ ८ ॥ वारुणं पुरतः कृत्वा ततश्चाग्नेयमुत्तमम् ॥ मंत्रस्नानं ततः कृत्वा पूजयेत्परमेश्वरम् ॥ ९ ॥ भावदुष्टोंभसि स्नात्वा भस्मना च न शुद्ध्यति ॥ भावशुद्धश्चरेच्छौचमन्यथा न समाचरेत् ॥ १० ॥ सरित्सरस्तडागेषु सर्वेष्वाप्रलयं नरः ॥ स्नात्वापि भावदुष्टश्चेन्न शुध्यति न संशयः ॥ ११ ॥ नृणां हि चित्तकमलं प्रबुद्धमभवद्यदा ॥ प्रसुप्तं तमसा ज्ञानभानोर्भासा तदा शुचिः ॥ १२ ॥ मृच्छकृत्तिलपुष्पं च स्नानार्थं भसितं तथा॥आदाय तीरे निःक्षिप्य स्नानतीर्थे कुशानि च ॥ १३ ॥ प्रक्षाल्याचम्य पादौ च मलं देहाद्विशोध्य च ॥ द्रव्यैस्तु तीरदेशस्थैस्ततः स्नानं समाचरेत् ॥ १४ ॥ उद्धृतासीतिमंत्रेण पुनर्देहं विशोधयेत् ॥ मृदादाय ततश्चान्यद्वस्त्रं स्नात्वा ह्यनुल्बणम् ॥ १५ ॥ गंधद्वारां दुराधर्षामिति मंत्रेण मंत्रवित् ॥ कपिलागोमयेनैव खस्थेनैव तु लेपयेत् ॥ १६ ॥ पुनः स्नात्वा परित्यज्य तद्वस्त्रं मलिनं ततः ॥ शुक्लवस्त्रपरीधानो भूत्वा स्नानं समाचरेत् ॥ १७ ॥ सर्वपापविशुद्ध्यर्थमावाह्य वरुणं तथा ॥ संपूज्य मनसा देवं ध्यानयज्ञेन वै भवम् ॥१८॥ आचम्य त्रिस्तदा तीर्थे ह्यवगाह्य भवं स्मरन् ॥ पुनराचम्य विधिवदभिमन्त्र्यमहाजलम् ॥१९॥ अवगाह्य पुनस्तस्मिन् जपेद्वै चाघमर्षणम् ॥ तत्तोये भानुसोमाग्निमंडलं च स्मरेद्वशी ॥ २० ॥ आचम्य च पुनस्तस्माज्जलादुत्तीर्य मंत्रवित् ॥ प्रविश्य तीर्थमध्ये तु पुनः पुण्यविवृद्धये ॥२१॥ शृंगेण पर्णपुटकैः पालाशैः क्षालितैस्तथा ॥ सकुशेन सपुष्पेण जलेनैवाभिषेचयेत् ॥२२॥ रुद्रेण पवमानेन त्वरिताख्येन मंत्रवित् ॥ तरत्समंदीवर्गाद्यैस्तथा शांतिद्वयेन च ॥ २३ ॥ शांतिधर्मेण चैकेन पंचब्रह्मपवित्रकैः ॥ तत्तन्मंत्राधिदेवानां स्वरूपं च ऋषीन् स्मरन् ॥ २४ ॥ एवं हि चाभिषिच्याथ स्वमूर्ध्नि पयसा द्विजाः ॥ ध्यायेच्च त्र्यंबकं देवं हृदि पंचास्यमीश्वरम् ॥ २५ ॥

॥ १६ ॥ १७ ॥ भवं शिवं ध्यानयज्ञेन मानसोपचारैः संपूज्येत्यन्वयः ॥ १८ ॥ १९ ॥ अघमर्षणम् "ऋतं च सत्यं च" इति सूक्तम् ॥ २० ॥ २१ ॥ शृंगेण गोशृंगेण॥ २२ ॥ त्वरिताख्येन "यो रुद्र" इति मंत्रेण शांतिद्वयेन 'शंनो मित्र' इत्यादिना ॥ २३ ॥ शांतिधर्मेण 'शंनो देवी' इति मंत्रेण पंचब्रह्मपवित्रकैः । सद्योजातादिमंत्रैः ॥ २४ ॥ पयसा जलेन पयः कीलालममृतम् " इत्यमरः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ द्विजसत्तमाः शौनकादयः अयं द्विपाच्छ्लोकः ॥ २९ ॥ "प्रातःप्रातर्यथा सूर्यो बोधयत्यंबुजं प्रभुः ॥ तद्वद्धृदब्जं मे सांब स्वभासा बोधितं कुरु ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां पंचविंशोऽध्यायः ॥ २५ ॥ षड्विंशे वर्ण्यते सम्यक् संध्यादीनां क्रमः शुभः॥ पंचयज्ञविधानं च द्विविधं स्नानमेव च ॥ १ ॥ नंदिकेश्वरः संध्यादिविधिं कथयति–आवाहयेदित्यादिना । ततः पूर्वोक्तस्नानाचमनानंतरं गायत्रीमावाहयेदित्यन्वयः ॥१॥ तस्याः गायत्र्याः प्रदापयेदित्यत्र स्वार्थे णिच् समासीनः पद्माद्यासनस्थः स्थितः अपि वेत्यनेनोत्थितः शाखाभेदेन व्यवस्था ॥२॥ सहस्रं दशशतं तदर्धं पंचशतम् अष्टोत्तरमष्टाधिकं शतं

आचम्याचमनं कुर्यात्स्वसूत्रोक्तं समीक्ष्य च ॥ पवित्रहस्तः स्वासीनः शुचौ देशे यथाविधि ॥२६॥ अभ्युक्ष्य सकुशं चापि दक्षिणेन करेण तु ॥ पिबेत्प्रक्षिप्य त्रिस्तोयं चक्री भूत्वा ह्यतंद्रितः ॥ २७ ॥ प्रदक्षिणं ततः कुर्याद्धिसापापप्रशांतये ॥ एवं संक्षेपतः प्रोक्तं स्नानाचमनमुत्तमम् ॥ २८ ॥ सर्वेषां ब्राह्मणानां तु हितार्थे द्विजसत्तमाः ॥ २९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे स्नानविधिर्नाम पंचविंशोध्यायः ॥ २५ ॥ नंद्युवाच ॥ आवाहयेत्ततो देवीं गायत्रीं वेदमातरम् ॥ आयातु वरदा देवीत्यनेनैव महेश्वरीम् ॥ १ ॥ पाद्यमाचमनीयं च तस्याश्चार्घ्यं प्रदापयेत् ॥ प्राणायामत्रयं कृत्वा समासीनास्थितोपि वा ॥ २ ॥ सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥ गायत्रीं प्रणवेनैव त्रिविधेष्वेकमाचरेत ॥ ३ ॥ अर्घ्यं दत्वा समभ्यर्च्य प्रणम्य शिरसा स्वयम् ॥ उत्तमे शिखरे देवीत्युक्त्वोद्वास्य च मातरम् ॥ ४ ॥ प्राच्यालोक्याभिवंद्येशां गायत्रीं वेदमातरम् ॥ कृतांजलिपुटो भूत्वा प्रार्थयेद्भास्करं तथा ॥ ५ ॥ उदुत्यं च तथा चित्रं जातवेदसमेव च ॥ अभिवंद्य पुनः सूर्यं ब्रह्माणं च विधानतः ॥६॥ तथा सौराणि सूक्तानि ऋग्यजुःसामजानि च ॥ जप्त्वा प्रदक्षिणं पश्चात्त्रिः कृत्वा च विभावसोः ॥ ७ ॥ आत्मानं चांतरात्मानं परमात्मानमव च ॥ अभिवंद्य पुनः सूर्यं ब्रह्माणं च विभावसुम् ॥ ८ ॥ मुनीन्पितॄन् यथान्यायं स्वनाम्नावाहयेत्ततः ॥ सर्वानावाहयामीति देवानावाह्यसर्वतः ॥ ९ ॥

एवमुत्तममध्यमकनिष्ठरूपेषु जपपक्षेषु एकमाचरेन्नियमेन कुर्यादित्यर्थः । गायत्रीं प्रणवेन युक्तामेव जपेदिति एवकारः नियमबोधकः ॥ ३ ॥ किं कृत्वा जपं कुर्यादित्याकांक्षायामाह- अर्घ्यमिति । स्वयं सूर्यायार्घ्यं दत्वा समभ्यर्च्य शिरसा प्रणम्य तदुत्तरं जपं कुर्यादिति त्वामत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ विभावसोः सूर्यस्य "विभावसुर्ग्रहपतिः " इत्यमरः ॥ ७ ॥ अभिवंद्य नमस्कृत्य पुनस्तदनंतरं विभावसुमग्निम् "शुक्रश्चित्र भानुर्विभावसुः" इत्यमरः। अभिवंद्य ध्यात्वा सूर्यं ब्रह्माणं च जुहुयादिति शेषः। अनेन होमोक्त्या न द्विरुक्तिः॥८॥९॥ तर्पयेत्तत्वतत्त्वं स्वरूपं मुख्यरूपं ध्यात्वेत्यन्वयः ॥१०॥११॥ पितॄणां गणानिति शेषः तर्पयेदित्यन्वयः ॥१२॥१३॥ एवं तर्प्यं संतर्प्य ब्रह्मयज्ञं यजेदित्यनेन ब्रह्मयज्ञस्य उत्तरकालिकत्वं बोधितम् ॥१४॥१५॥ स्वशाखाध्ययनमेव ब्रह्मयज्ञः न तु सर्वशाखीयमंत्राध्ययनरूपोऽत एव "यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः संतिष्ठते" इति श्रुतौ याकारः

तर्पयेद्विधिना पश्चात्प्राङ्मुखो वा ह्युदङ्मुखः ॥ ध्यात्वा स्वरूपं तत्तत्त्वमभिवंद्य यथाक्रमम् ॥१०॥ देवानां पुष्पतोयेन ऋषीणां तु कुशांभसा ॥ पितॄणां तिलतोयेन गंधयुक्तेन सर्वतः ॥ ११ ॥ यज्ञोपवीती देवानां निवीती ऋषितर्पणम् ॥ प्राचीनावीती विप्रेंद्र पितॄणां तर्पयेत् क्रमात् ॥ १२ ॥ अंगुल्यग्रेण वै धीमांस्तर्पयेद्देवतर्पणम् ॥ ऋषीन् कनिष्ठांगुलिना श्रोत्रियः सर्वसिद्धये ॥ १३ ॥ पितॄंस्तु तर्पयेद्विद्वान्दक्षिणांगुष्ठकेन तु ॥ तथैवं मुनिशार्दूल ब्रह्मयज्ञं यजेद्विजः ॥ १४ ॥ देवयज्ञं च मानुष्यं भूतयज्ञं तथैव च ॥ पितृयज्ञं च पूतात्मा यज्ञकर्मपरायणः ॥ १५ ॥ स्वशाखाध्ययनं विप्रा ब्रह्मयज्ञ इति स्मृतः ॥ अग्नौ जुहोति यच्चान्नं देवयज्ञ इति स्मृतः ॥ १६ ॥ सर्वेषामेव भूतानां बलिदानं विधानतः ॥ भूतयज्ञ इति प्रोक्तो भूतिदः सर्वदेहिनाम् ॥ १७ ॥ सदारान्सर्वतत्त्वज्ञान्ब्राह्मणान्वेदपारगान् ॥ प्रणम्य तेभ्यो यद्दत्तमन्नं मानुष उच्यते ॥ १८ ॥ पितॄनुद्दिश्य यद्दत्तं पितृयज्ञः स उच्यते ॥ एवं पंच महायज्ञान्कुर्यात्सर्वार्थसिद्धये॥१९॥सर्वेषां शृणु यज्ञानां ब्रह्मयज्ञः परः स्मृतः ब्रह्मयज्ञरतो मर्त्यो ब्रह्मलोके महीयते ॥ २० ॥ ब्रह्मयज्ञेन तुष्यंति सर्वे देवाः सवासवाः ॥ ब्रह्मा च भगवान्विष्णुः शंकरो नीललोहितः ॥ २१ ॥ वेदाश्च पितरः सर्वे नात्र कार्या विचारणा ॥ ग्रामाद्बहिर्गतो भूत्वा ब्राह्मणो ब्रह्मयज्ञवित् ॥ २२ ॥ यावत्त्वदृष्टमभवदुटजानां छदं नरः ॥ प्राच्यामुदीच्यां च तथा प्रागुदीच्यामथापि वा ॥ २३ ॥ पुण्यमाचमनं कुर्याद्ब्रह्मयज्ञार्थमेव तत् ॥ प्रीत्यर्थं च ऋचां विप्राः त्रिः पीत्वा प्लाव्यप्लाव्य च ॥ २४ ॥ यजुषां परिमृज्यैवं द्विः प्रक्षाल्य च वारिणा ॥ प्रीत्यर्थं सामवेदानामुपस्पृश्य च मूर्धनि ॥ २५ ॥ स्पृशेदथर्ववेदानां नेत्रे चांगिरसां तथा ॥ नासिके ब्राह्मणांगानां क्षाल्यक्षाल्य च वारिणा ॥ २६ ॥ अष्टादशपुराणानां ब्रह्माद्यानां तथैव च ॥ तथा चोपपुराणानां सौरादीनां यथाक्रमम् ॥ २७ ॥ पुण्यानामितिहासानां शैवादीनां तथैव च ॥ श्रोत्रे स्पृशेद्धि तुष्ट्यर्थं हृद्देश्यं तु ततः स्पृशेत् ॥२८॥ कल्पादीनां तु सर्वेषां कल्पवित्कल्पवित्तमाः ॥ एवमाचम्य चास्तीर्य दर्भपिंजूलमात्मनः ॥ २९ ॥ कृत्वा पाणितले धीमानात्मनो दक्षिणोत्तरम् ॥ हेमांगुलीयसंयुक्तो ब्रह्मबंधयुतोपि वा ॥ ३० ॥ विधिवद्ब्रह्मयज्ञं च कुर्यात्सूत्री समाहितः ॥ अकृत्वा च मुनिः पंच महायज्ञान्द्विजोत्तमः ॥ ३१ ॥ भुक्त्वा च सूकराणां तु योनौ वै जायते नरः ॥ तस्मात्सर्वप्रयत्नेन कर्तव्याः शुभमिच्छता ॥ ३२ ॥ ब्रह्मयज्ञादथ स्नानं कृत्वादौ सर्वथात्मनः ॥ तीर्थं संगृह्य विधिवत्प्रविशेच्छिविरं वशी ॥ ३३ ॥

पठितः अत्रत्यपंचयज्ञस्वरूपकथनं [illegible] ॥ २२ ॥ प्रागुदीच्यामीशान्यामित्यर्थः अत्रत्यः सर्वो ब्रह्मयज्ञविधिर्ब्रह्मयज्ञेनेति याजुषश्रुतेरनुवादः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ब्रह्मयज्ञादथानंतरं आत्मनः स्वदेहस्य सर्वथा

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

निजमज्जनरूपं स्नानं कृत्वा तीर्थं संगृह्य शिबिरं प्रविशेदित्यन्वयः ॥ ३३ ॥ ततो गृहप्रवेशानंतरम् ॥ ३४ ॥ ३५ ॥ अनुदिते तु होमः मृषा मिथ्या भवति तदानीं सूर्यस्य ज्योती रूपस्याभावादनेनानुदितपक्षस्यासमीचीनत्वमुक्तम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ कुशाग्निपश्चाहारः आदाय देवदेवं सांबम् ॥ ३९ ॥ ४० ॥ संक्षिप्य कथितमित्यन्वयः यः सकृदपि कुर्यात्सः परमं पदं महेश्वरस्थानं याति प्राप्नोतीत्यर्थः ॥ ४१ ॥ "त्वत्पादपद्मं भजतां महेश यद्धि न्यूनं विधिनोपदिष्टम् ॥ क्षमस्व सर्वं निगमागमप्रभो त्वत्रामसंस्तुत्यैव

बहिरेव गृहात्पादौ हस्तौ प्रक्षाल्य वारिणा ॥ भस्मस्नानं ततः कुर्याद्विधिवद्देहशुद्धये ॥ ३४ ॥ शोध्य भस्म यथान्यायं प्रणवेनाग्निहोत्रजम् ॥ ज्योतिः सूर्य इति प्रातर्जुहुयादुदिते यतः ॥ ३५ ॥ ज्योतिरग्निस्तथा सायं सम्यक चानुदिते मृषा ॥ तस्मादुदितहोमस्थं भसितं पावनं शुभम् ॥ ३६ ॥ नास्ति सत्यसमं यस्मादसत्यं पातकं च यत् ॥ ईशानेन शिरोदेशं मुखं तत्पुरुषेण च ॥ ३७ ॥ उरोदेशमघोरेण गुह्यं वामेन सुव्रताः ॥ सद्येन पादौ सर्वांगं प्रणवेनाभिषेचयेत् ॥ ३८ ॥ ततः प्रक्षालयेत्पादं हस्तं ब्रह्मविदां वरः ॥ व्यपोह्य भस्म चादाय देवदेव मनुस्मरन् ॥ ३९ ॥ मंत्रस्नानं ततः कुर्यादापोहिष्ठादिभिः क्रमात् ॥ पुण्यैश्चैव तथामंत्रैर्ऋग्यजुःसामसंभवैः ॥ ४० ॥ द्विजानां तु हितायैवं कथितं स्नानमद्य ते ॥ संक्षिप्य यः सकृत्कुर्यात्स याति परमं पदम् ॥ ४१ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे पञ्चयज्ञविधानं नाम षड्विंशोऽध्यायः ॥ २६ ॥

शैलादिरुवाच ॥ वक्ष्यामि शृणु संक्षेपाल्लिंगार्चनविधिक्रमम् ॥ वक्तुं वर्षशतेनापि न शक्यं विस्तरेण यत् ॥ १ ॥ एवं स्नात्वा यथान्यायं पूजास्थानं प्रविश्य च ॥ प्राणायामत्रयं कृत्वा ध्यायेद्देवं त्रियंबकम् ॥ २ ॥ पंचवक्त्रं दशभुजं शुद्धस्फटिकसन्निभम् ॥ सर्वाभरणसंयुक्तं चित्रांबरविभूषितम् ॥ ३ ॥ तस्य रूपं समाश्रित्य दहनप्लावनादिभिः ॥ शैवीं तनुं समास्थाय पूजयेत्परमेश्वरम् ॥ ४ ॥ देहशुद्धिं च कृत्वैव मूलमंत्रं न्यसेत्क्रमात् ॥ सर्वत्र प्रणवेनैव ब्रह्माणि च यथाक्रमम् ॥ ५ ॥ सूत्रे नमः शिवायेति छंदांसि परमे शुभे ॥ मंत्राणि सूक्ष्मरूपेण संस्थितानि यतस्ततः ॥ ६ ॥ न्यग्रोधबीजे न्यग्रोधस्तथा सूत्रे तु शोभने ॥ महत्यपि महद्ब्रह्म संस्थितं सूक्ष्मवत्स्वयम् ॥ ७ ॥

हि सर्वपूर्तिः ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षड्विंशोऽध्यायः ॥ २६ ॥ सप्तविंशे वर्ण्यतेऽस्मिँल्लिंगार्चनविधिः शुभः ॥ लिंगमूर्धनि पूजा च तोरण परमेशितुः ॥ १ ॥ शैलादिर्लिंगार्चनविधिं कथयति—वक्ष्यामीत्यादिना ॥ यल्लिंगार्चनविधानम् ॥ १ ॥ एवमुक्तप्रकारेण स्नात्वा स्नानत्रयं कृत्वा ॥ २ ॥ ३ ॥ ४ ॥ प्रणवेनैव युक्तं मूलमंत्रं न्यसेदित्यन्वयः ॥ ५ ॥ नमः शिवायेति सूत्रे परमे शुभे छंदांसि वेदाः मंत्राणि च सूक्ष्मरूपेण यतस्ततः संस्थितानीत्यन्वयः ॥ ६ ॥ अत्र दृष्टान्तमाह—न्यग्रोधेति । सूत्रे पंचाक्षरे महत्यपि अमहतीत्यर्थः । महद्ब्रह्म स्वयं साक्षात्सूक्ष्मवत्संस्थितमित्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ अवगुंठ्य अवगुह्येत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ बहुमूलं शतावरीम् ॥ १३ ॥ ॥ १४ ॥ अक्षतान् तंडुलान् आज्यं सिद्धार्थाः सर्षपाः पुष्पाणि चेति द्वंद्वः । भसितं भस्म ॥ १५ ॥ १६ ॥ वेदसारं प्रणवम् ॥ १७ ॥ ईशानाद्यैः "ईशानः सर्वविद्यानाम्" इत्या रभ्य रुद्राय नमोऽस्त्वित्यन्तैः पंचभिर्यजुर्मंत्रैः ॥ १८ ॥ १९ ॥ देवस्य पार्श्वतः शिवस्य दक्षिणपार्श्वे इत्यर्थः । हरिवक्त्रं वानरवन्मुखम् ॥ २० ॥ उत्तरे उत्तरपार्श्वे आत्मनः नंदिनो मम भार्याम् अंबायाः गौर्याः पादमंडनं पादालंकरणं तस्मिन् तत्परां नियुक्तामित्यर्थः ॥ २१ ॥ पंचभिः सद्योजातादिमंत्रैः ॥ २२ ॥ स्कंदं षडाननं विनायकं गजाननं देवीं पार्वतीं च

सेचयेदर्चनस्थानं गंधचंदनवारिणा ॥ द्रव्याणि शोधयेत्पश्चात्क्षालनप्रोक्षणादिभिः ॥ ८ ॥ क्षालनं प्रोक्षणं चैव प्रणवेन विधीयते ॥ प्रोक्षणीं चार्घ्यपात्रं च पाद्यपात्रमनुक्रमात् ॥ ९ ॥ तथा ह्याचमनीयार्थं कल्पितं पात्रमेव च ॥ स्थापयेद्विधिना धीमानवगुंठ्य यथाविधि ॥ १० ॥ दर्भैराच्छादयेच्चैव प्रोक्षयेच्छुद्धवारिणा ॥ तेषु तेष्वथ सर्वेषु क्षिपेत्तोयं सुशीतलम् ॥ ११ ॥ प्रणवेन क्षिपेत्तेषु द्रव्याण्यालोक्य बुद्धिमान् ॥ उशीरं चंदनं चैव पाद्ये तु परिकल्पयेत् ॥ १२ ॥ जातिकंकोलकर्पूरबहुमूलतमालकम् ॥ चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके ॥ १३ ॥ एवं सर्वेषु पात्रेषु दापयेच्चंदनं तथा ॥ कर्पूरं च यथान्यायं पुष्पाणि विविधानि च ॥ १४ ॥ कुशाग्रमक्षतांश्चैव यवव्रीहितिलानि च ॥ आज्यसिद्धार्थपुष्पाणि भसितं चार्घ्यपात्रके ॥ १५ ॥ कुशपुष्पयवव्रीहिबहुमूलतमालकम् ॥ दापयेत्प्रोक्षणीपात्रे भसितं प्रणवेन च ॥ १६ ॥ न्यसेत्पंचाक्षरं चैव गायत्रीं रुद्रदेवताम् ॥ केवलं प्रणवं वापि वेदसारमनुत्तमम् ॥ १७ ॥ अथ संप्रोक्षयेत्पश्चाद्द्रव्याणि प्रणवेन तु ॥ प्रोक्षणीपात्रसंस्थेन ईशानाद्यैश्च पंचभिः ॥ १८ ॥ पार्श्वतो देवदेवस्य नंदिनं मां समर्चयेत ॥ दीप्तानलायुतप्रख्यं त्रिनेत्रं त्रिदशेश्वरम् ॥ १९ ॥ बालेंदुमुकुटं चैव हरिवक्त्रं चतुर्भुजम् ॥ पुष्पमालाधरं सौम्यं सर्वाभरणभूषितम् ॥ २० ॥ उत्तरे चात्मनः पुण्यां भार्यां च मरुतां शुभाम् ॥ सुयशां सुव्रतां चांबापादमंडनतत्पराम् ॥ २१ ॥ एवं पूज्य प्रविश्यांतर्भवनं परमेष्ठिनः ॥ दत्त्वा पुष्पांजलिं भक्त्या पंचमूर्धसु पंचभिः ॥ २२ ॥ गंधपुष्पैस्तथा धूपैर्विविधैः पूज्य शंकरम् ॥ स्कंदं विनायकं देवीं लिंगशुद्धिं च कारयेत् ॥ २३ ॥ जप्त्वा सर्वाणि मंत्राणि प्रणवादिनमोंतकम् ॥ कल्पयेदासनं पश्चात्पद्माख्यं प्रणवेन तत् ॥ २४ ॥ तस्य पूर्वदलं साक्षादणिमामयमक्षरम् ॥ लघिमा दक्षिणं चैव महिमा पश्चिमं तथा ॥ २५ ॥ प्राप्तिस्तथोत्तरं पत्रं प्राकाम्यं पावकस्य तु ॥ ईशित्वं नैर्ऋतं पत्रं वशित्वं वायुगोचरे ॥ २६ ॥ सर्वज्ञत्वं तथैशान्यं कर्णिका सोम उच्यते ॥ सोमस्याधस्तथा सूर्यस्तस्याधः पावकः स्वयम् ॥ २७ ॥

संपूज्य लिंगशुद्धिं निर्माल्योद्वासनं कारयेत्कुर्यादित्यर्थः ॥ २३ ॥ प्रणवादिनमोन्तकं मंत्राणि ॐ निधनपतये इत्यारभ्य परमलिंगाय नम इत्यंतं जप्त्वा प्रणवेन तद्योगशास्त्रोक्तं पद्माख्यमासनं कल्पयेदित्यन्वयः ॥ २४ ॥ अणिमामयमणिमासिद्धिरूपमक्षरं नाशशून्यमित्यर्थः ॥ २५ ॥ २६ ॥ कर्णिकामध्यभागः सोमखंडः ॥ २७ ॥

धर्मादयो धर्मज्ञानवैराग्यैश्वर्यरूपाश्चत्वारः विदिक्षु आग्नेयादिविदिशासु अव्यक्तादि अव्यक्तमहत्तत्त्वाहंकारचित्तरूपं चतुष्टयं दिक्षु पूर्वादिदिशासु सोमस्यांते उपरि गुणत्रयं सत्त्वरजस्तमोरूपम् ॥ २८ ॥ तत्रश्चोर्ध्वं तदुपरि आत्मत्रयं विश्वतैजसप्राज्ञरूपं तस्यांते आत्मत्रयोपरि शिवपीठिका वेदी परिकल्पनीयेत्यन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ विधानेन पूर्वोक्तविधिना इत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ सितवस्त्रेण तोयस्य शुद्धिं शोधनं कृत्वेत्यन्वयः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ सकूर्चेन सपुष्पेण जलकुंभेन मंत्रपूर्वकं स्नापयेदित्यन्वयः ॥ ३९ ॥ यैर्मंत्रैः सकृदपि एवमुक्तप्रकारेण लिंगं स्नाप्य मानवः मुच्येत मुक्तो भवतीत्यन्वयः । अत्र यावन्मंत्रैरिति नोक्त्या सर्वेषां मुक्तिफलकत्वं बोधितमतः स्वस्वशाखोक्तैस्तथा यथोपलब्धैरन्यैरभिषेकः कार्य इति भावः । मंत्रज्ञा इति ऋषीणां विशेषणं पवमानेन पवमानसंज्ञकैस्तत्तच्छाखीयैर्मंत्रैरेवमग्रेऽपि बोध्यं वामीयेन वाममूक्तेन ॥ ४० ॥ रुद्रेण श्रीरुद्राध्यायेन सर्वमंत्रमध्ये

धर्मादयो विदिक्ष्वेते त्वनंतं कल्पयेत्क्रमात् ॥ अव्यक्तादिचतुर्दिक्षु सोमस्यांते गुणत्रयम् ॥ २८ ॥ आत्मत्रयं ततश्चोर्ध्वं तस्यांते शिवपीठिका ॥ सद्योजातं प्रपद्यामीत्यावाह्य परमेश्वरम् ॥ २९ ॥ वामदेवेन मंत्रेण स्थापयेदासनोपरि ॥ सान्निध्यं रुद्रगायत्र्या अघोरेण निरुध्य च ॥ ३० ॥ ईशानः सर्वविद्यानामिति मंत्रेण पूजयेत् ॥ पाद्यमाचमनीयं च विभोश्चार्घ्यं प्रदापयेत् ॥ ३१ ॥ स्नापयेद्विधिना रुद्रं गंधचंदनवारिणा ॥ पंचगव्यं विधानेन गृह्यपात्रेऽभिसंन्य च ॥ ३२ ॥ प्रणवेनैव गव्यैस्तु स्नापयेच्च यथाविधि ॥ आज्येन मधुना चैव तथा चेक्षुरसेन च ॥ ३३ ॥ पुण्यैर्द्रव्यैर्महादेवं प्रणवेनाभिषेचयेत् ॥ जलभांडैः पवित्रैस्तु मंत्रैस्तोयं क्षिपेत्ततः ॥ ३४ ॥ शुद्धिं कृत्वा यथान्यायं सितवस्त्रेण साधकः ॥ कुशापामार्गकर्पूरजातिपुष्पकचंपकैः ॥ ३५ ॥ करवीरैः सितैश्चैव मल्लिकाकमलोत्पलैः ॥ आपूर्य पुष्पैः सुशुभैः चंदनाद्यैश्च तज्जलम् ॥ ३६ ॥ न्यसेन्मंत्राणि तत्तोये सद्योजातादिकानि तु ॥ सुवर्णकलशेनाथ तथा वै राजतेन वा ॥ ३७ ॥ ताम्रेण पद्मपत्रेण पालाशेन दलेन वा ॥ शंखेन मृन्मयेनाथ शोधितेन शुभेन वा ॥ ३८ ॥ सकूर्चेन सपुष्पेण स्नापयेन्मंत्रपूर्वकम् ॥ मंत्राणि ते प्रवक्ष्यामि शृणु सर्वार्थसिद्धये ॥ ३९ ॥ यैर्लिंगं सकृदप्येवं स्नाप्य मुच्येत मानवः ॥ पवमानेन मंत्रज्ञाः तथा वामीयकेन च ॥ ४० ॥ रुद्रेण नीलरुद्रेण श्रीसूक्तेन शुभेन च ॥ रजनीसूक्तेनैव चमकेन शुभेन च ॥ ४१ ॥

ऽस्यैव माहात्म्यं शिवरहस्यदशमांशेऽप्युक्तम्—"वेदेषु शतरुद्रीयं देवतासु महेश्वरः ॥ क्षेत्रेषु चाविमुक्तं वै मंत्रे पंचाक्षरो वरः ॥ पूजाया अधिको होमो होमात्तर्पणमुत्तमम् ॥ तर्पणाच्च जपः श्रेष्ठो ह्यभिषेकः परो जपात् ॥ स्थावरे जंगमे लिंगे समाहितमनाः शुचिः ॥ न्यासध्यानादिसहितं पंचमेसूक्तपूर्वकम् ॥ प्रजपञ्छतरुद्रीयमभिषेकं समाचरेत् ॥ एकवारं द्विवारं वा त्रिवारं चमकान्वितम् ॥ उपासितः पंचमी प्रोक्ता शंभोः प्रीतिकरी शुभा ॥ जप्त्वा समंत्रं नमकं शतरुद्रीयमुत्तमम् ॥ चमकस्यानुवाकस्य चैकमेकं ततो जपेत् ॥ रुद्रैकाद शनीमेतां प्रजपञ्छंकरोपरि ॥ कुर्याद्यो ऽभिषेकं हि नियमेन ... निश्चितं शिवाभिषेके तु सदैव योज्यः॥"

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अस्य समग्रविधिः दशमोंशस्य सुधीभिर्ज्ञेयः । नीलरुद्रेणाथर्ववेदीयैस्तत्संज्ञकमंत्रैः । अन्यानि सूक्तसामादीनि ज्ञेयानि ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ छत्रं रत्नच्छत्रम् ॥४८॥ लिंगमूर्धनि शिवध्यानप्रकारमाह—तत इति त्रिभिः॥४९॥५०॥५१॥ लिंगमूर्धनि स्थितं प्रणवेनैव पूजयेदित्यनेनान्यमंत्रव्यावृत्तिर्बोधिता॥५२॥आत्मनि हृत्पुंडरीके शिवमारोपयेत स्थापयेदित्यर्थः ॥५३॥ अभ्यंतरे भवमाभ्यंतरं हृत्कमलभवमित्यर्थः ॥५४॥ "नानाविधोपचारैरर्चितलिंगं प्रतिष्ठितः सांब ॥ प्रणवप्रपूजितस्त्वं हृदयसरोजं ममाविश

होतारेणाथ शिरसा अथर्वेण शुभेन च ॥ शांत्या चाथ पुनः शांत्या भारुंडेनारुणेन च ॥ ४२ ॥ वारुणेन च ज्येष्ठेन तथा वेदव्रतेन च ॥ तथांतरेण पुण्येन सूक्तेन पुरुषेण च ॥ ४३ ॥ त्वरितेनैव रुद्रेण कपिना च कपर्दिना ॥ आवोराजेति साम्ना तु बृहच्चंद्रेण विष्णुना ॥ ४४ ॥ विरूपाक्षेण स्कंदेन शतरुद्रिभिः शिवैस्तथा ॥ पंचब्रह्मैश्च सूत्रेण केवलप्रणवेन च ॥ ४५ ॥ स्नापयेद्देवदेवेशं सर्वपापप्रशांतये ॥ वस्त्रं शिवोपवीतं च तथा ह्याचमनीयकम् ॥ ४६ ॥ गंधपुष्पं तथा धूपं दीपमन्नं क्रमेण तु ॥ तोयं सुगंधितं चैव पुनराचमनीयकम् ॥ ४७ ॥ मुकुटं च शुभं छत्रं तथा वै भूषणानि च ॥ दापयेत्प्रणवेनैव मुखवासादिकानि च ॥४८॥ ततः स्फटिकसंकाशं देवं निष्कलमक्षरम् ॥ कारणं सर्वदेवानां सर्वलोकमयं परम् ॥४९॥ ब्रह्मेंद्रविष्णुरुद्राद्यैर्ऋषिदेवैरगोचरम् ॥ वेदविद्भिर्हि वेदांतैस्त्वगोचरमिति श्रुतिः ॥ ५० ॥ आदिमध्यांतरहितं भेषजं भवरोगिणाम् ॥ शिवतत्त्वमिति ख्यातं शिवलिंगे व्यवस्थितम् ॥ ५१ ॥ प्रणवेनैव मंत्रेण पूजयेल्लिंगमूर्धनि ॥ स्तोत्रं जपेच्च विधिना नमस्कारं प्रदक्षिणम् ॥ ५२ ॥ अर्घ्यं दत्त्वाथ पुष्पाणि पादयोस्तु विकीर्य च ॥ प्रणिपत्य च देवेशमात्मन्यारोपयेच्छिवम् ॥ ५३ ॥ एवं संक्षिप्य कथितं लिंगार्चनमनुत्तमम् ॥ आभ्यंतरं प्रवक्ष्यामि लिंगार्चनमिहाद्य ते ॥ ५४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे लिंगार्चनविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥ शैलादिरुवाच ॥ आग्नेयं सौरममृतं बिंबं भाव्यं ततोपरि ॥ गुणत्रयं च हृदये तथा चात्मत्रयं क्रमात् ॥ १ ॥ तस्योपरि महादेवं निष्कलं सकलाकृतिम् ॥ कांतार्धारूढदेहं च पूजयेद्ध्यानविद्यया॥ २ ॥ ततो बहुविधं प्रोक्तं चिंत्यं तत्रास्ति चेद्यतः ॥ चिंतकस्य ततश्चिंता अन्यथा नोपपद्यते ॥ ३ ॥

प्रीतः ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥ अष्टाविंशे स्वहृदये श्रीसांबार्चा मनोमयी ॥ तत्कर्तृमहिमा चैव तत्त्वसंख्या निरूप्यते ॥१॥ शैलादिराभ्यंतरार्चनं कथयति–आग्नेयमित्यादिना।हृदये हृत्पुंडरीके आग्नेयं बिंबम् अग्निमंडलं बिंबम् 'प्रतिबिंबे च मंडले'इति विश्वः।ततोपरीत्यस्य सौरादावन्वयः अमृतं चंद्ररूपम् ॥१॥ निष्कलं शुद्धं सकलाकृतिं संपूर्णदेहं कांतारूपमर्धं कांतार्धं तेनारूढः युक्तः देहो यस्य ॥ २ ॥ ततः चिंतकस्य चिंत्यं तत्रास्ति चेद्बहुविधमनेकप्रकारं प्रोक्तमित्यन्वयः यतः कारणात्ततः तस्मिन् भेदबुद्ध्यभावे चिंता नोपपद्यते नोपपन्ना भवतीत्यर्थः॥३॥ तस्मात्कारणाद्यजमानः ध्येयं तथा ध्यानं प्रयोजनं तच्छिवरूपमेव स्मरेत् जानीयात् अन्यथा पुरुषस्य जीवस्येह शरीरे तत्सांबाख्यं ब्रह्म न जातु कदाचिदपि न बुद्ध्यते ज्ञायत इत्यर्थः ॥४॥ पुरुष एव यजमानस्तद्व्युत्पत्तिमाह पुर इति ॥५॥ यः ध्येयो महेश्वरः इत्यादि जानीयात्स प्रधानपुरुषेशानं शिवं याथातथ्यं वास्तवं प्रपद्यते प्राप्नोतीत्यन्वयः ॥ ६ ॥ षड्विंशतितत्त्वानि निरूपयति इह लैंगशास्त्रे वा लिंगशरीरे षड्विंशकः शिवो ध्येयः ध्याता जीवः अव्यक्तं प्रकृतिः महन्महत्तत्त्वम् आदित्रयोविंशतितमं येषां ते महदाद्याः ॥ ७ ॥ सप्त पूर्वोक्तान्निरूपयति महानित्यादिना । तन्मात्रं पंचकं शब्दादिगुणपंचकं कर्मेंद्रियाणि मुखहस्तपादपायूपस्थरूपाणि बुद्धींद्रियाणि श्रोत्रत्वक्चक्षुरसनाघ्राणरूपाणि तथा पंचेत्यर्थः ॥ ८ ॥ ततः पूर्वोक्ततत्त्वगणनया शिवः षड्विंशकः स एव विधेर्वेदस्यापि कर्ता भर्तेत्यन्वयः ॥९॥ हिरण्यगर्भं ब्रह्माणं जनयामास उत्पादयामास अत्र श्रुतिः"यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः॥ हिरण्यगर्भं पश्यत जायमान ँ स नो देवः शुभया स्मृत्या संयुनक्तु"

तस्माद्ध्येयं तथा ध्यानं यजमानः प्रयोजनम् ॥ स्मरेत्तन्नान्यथा जातु बुध्यते पुरुषस्य ह ॥४॥ पुरे शेते पुरं देहं तस्मात्पुरुष उच्यते ॥ याज्यं यज्ञेन यजते यजमानस्तु स स्मृतः ॥५॥ ध्येयो महेश्वरो ध्यानं चिंतनं निर्वृतिः फलम् ॥ प्रधानपुरुषेशानं याथातथ्यं प्रपद्यते ॥ ६ ॥ इह षड्विंशको ध्येयो ध्याता वै पंचविंशकः ॥ चतुर्विंशकमव्यक्तं महदाद्यास्तु सप्त च ॥ ७ ॥ महांस्तथा त्वहंकारं तन्मात्रं पंचकं पुनः ॥ कर्मेंद्रियाणि पञ्चैव तथा बुद्धींद्रियाणि च ॥ ८ ॥ मनश्च पंच भूतानि शिवः षड्विंशकस्ततः ॥ स एव भर्ता कर्ता च विधेरपि महेश्वरः ॥ ९ ॥ हिरण्यगर्भं रुद्रोऽसौ जनयामास शंकरः ॥ विश्वाधिकश्च विश्वात्मा विश्वरूप इति स्मृतः ॥ १० ॥ विना यथा हि पितरं मातरं तनयास्त्विह ॥ न जायंते तथा सोमं विना नास्ति जगत्त्रयम् ॥ ११ ॥ सनत्कुमार उवाच ॥ कर्ता यदि महादेवः परमात्मा महेश्वरः ॥ तथा कारयिता चैव कुर्वतोल्पात्मनस्तथा ॥१२॥ नित्यो विशुद्धो बुद्धश्च निष्कलः परमेश्वरः ॥ त्वयोक्तो मुक्तिदः किं वा निष्कलश्चेत्करोति किम् ॥ १३ ॥

अस्याः भाष्योक्तार्थः यो देवो हिरण्यगर्भं पश्यत साक्षात्करोति कीदृशं हिरण्यगर्भं देवानां प्रथमं अग्नींद्रादीनामादिभूतं जायमानमुत्पद्यमानं कीदृशो देवः :विश्वाधि विश्वस्य जगतः कारणत्वेन तस्मादधिको रुद्रः रुद्रैदिकः शब्दः यं द्रवति प्राप्नोतीति वेदप्रतिपाद्य इत्यर्थः। महर्षिः ऋषीणामतींद्रियद्रष्टृणां मध्ये महान् " यः सर्वज्ञः स सर्ववित् " इत्यादि श्रुतिप्रतिपाद्य इत्यर्थः । स देवस्तादृशः परमेश्वरः नोस्मान् शुभया स्मृत्या सर्वसंसारनिवर्तकत्वेन शोभमानया ब्रह्मतत्त्वानुस्मृत्या संयुनक्तु संयुक्तान् करोतु अनया मुक्तौ रुद्रद्वारा धनमेव मुख्यमिति बोध्यते ॥ १० ॥ ११ ॥ सनत्कुमारः महेश्वरे यदि सकलकर्तृत्वं तथा कारयितृत्वं चेत्सकलजीवानां पराधीनत्वादीश्वरे वैषम्यनैर्घृण्यविरहाच्च बंधमोक्षव्यवस्थाभावेन पूर्वोक्तं मुक्तिदातृत्वं महेश्वरे न संभवति एवं महेश्वरो निष्कलो निष्क्रियः " निष्कलं निष्क्रियम् " इति श्रुतेः । यद्वा निष्कलो द्वितीयः एवं चेत्तस्य कर्तृत्वं न संभवतीत्याशंकते कर्तेति द्वाभ्याम् । अल्पात्मनः जीवस्य जात्यभिप्रायमेकवचनम् ॥ १२ ॥ १३ ॥

शैलादिः समाधत्तेमहेश्वरस्य स्वतः निष्क्रियत्वेपि कालादिद्वारा कर्तृत्वमबाधितं यथा कनकांगुलीये कनकजन्यत्वामतीतावपि कटकादिजन्यत्वं व्यवह्रियते तथा सर्वं जगत्कालः करोति परमेश्वरः कालं कलयते प्रेरयतीति तस्य स्वतः कर्तृत्वकारयितृत्वाभावान्मुक्तिदत्वास्तेः। एवं निष्कलं निष्क्रियं मनः सर्वं विश्वरूपं शिवं मन्यते साक्षात्करोतीत्यतः सोपि निष्कलः निष्क्रियः तदुक्तं "मन एव मनुष्याणां कारणं बंधमोक्षयोः॥गुणेषु सक्तं बंधाय मोक्षाय तपसि स्थितम्" इति ॥ १४ ॥ वस्तुतः बंधमोक्षावप्यज्ञकल्पितावतः परमेश्वरस्य मोक्षदत्वाभावेपि न क्षतिरत आह कर्मणेति । सिद्धांतमतं प्रतिपादयति तस्य कर्मणा रूपेणेत्यर्थः सर्वं जगत्प्रतिष्ठितमविद्यकमपि प्रतिष्ठां प्राप्तमित्यर्थः तदुक्तमाचार्यैः"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" इति मूर्त्यष्टकमष्टमूर्तिरूपम् अत एव व्यावहारिकसत्तामादाय नैयायिकैर्व्योमदिशोर्भेदमंगीकृत्य भगवतोऽष्टमूर्तयएव मुख्यनवद्रव्यत्वेनोपपादिताः तदुक्तं 'क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः' इति ॥१५॥१६॥ विचारतः विचारेणावलोकिते सति एतच्चराचरं रुद्रस्य स्थूलं मायिकं रूपनित्य

शैलादिरुवाच ॥ कालः करोति सकलं कालं कलयते सदा ॥ निष्कलं च मनः सर्वं मन्यते सोपि निष्कलः ॥ १४ ॥ कर्मणा तस्य चैवेह जगत्सर्वं प्रतिष्ठितम् ॥ किमत्र देवदेवस्य मूर्त्यष्टकमिदं जगत् ॥ १५ ॥ विनाकाशं जगन्नैव विना क्ष्मां वायुना विना ॥ तेजसा वारिणा चैव यजमानं तथा विना ॥ १६ ॥ भानुना शशिना लोकस्तस्यैतास्तनवः प्रभोः ॥ विचारतस्तु रुद्रस्य स्थूलमेतच्चराचरम् ॥ १७ ॥ सूक्ष्मं वदंति ऋषयो यन्न वाच्यं द्विजोत्तमाः ॥ यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥ १८ ॥ आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥ न भेतव्यं तथा तस्माज्ज्ञात्वानंदं पिनाकिनः ॥ १९ ॥ विभूतयश्च रुद्रस्य मत्त्वा सर्वत्र भावतः ॥ सर्वं रुद्र इति प्राहुर्मुनयस्तत्त्वदर्शिनः ॥ २० ॥ नमस्कारेण सततं गौरवात्परमेष्ठिनः ॥ सर्वं तु खल्विदं ब्रह्म सर्वो वै रुद्र ईश्वरः ॥ २१ ॥ पुरुषो वै महादेवो महेशानः परः शिवः ॥ एवं विनिर्दिष्टो ध्यानं तत्रैव चिंतनम् ॥ २२ ॥ चतुर्व्यूहेण मार्गेण विचार्यालोक्य सुव्रत ॥ संसारहेतुः संसारो मोक्षहेतुश्च निर्वृतिः ॥ २३ ॥ चतुर्व्यूहः समाख्यातः चिंतकस्येह योगिनः ॥ चिंता बहुविधाख्याता सैकत्र परमेष्ठिना ॥ २४ ॥ सुनिष्ठेत्यत्र कथिता रुद्रं रौद्री न संशयः ॥ ऐंद्री चैन्द्रे तथा सौम्या सोमे नारायणे तथा ॥ २५ ॥

न्वयः ॥ १७ ॥ यत्तु सूक्ष्मं रूपं तन्न वाच्यं वक्तुमशक्यमित्यर्थः ॥ १८ ॥ " आनंदं ब्रह्मणो विद्वान् " इत्यादि श्रुतौ ब्रह्मशब्दो रुद्रवाचक एवेति प्रतिपादयति आनंदेति ॥ १९ ॥ 'ऋत ँ सत्यं परं ब्रह्म' इति श्रुतिप्रतिपादितं रुद्ररूपं वर्णयति विभूतय इत्यादिना त्रिभिः ॥ २० ॥ २१ ॥ २२ ॥ चतुर्व्यूहेनेति अन्नमयकोशस्य स्थूलरूपत्वात्तं परित्यज्य प्राणमनोविज्ञानानंदरूपैर्यद्वा ध्येयध्यानयजमानप्रयोजनरूपैः विचार्यालोक्यः सक्तो भवतीत्यन्वयः निर्वृतिर्विरागः ॥ २३ ॥ परमेष्ठिना ब्रह्मणा एकत्र बुद्धिरूपाधिष्ठाने तदुक्तं कैवल्योपनिषदि "अथाश्वलायनो भगवंतं परमेष्ठिनं परिसमेत्योवाच । अधीहि भगवन्ब्रह्मविद्याम्" इति । तस्मै स होवाच पितामहश्च श्रद्धा भक्तिध्यानयोगादवेहीत्यादिना ॥ २४ ॥ शोभना निष्ठा सुनिष्ठा जन्ममरणनिवर्तकत्वेन शोभमानेत्यर्थः रुद्रे शिवे रौद्री रुद्रे एव संबद्धा कथिताऽत्र संशयो नास्तीत्यन्वयः तदुक्तं शिवगीतायाम् "सर्वाकारो

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

हमेवैकः सच्चिदानंदविग्रहः॥मद्दर्शन परिच्छिन्ना देहाः सर्वे दिवौकसाम्॥ये त्वन्यदेवता भक्ता यजंते श्रद्धयान्विताः॥तेपि मामेव राजेंद्र यजंत्यविधिपूर्वकम्' इति॥ तथा च इंद्रादि रूपे रुद्रे तु मुख्या न भवतीति सूचितम् ॥ २५ ॥ एवं विचारतः सैवाहं सोऽहमित्येवं द्विधा भावतः मनः संस्थाप्येत्यन्वयः ॥ २६ ॥ असौ यः भक्तः तस्मादीश्वरादन्यो नास्ति अतः इयं चिंता ब्राह्मी अत्र संशयो नेत्यन्वयः। विप्र हे सनत्कुमार पूर्व चराचरं जगद्ब्रह्ममयम् एवं पूर्वोक्तप्रकारेण शिवाष्टमूर्तिरूपं ध्यायेदित्यन्वयः। अनेन साधकस्य परब्रह्मातिरिक्त मर्थं न भावयति यस्यां सा परार्थरूपा षष्ठी भूमिकोक्ता ॥ २७ ॥ षष्ठभूमौ सुस्थः पुरुषः अभिमतं ब्रह्मात्मकं शिवरूपमेव स्मरन् चराचरं चापि विभागं त्यजेदित्यन्वयः अनेन तुर्यगामिनी नाम सप्तमी ज्ञानभूमिरुक्ता एनां प्राप्तो न व्युत्थानं प्राप्नोतीत्यतः तत्स्थितिं निरूपयति त्याज्यमित्यादिना। सप्त भूमयश्चोक्ता योगवासिष्ठे "ज्ञानभूमिः शुभेच्छाख्या

सूर्ये वह्नौ च सर्वेषां सर्वत्रैवं विचारतः ॥ सैवाहं सोहमित्येवं द्विधा संस्थाप्य भावतः ॥ २६ ॥ भक्तोसौ नास्ति यस्तस्माच्चिंता ब्राह्मी न संशयः ॥ एवं ब्रह्ममयं ध्यायेत्पूर्वं विप्र चराचरम् ॥ २७ ॥ चराचरविभागं च त्यजेदभिमतं स्मरन् ॥ त्याज्यं ग्राह्यमलभ्यं च कृत्यं चाकृत्यमेव च ॥ २८ ॥ यस्य नास्ति सुतृप्तस्य तस्य ब्राह्मी न चान्यथा ॥ आभ्यंतरं समाख्यातमेवमभ्यर्चनं क्रमात् ॥ २९ ॥ आभ्यंतरार्चकाः पूज्या नमस्कारादिभिस्तथा ॥ विरूपा विकृताश्चापि न निंद्या ब्रह्मवादिनः ॥ ३० ॥ आभ्यंतरार्चकाः सर्वे न परीक्ष्या विजानता ॥ निंदका एव दुःखार्ता भविष्यंत्यल्पचेतसः ॥ ३१ ॥ यथा दारुवने रुद्रं विनिंद्य मुनयः पुरा ॥ तस्मात्सेव्या नमस्कार्याः सदा ब्रह्मविदस्तथा ॥ ३२ ॥ वर्णाश्रमविनिर्मुक्ता वर्णाश्रमपरायणैः ॥ ३३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवार्चनतत्त्वसंख्यादिवर्णनं नामाऽष्टाविंशोध्यायः ॥ २८ ॥

सनत्कुमार उवाच ॥ इदानीं श्रोतुमिच्छामि पुरा दारुवने विभो ॥ प्रवृत्तं तद्वनस्थानां तपसा भावितात्मनाम् ॥ १ ॥ कथं दारुवनं प्राप्तो भगवान्नील लोहितः ॥ विकृतं रूपमास्थाय चोर्ध्वरेता दिगंबरः ॥२॥ किं प्रवृत्तं वने तस्मिन्रुद्रस्य परमात्मनः ॥ वक्तुमर्हसि तत्त्वेन देवदेवस्य चेष्टितम्॥३॥ सूत उवाच ॥ तस्य तद्वचनं श्रुत्वा श्रुतिसारविदां वरः ॥ शिलादसूनुर्भगवान्प्राह किंचिद्द्रवं हसन् ॥ ४ ॥ शैलादिरुवाच ॥ मुनयो दारुगहने तपस्तेपुः सुदारुणम् ॥ तुष्ट्यर्थं देवदेवस्य सदारतनयाग्नयः ॥ ५ ॥

प्रथमा समुदाहृता ॥ विचारणा द्वितीयास्यात्तृतीया तनुमानसा ॥ १ ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततो संसक्तिनामिका ॥ परार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ २ ॥" एत द्व्याख्यानं श्रीब्रह्मानंदमेरुशास्त्रिकृतहठदीपिकाटीकायामवगम्यम्। अत्र ग्रंथविस्तरभयान्न लिख्यते ॥२८॥२९॥ उक्तप्रकारेणाभ्यंतरार्चकमाहात्म्यं निरूपयति आभ्यंतरेति चतुर्भिः ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ वर्णाश्रमपरायणैः साधकैरित्यर्थः अयं द्विपाच्छ्लोकः ॥३३॥ "चतुर्विंशतितत्त्वेभ्यः पृथग्भूतं महेश्वरम् ॥ ध्यानेनाभेददं सांबं पंचिब्रह्मकमुपास्महे ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टाविंशोध्यायः ॥ २८ ॥ एकोनत्रिंशदध्याये वृत्तं दारुवनौकसाम् ॥ सुदर्शनस्य चाख्यानं क्रमसंन्यासलक्षणम् ॥ १ ॥ सनत्कुमारः पूर्वोपदर्शितदारुवनस्थर्षिवृत्तांतं पृच्छति इदानीमिति ॥१॥२॥३॥ भवं स्मृत्वेत्यध्याहारः किंचिद्धसन्माहेत्यनेन भक्त्यतिशयो द्योत्यते ॥४॥ दाराश्च तनयाश्चाग्नयश्च तैः सहिताः सदारतनयाग्नयः ॥ ५ ॥ चेकितानः कित संशये रोगापनयने चास्माद्धृशार्थयङ्लुकि अनुदात्तेत्त्वादात्मनेपदं शानच् चर्करीतं चेति शब्लुकि द्वित्वेभ्यासस्य गुणे चेकि तान इति तथा च मायपात्यंतसंशयजनकस्तदुक्तं शिवगीतायाम् "जातं वापि शिवज्ञानं न विश्वासं भजत्यलम्" इति द्वितीयेत्यंतभवरोगनाशकः "भिषक्तमं त्वा भिषजां शृणोमि" इति श्रुतेः ॥ ६ ॥ दारुवनस्थानां प्रवृत्तिलक्षणं ज्ञानं श्रद्धया न वेति ज्ञातुं च परं स्वस्य क्रीडया तेषां परीक्षार्थं च यथाविति तृतीयस्येनान्वयः ॥ ७ ॥ ८ ॥ विषमे क्षणरूपक्षः मुग्धः

तुष्टो रुद्रो जगन्नाथश्चेकितानो वृषध्वजः ॥ धूर्जटिः परमेशानो भगवान्नीललोहितः ॥ ६ ॥ प्रवृत्तिलक्षणं ज्ञानं ज्ञातुं दारुवनौकसाम् ॥ परीक्षार्थं जगन्नाथः श्रद्धया क्रीडया च सः ॥ ७ ॥ निवृत्तिलक्षणज्ञानप्रतिष्ठार्थं च शंकरः ॥ देवदारुवनस्थानां प्रवृत्तिज्ञानचेतसाम् ॥ ८ ॥ विकृतं रूपमास्थाय दिग्वासा विषमेक्षणः ॥ मुग्धो द्विहस्तः कृष्णांगो दिव्यं दारुवनं ययौ ॥ ९ ॥ मंदस्मितं च भगवान्स्त्रीणां मनसिजोद्भवम् ॥ भ्रूविलासं च गानं च चकारातीव सुंदरः ॥ १० ॥ संप्रेक्ष्य नारीवृंदं वै मुहुर्मुहुरनंगहा ॥ अनंगवृद्धिमकरोदतीव मधुराकृतिः ॥ ११ ॥ वने तं पुरुषं दृष्ट्वा विकृतं नीललोहितम् ॥ स्त्रियः पतिव्रताश्चापि तमेवान्वयुरादरात् ॥ १२ ॥ वनोटजद्वारगताश्च नार्यो विस्रस्तवस्त्राभरणा विचेष्टाः ॥ लब्ध्वा स्मितं तस्य मुखारविंदाद् द्रुमालयस्थास्तमथान्वयुस्ताः ॥ १३ ॥ दृष्ट्वा काश्चिद्द्रवं नार्यो मदघूर्णितलोचनाः ॥ विलासबाह्यास्ता श्चापि भ्रूविलासं प्रचक्रिरे ॥ १४ ॥ अथ दृष्ट्वा परा नार्यः किंचित्प्रहसिताननाः ॥ किंचिद्विस्रस्तवसनाः स्रस्तकांचीगुणा जगुः ॥ १५ ॥ काश्चित्तदा तं विपिने तु दृष्ट्वा विप्रांगनाः स्रस्तनवांशुकं वा ॥ स्वान्स्वान्विचित्रान् वलयान्प्रविध्य मदान्विता बंधुजनांश्च जग्मुः ॥ १६ ॥ काचित्तदा तं न विवेद दृष्ट्वा विवासना स्रस्तमहांशुका च ॥ शाखाविचित्रान् विटपान्प्रसिद्धान्मदान्विता बंधुजनांस्तथान्याः ॥ १७ ॥ काश्चि ज्जगुस्तं ननृतुर्निपेतुश्च धरातले ॥ निषेदुर्गजवच्चान्या प्रोवाच द्विजपुंगवाः ॥ १८ ॥ अन्योन्यं सस्मितं प्रेक्ष्य चालिलिंगुः समंततः ॥ निरुध्य मार्गं रुद्रस्य नैपुणानि प्रचक्रिरे ॥ १९ ॥ को भवानिति चाप्युक्तं आस्यतामिति चापराः ॥ कुत्रेत्यथ प्रसीदेति जजल्पुः प्रीतमानसाः ॥ २० ॥ विपरीता निपेतुर्वै विस्रस्तांशुकमूर्धजाः ॥ पतिव्रताः पतीनां तु सन्निधौ भवमायया ॥ २१ ॥ दृष्ट्वा श्रुत्वा भवस्तासां चेष्टावाक्यानि चाव्ययः ॥ शुभं वात्यशुभं वापि नोक्तवान्परमेश्वरः ॥२२॥ दृष्ट्वा नारीकुलं विप्रास्तथाभूतं च शंकरम् ॥ अतीव परुषं वाक्यं जजल्पुस्ते मुनीश्वराः ॥२३॥

सुंदरः 'मुग्धः सुंदरमूढयोः' इति विश्वः ॥ कृष्णवदंगं यस्य स कृष्णांगः मोहकारक इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ विलासबाह्या वृद्धा इत्यर्थः ॥ १४ ॥ १५ ॥ स्रस्तनवांशुकं वा स्रस्तनवांशुकसदृशमिवार्थे वा शब्दः ॥१६॥ काचित्तं दृष्ट्वात्मानामिति शेषः अन्या शाखाविचित्रान् विटपान् तथा प्रसिद्धानपि बंधुजनान्न वि दुरित्यन्वयः ॥ १७ ॥ अन्याः गजवन्निषेदुः अन्या प्रोवाचेत्यन्वयः ॥ १८ ॥ नैपुणानि विलासान् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ नारीकुलं सम्भ्रम् ॥ २३ ॥

॥२४॥ २५ ॥ २६ ॥ २७ ॥ शापेन वसिष्ठशापेन ऋषीणामगस्त्यादीनामेतत्कथाद्वयं भारते विस्तृतम्॥२८॥अमृताधारः शुद्धजलाधारः 'पयः कीलालममृतम्' इत्यमरः। क्षीरोदः पीतपयस्त्वाद्द्वितीयः क्षारोदकत्वाच्चापेयः कृत इत्यन्वयः ॥ २९ ॥ अपूर्वक्षीरोदकथां सूचयति अविमुक्तेश्वरमित्यादिना ॥३०॥ स्वयं निषिक्तेनाभिषिक्तेनात एव देहे विमुक्तात्म्यलिंग शरीरे आश्लेषः संयोगो यस्य तादृशेन तीर्थभूतेनेत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ श्रीयुक्तं वत्समुरो यस्य सः श्रीवत्सो विष्णुः मुनेः पादपतनाद्भृगुलत्ताप्रहारादियं कथा भागवते

तपांसि तेषां सर्वेषां प्रत्याहन्यंत शंकरे ॥ यथादित्यप्रकाशेन तारका नभसि स्थिताः ॥ २४ ॥ श्रूयते ऋषिशापेन ब्रह्मणस्तु महात्मनः ॥ समृद्धश्रेयसां योनिर्यज्ञो वै नाशमाप्तवान् ॥ २५ ॥ भृगोरपि च शापेन विष्णुः परमवीर्यवान् ॥ प्रादुर्भावान्दश प्राप्तो दुःखितश्च सदा कृतः ॥ २६ ॥ इंद्रस्यापि च धर्मज्ञ छिन्नं सवृषणं पुरा ॥ ऋषिणा गौतमेनोर्व्यां क्रुद्धेन विनिपातितम् ॥ २७ ॥ गर्भवासो वसूनां च शापेन विहितस्तथा ॥ ऋषीणां चैव शापेन नहुषः सर्पतां गतः ॥ २८ ॥ क्षीरोदश्च समुद्रोसौ निवासः सर्वदा हरेः ॥ द्वितीयश्चामृताधारो ह्यपेयो ब्राह्मणैः कृतः ॥ २९ ॥ अविमुक्तेश्वरं प्राप्य वाराणस्यां जनार्दनः ॥ क्षीरेण चाभिषिच्येशं देवदेवं त्रियंबकम् ॥ ३० ॥ श्रद्धया परया युक्तो देहाश्लेषामृतेन वै ॥ निषिक्तेन स्वयं देवः क्षीरेण मधुसूदनः ॥ ३१ ॥ सेचयित्वाथ भगवान्ब्रह्मणा मुनिभिः समम् ॥ क्षीरोदं पूर्ववच्चक्रे निवासं चात्मनः प्रभुः ॥ ३२ ॥ धर्मश्चैव तथा शप्तो मांडव्येन महात्मना ॥ वृष्णयश्चैव कृष्णेन दुर्वासाद्यैर्महात्मभिः ॥ ३३ ॥ राघवः सानुजश्चापि दुर्वासेन महात्मना ॥ श्रीवत्सश्च मुनेः पादपतनात्तस्य धीमतः ॥ ३४ ॥ एते चान्ये च बहवो विप्राणां वशमागताः ॥ वर्जयित्वा विरूपाक्षं देवदेवमुमापतिम् ॥ ३५ ॥ एवं ह्रि मोहितास्तेन नावबुध्यंत शंकरम् ॥ अत्युग्रवचनं प्रोचुश्चैवोप्यंतरधीयत ॥ ३६ ॥ तेपि दारुवनात्तस्मात्प्रातः संविग्नमानसाः ॥ पितामहं महात्मान मासीनं परमासने ॥ ३७ ॥ गत्वा विज्ञापयामासुः प्रवृत्तमखिलं विभोः ॥ शुभे दारुवने तस्मिन् मुनयः क्षीणचेतसः ॥ ३८ ॥ सोपि संचिंत्य मनसा क्षणादेव पितामहः ॥ तेषां प्रवृत्तमखिलं पुण्ये दारुवने पुरा ॥ ३९ ॥ उत्थाय प्रांजलिर्भूत्वा प्रणिपत्य भवाय च ॥ उवाच त्वरं ब्रह्मा मुनीन्दारुवनालयान् ॥४०॥ धिग्युष्मान्प्राप्तनिधनान्महानिधिमनुत्तमम् ॥ वृथाकृतं यतो विप्रा युष्माभिर्भाग्यवर्जितैः॥४१॥यस्तु दारुवने तस्मिँ ल्लिंगी दृष्टोप्यलिंगिभिः ॥ युष्माभिर्विकृताकारः स एव परमेश्वरः ॥ ४२ ॥ गृहस्थैश्च न निंद्यास्तु सदा ह्यतिथयो द्विजाः ॥ विरूपाश्च सुरूपाश्च मलिनाश्चाप्यपंडिताः ॥ ४३ ॥ सुदर्शनेन मुनिना कालमृत्युरपि स्वयम् ॥ पुरा भूमौ द्विजाग्र्येण जितो ह्यतिथिपूजया ॥ ४४ ॥ अन्यथा नास्ति संतर्तुं गृहस्थैश्च द्विजोत्तमैः ॥ त्यक्त्वा चातिथिपूजां तामात्मनो भुवि शोधनम् ॥ ४५ ॥

विस्तृता 'उरो वत्सं च वक्षश्च' इत्यमरः ॥ ३४ ॥ ३५ ॥ तेन विकृतरूपेण ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ भवाय शिवाय ॥ ४० ॥ प्राप्तनिधनानपि युष्मान् धिक् यतः अनुत्तमं महानिधिं प्राप्यापि भाग्यवर्जितैर्युष्माभिः [illegible] शोधनं नास्तीत्यन्वयः ॥ ४५ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ५५ ॥ धर्मे धर्मरूपे द्विजे यद्वा धर्मे धर्मविषये आत्मानं स्वशरीरं निवे
जेतुं मृत्युमिति शेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ स्वं स्वशरीरम्

गृहस्थोपि पुरा जेतुं सुदर्शन इति श्रुतः ॥ प्रतिज्ञामकरोज्जायां भार्यामाह पतिव्रताम् ॥ ४६ ॥ सुव्रते सुभ्रु सुभगे शृणु सर्वं प्रयत्नतः ॥ त्वया वै
नावमंतव्या गृहे ह्यतिथयः सदा ॥ ४७ ॥ सर्व एव स्वयं साक्षादतिथिर्यत्पिनाकधृक् ॥ तस्मादतिथये दत्त्वा आत्मानमपि पूजय ॥ ४८ ॥ एवमु
क्ताथ संतप्ता विवशा सा पतिव्रता ॥ पतिमाह रुदंती च किमुक्तं भवता प्रभो ॥ ४९ ॥ तस्यांस्तद्वचनं श्रुत्वा पुनः प्राह सुदर्शनः ॥ देयं सर्वं
शिवायार्थे शिव एवातिथिः स्वयम् ॥ ५० ॥ तस्मात्सर्वे पूजनीयाः सर्वेप्यतिथयः सदा ॥ एवमुक्ता तदा भर्त्रा भार्या तस्य पतिव्रता ॥ ५१ ॥
शेषामिवाज्ञामादाय मूर्ध्ना सा प्राचरत्तदा ॥ परीक्षितुं तथा श्रद्धां तयोः साक्षाद्द्विजोत्तमाः ॥ ५२ ॥ धर्मो द्विजोत्तमो भूत्वा जगामाथ मुनेर्गृहम् ॥
तं दृष्ट्वाचार्चयामास सार्घाद्यैरनघा द्विजम् ॥ ५३ ॥ संपूजितस्तया तां तु प्राह धर्मो द्विजः स्वयम् ॥ भद्रे कुतः पतिर्धीमांस्तव भर्ता सुदर्शनः
॥ ५४ ॥ अन्नाद्यैरलमद्यार्ये स्वं दातुमिह चार्हसि ॥ सा च लज्जावृता नारी स्मरंती कथितं पुरा ॥ ५५ ॥ भर्त्रा न्यमीलयन्नेत्रे चचाल च
पतिव्रता ॥ किं चैत्याहं पुनस्तं वै धर्मे चक्रे च सा मतिम् ॥५६॥ निवेदितुं किलात्मानं तस्मै पत्युरिहाज्ञया ॥ एतस्मिन्नंतरे भर्ता तस्या नार्याः
सुदर्शनः ॥ ५७ ॥ गृहद्वारं गतो धीमांस्तामुवाच महामुनिः ॥ एह्येहि क्व गता भद्रे तमुवाचातिथिः स्वयम ॥ ५८ ॥ भार्यया त्वनया सार्धं
मैथुनस्थोहमद्य वै ॥ सुदर्शन महाभाग किंकर्तव्यमिहोच्यताम् ॥ ५९ ॥ सुरतांतस्तु विप्रेंद्र संतुष्टोहं द्विजोत्तम ॥ सुदर्शनस्ततः प्राह सुप्रहृष्टो
द्विजोत्तमः ॥ ६० ॥ भुंक्ष्व चैनां यथाकामं गमिष्येहं द्विजोत्तम ॥ हृष्टोथ दर्शयामास स्वात्मानं धर्मराट् स्वयम् ॥ ६१ ॥ प्रददौ चेप्सितं
सर्वं तमाह च महाद्युतिः ॥ एषा न भुक्ता विप्रेंद्र मनसापि सुशोभना ॥ ६२ ॥ मया चैषा न संदेहः श्रद्धां ज्ञातुमिहागतः ॥ जितो वै यस्त्वया
मृत्युर्धर्मेणैकेन सुव्रत ॥ ६३ ॥ अहोस्य तपसो वीर्यमित्युक्त्वा प्रययौ च सः ॥ तस्मात्तथा पूजनीयाः सर्वे ह्यतिथयः सदा ॥ ६४ ॥ बहुनात्र
किमुक्तेन भाग्यहीना द्विजोत्तमाः ॥ तमेव शरणं तूर्णं गंतुमर्हथ शंकरम् ॥ ६५ ॥ तस्य तद्वचनं श्रुत्वा ब्राह्मणो ब्राह्मणर्षभाः ॥ ब्रह्माणमभिवं
द्यातोः प्रोचुराकुलितेक्षणाः ॥ ६६ ॥

॥ ६२ ॥ ६३ ॥ तथा सुदर्शनवदित्यर्थः ॥ ६४ ॥ ६५ ॥ ६६ ॥
दितुं मतिं चक्रे इत्यग्रिमस्थैरन्वयः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१
॥ ७७ ॥ शिवरूपा विमुक्तिः कैवल्यरूपेत्यर्थः ॥ ७८ ॥ ७९ ॥ ८० ॥
॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६
सद्योपीत्ययं द्विपाच्छ्लोकः तदुक्तं भगवद्गीतायाम् "तपस्विभ्योऽधिको योगी ज्ञानि
शिवभक्तानां तु मुक्तये तादृशायासो नास्तीति भक्तमाहात्म्यं वर्णयति सद्योपीत्यादिना।
॥ श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति ॥ ८१ ॥ ८२ ॥
भ्योपि मतोधिकः ॥ कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ योगिनामपि सर्वेषां मद्गतेनांतरात्मना

॥ ६७ ॥ शप्तश्च सर्वगः शूली
ब्राह्मणा ऊचुः ॥ नापेक्षितं महाभाग जीवितं विकृताः स्त्रियः ॥ दृष्टोस्माभिर्महादेवो निंदितो यस्त्वनिंदितः
पिनाकी नीललोहितः ॥ अज्ञानाच्छापजा शक्तिः कुंठितास्य निरीक्षणात् ॥ ६८ ॥ वक्तुमर्हसि देवेश संन्यासं वै क्रमेण तु ॥ द्रष्टुं वै देवदेवेशमुग्रं
भीमं कपर्दिनम् ॥६९॥ पितामह उवाच ॥ आदौ वेदानधीत्यैव श्रद्धया च गुरोः सदा ॥ विचार्यार्थं मुनेर्धर्मान् प्रतिज्ञाय द्विजोत्तमाः ॥ ७० ॥
ग्रहणांतं हि वा विद्वानथ द्वादशवार्षिकम् ॥ स्नात्वाहृत्य च दारान्वै पुत्रानुत्पाद्य सुव्रतान् ॥ ७१ ॥ वृत्तिभिश्चानुरूपाभिस्तान्विभज्य सुतान्मु
निः ॥ अग्निष्टोमादिभिश्चेष्ट्वा यज्ञैर्यज्ञेश्वरं विभुम् ॥ ७२ ॥ पूजयेत्परमात्मानं प्राप्यारण्यं विभावसौ ॥ मुनिर्द्वादशवर्षं वा वर्षमात्रमथापि वा
॥ ७३ ॥ पक्षद्वादशकं वापि दिनद्वादशकं तु वा ॥ क्षीरभुक् संयतः शांतः सर्वान् संपूजयेत्सुरान् ॥ ७४ ॥ इष्ट्वैवं जुहुयादग्नौ यज्ञपात्राणि
मंत्रतः ॥ अप्सु वै पार्थिवं न्यस्य गुरवे तैजसानि तु ॥ ७५ ॥ स्वधनं सकलं चैव ब्राह्मणेभ्यो विशंकया ॥ प्रणिपत्य गुरुं भूमौ विरक्तः संन्यसे
द्यतिः ॥ ७६ ॥ निकृत्य केशान्सशिखानुपवीतं विसृज्य च ॥ पंचभिर्जुहुयादप्सु भूः स्वाहेति विचक्षणः ॥ ७७ ॥ ततश्चोर्ध्वं चरेदेवं यतिः
शिवविमुक्तये व्रतेनानशनेनापि तोयवृत्त्यापि वा पुनः ॥ ७८ ॥ पर्णवृत्त्या पयोवृत्त्या फलवृत्त्यापि वा यतिः ॥ एवं जीवन्मृतो नो चेत्पण्मासाद्वत्स
रात्तु वा ॥ ७९ ॥ प्रस्थानादिकमायासं स्वदेहस्य चरेद्यतिः ॥ शिवसायुज्यमाप्नोति कर्मणाप्येवमाचरन् ॥ ८० ॥ सद्योपि लभते मुक्तिं भक्तियुक्तो
दृढव्रताः ॥ ८१ ॥ त्यागेन वा किं विधिनाप्यनेन भक्तस्य रुद्रस्य शुभैर्व्रतैश्च ॥ यज्ञैश्च दानैर्विविधैश्च होमैर्लब्धैश्च शास्त्रैर्विविधैश्च वेदैः ॥ ८२ ॥
श्वेतेनैवं जितो मृत्युर्भवभक्त्या महात्मना ॥ वोस्तु भक्तिर्महादेवे शंकरे परमात्मनि ॥ ८३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे एकोनत्रिंशोध्यायः
॥ २९ ॥ शैलादिरुवाच ॥ एवमुक्तास्तदा तेन ब्रह्मणा ब्राह्मणर्षभाः ॥ श्वेतस्य च कथां पुण्यामपृच्छन्परमर्षयः ॥ १ ॥ पितामह उवाच ॥
श्वेतो नाम मुनिः श्रीमान्न गतायुर्गिरिगह्वरे ॥ सक्तोह्यभ्यर्च्यर्यद्भक्त्या तुष्टाव च महेश्वरम् ॥ २ ॥

॥८३॥ "ऋषिगणैः सकलैस्तपोयुतैर्मायया गतगतिं
श्वेतेन श्वेतमुनिनापि भवभक्त्या एवं मृत्युर्जितः परमात्मनि परमात्मरूपे शिवे शंकरे सुखकरे वः युष्माकं भक्तिरस्त्वित्यन्वयः
॥ २९ ॥ त्रिंशके षण्यंतेः
परमेशम् ॥ भक्तिगम्यमपवर्गदं शिवं सांबमेव हृदि भावये सदा ॥ १ ॥ " इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां मेकोनत्रिंशोध्यायः
॥ १ ॥ नमस्तेत्यादिना नमस्ते रुद्रमन्यव
ध्याये श्वेत आराध्य शंकरम् ॥ अंतकांतकमीशानं मृत्युग्रस्तोप्यमूमुचत् ॥ १ ॥ शैलादिः श्वेतमुनिकथां निरूपयति एवमित्यादिना

इत्यादि याजुषचतुर्थकांडीयपंचमप्रश्नरूपेण रुद्राध्यायेन रुद्रस्तुतिरूपत्वात्तत्संज्ञकाध्यायेन भक्त्या महेश्वरमभ्यर्च्य तुष्टाव चेत्यन्वयः। एतन्माहात्म्यमुक्तं वेदभाष्ये—"किं जपेनामृ
तत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ ॥ शतरुद्रीयकेणेति जाबाला आमनंति तत् ॥" तथा च शिवरहस्यदशमांशे उक्तम् "जपेत्समग्रं नमकं समग्रं चमकं तथा॥रुद्रमित्युच्यते सद्भिर्महाघौ
घविनाशनम् ॥ नमकं चमकैकेनानुवाकेन युतं जपेत् ॥ एवमेकादशावृत्त्या रुद्रैकादशनी स्मृता ॥ रुद्रैकादशनीं जप्त्वा तथैकादशनीं पुनः ॥ श्रीरुद्रमिति विद्वद्भिः कथ्यते भक्तिमुक्ति
दम् ॥ श्रीरुद्रैकादशावृत्त्या महारुद्रमुदाहृतम् ॥ तथैकादशधा जप्तमतिरुद्रमिति स्मृतम् ॥ मल्लिंगं त्वभिवीक्ष्य रुद्रज नमोवाक्यैः स्तुवन् भक्तितः शंभुं शांभवसत्तमोत्तमपदं प्राप्नोति
रुद्रं जपन् ॥ रुद्रेण प्रणमन्प्रदक्षिणविधिं कुर्वन्महापातकैर्मुक्तः श्रीशतरुद्रमंत्रजपकृच्छंभोरथांते गणः॥अस्मिन्समग्रनमके नामानि त्रिशतं द्विजाः॥तिष्ठंति श्रुतिसाराणि भक्तिमुक्तिप्र

रुद्राध्यायेन पुण्येन नमस्तेत्यादिना द्विजाः ॥ ततः कालो महातेजाः कालप्राप्तं द्विजोत्तमम् ॥ ३ ॥ नेतुं संचिंत्य विप्रेंद्राः सान्निध्यमकरोन्मुनेः ॥
श्वेतोपि दृष्ट्वा तं कालं कालप्राप्तोपि शंकरम् ॥ ४ ॥ पूजयामास पुण्यात्मा त्रियंबकमनुस्मरन् ॥ त्रियंबकं यजे देवं सुगंधिं पुष्टिवर्धनम् ॥ ५ ॥
किं करिष्यति मे मृत्युर्मृत्योर्मृत्युरहं यतः ॥ तं दृष्ट्वा सस्मितं प्राह श्वेतं लोकभयंकरः ॥ ६ ॥ एह्येहि श्वेत चानेन विधिना किं फलं तव ॥
रुद्रो वा भगवान् विष्णुर्ब्रह्मा वा जगदीश्वरः ॥७॥ कः समर्थः परित्रातुं मया ग्रस्तं द्विजोत्तम ॥ अनेन मम किं विप्र रौद्रेण विधिना प्रभोः ॥ ८ ॥
नेतुं यस्योत्थितश्चाहं यमलोकं क्षणेन वै ॥ यस्माद्गतायुस्त्वं तस्मान्मुने नेतुमिहोद्यतः ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा भैरवं धर्ममिश्रितम् ॥ हा रुद्र
रुद्ररुद्रेति ललाप मुनिपुंगवः ॥१०॥ तं प्राह च महादेवं कालं संप्रेक्ष्य वै दृशा ॥ नेत्रेण बाष्पमिश्रेण संभ्रांतेन समाकुलः ॥११॥ श्वेत उवाच ॥
त्वया किं काल नो नाथश्चास्ति चेद्धि वृषध्वजः ॥ लिंगेस्मिन्शंकरो रुद्रः सर्वदेवभवोद्भवः ॥१२॥ अतीव भवभक्तानां मद्विधानां महात्मनाम् ॥
विधिना किं महाबाहो गच्छ गच्छ यथागतम् ॥ १३ ॥

दानि हि॥एतैर्या नामभिर्लिंगे स्थावरे जंगमेपि वा॥पूजयेत्सा महापूजा तया प्रीणाति शंकरः॥"प्रणवादिपदजपविधानं तत्रैवोक्तं "ताराद्यंतपदं जपेद्यदि मुदा रुद्रं द्रुतोत्थं विना नत्वा
प्रांजलिरीशनाम फलयन्मुक्तो महापातकैः॥ भस्मोद्धूलितदेह एव हि जपञ्श्रीरुद्रमंत्रं द्विजो रुद्राक्षामलदेह एव हि भवेन्मुक्तो महापातकैः॥" इत्याद्यस्य माहात्म्यमनेकश्रुतिस्मृति
पुराणेषूक्तं सुधीभिरवगम्य कालप्राप्तं गतायुषम् ॥ ३ ॥ ४ ॥ शोभनः सुखकरो गंधः [illegible] "गंधो गंधक आमोदे लेशे संबन्धगर्वयोः" इति
विश्वः॥पुष्ट्या पोषणेन वर्धयति जगद्वृद्धिं प्रापयतीति पुष्टिवर्धनस्तम् पुष्टिर्वृद्धौ च पोषणे' इति विश्वः ॥ ५ ॥ यतः यत्प्रसादान्मृत्योरपि मृत्युरहं भविष्यामीत्यन्वयः ॥६॥७॥८॥
॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥१८ ॥ १९ ॥ २० ॥ वली अंतक जीवित ससर्जेत्यन्वयः ॥ २१ ॥ उच्चा उत्तमा धीर्यस्य सः उच्चधीः श्वेतमुनिः अंतकांतकं भवस्य दर्शनेनैव मृतं मृत्युं च निरीक्ष्य ऊर्ध्वं उच्चं यथा भवति तथा ननाद आनन्देनाव्यक्तशब्दं कृतवानित्यर्थः । विप्रपुंगवा इति मुनिसम्बोधनम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ वालधीरयमंतकः मृतः अस्य मुनेश्च प्रसीदेति गणेश्वरो नन्दी उवाचेत्यन्वयः ॥ २६ ॥ क्षणाद्ध्वस्तशरीरमंतकं भुवि दृष्ट्वा द्विजोत्तमं श्वेतमनुगृह्य ततो भगवान् गूढशरीरं गुप्तशरीरं विवेशेत्यन्वयः । अत्र

ततो निशम्य कुपितस्तीक्ष्णदंष्ट्रो भयंकरः ॥ श्रुत्वा श्वेतस्य तद्वाक्यं पाशहस्तो भयावहः ॥ १४ ॥ सिंहनादं महत्कृत्वा चास्फाल्य च मुहुर्मुहुः ॥ बबंध च मुनिं कालः कालप्राप्तं तमाह च ॥ १५ ॥ मया बद्धोसि विप्रर्षे श्वेतं नेतुं यमालयम् ॥ अद्य वै देवदेवेन तव रुद्रेण किं कृतम् ॥ १६ ॥ क्व शर्वस्तव भक्तिश्च क्व पूजा पूजया फलम् ॥ क्व चाहं क्व च मे भीतिः श्वेत बद्धोसि वै मया ॥ १७ ॥ लिंगेस्मिन् संस्थितः श्वेत तव रुद्रो महेश्वरः ॥ निश्चेष्टोसौ महादेवः कथं पूज्यो महेश्वरः ॥ १८ ॥ ततः सदाशिवः स्वयं द्विजं निहंतुमागतम् ॥ निहंतुमंतकं स्मयन्स्मरारियज्ञहा हरः ॥१९॥त्वरन् विनिर्गतः परः शिवः स्वयं त्रिलोचनः॥ त्रियंबकांबया समं सनंदिना गणेश्वरैः॥२०॥ ससर्ज जीवितं क्षणाद्भवं निरीक्ष्य वै भयात् ॥ पपातचाशु वै बली मुनेस्तु सन्निधौ द्विजाः ॥२१॥ ननाद चोर्ध्वमुच्चधीर्निरीक्ष्य चांतकांतकम् ॥ निरीक्षणेन वै मृतं भवस्य विप्रपुंगवाः ॥२२॥ विनेदुरुच्चमीश्वराः सुरेश्वरा महेश्वरम् ॥ प्रणेमुरंबिकामुमां मुनीश्वरास्तु हर्षिताः ॥ २३ ॥ ससर्जुरस्य मूर्ध्नि वै मुनेर्भवस्य खेचराः ॥ सुशोभनं सुशीतलं सुपुष्पवर्षमंबरात् ॥ २४ ॥ अहो निरीक्ष्य चांतकं मृतं तदा सुविस्मितः ॥ शिलाशनात्मजोव्ययं शिवं प्रणम्य शंकरम् ॥२५॥ उवाच वालधीर्मृतः प्रसीद चेति वै मुनेः ॥ महेश्वरं महेश्वरस्य चानुगो गणेश्वरः ॥ २६ ॥ ततो विवेश भगवाननुगृह्य द्विजोत्तमम ॥ क्षणाद्ध्व शरीरं हि ध्वस्तं दृष्ट्वांतकं क्षणात् ॥ २७ ॥ तस्मान्मृत्युंजयं चैव भक्त्या संपूजये द्विजाः ॥ मुक्तिदं भुक्तिदं चैव सर्वेषामपि शंकरम् ॥ २८ ॥ बहुना किं प्रलपेन संन्यस्याभ्यर्च्य वै भवम् ॥ भक्त्या चापरया तस्मिन् विशोका वै भविष्यथ ॥ २९ ॥ शैलादिरुवाच ॥ एवमुक्तास्तदा तेन ब्रह्मणा ब्रह्मवादिनः ॥ प्रसीद भक्तिर्देवेशे भवेद्रुद्रे पिनाकिनि ॥ ३० ॥

दर्शनादेव अन्तकोज्जीवनं सूचितम् ॥ २७ ॥ २८ ॥ अपरया अनन्यभावेनेत्यर्थः ॥ २९ ॥ ब्रह्मवादिनो ऋषयः देव ब्रह्मन्प्रसीद देवेशे रुद्रे पिनाकिनि केन तपसा वा केन यज्ञेन वा व्रतैर्भक्तिर्भवेदय भक्तिप्राप्त्यनंतरं द्विजातयो भगवद्भक्ता भविष्यंतीत्याहुरिति शेषमादायाग्रिमेणान्वयः ॥ ३० ॥
॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ मया नन्दिना यथा मृत्युर्जितस्तद्वत् श्वेतेनापि जित इत्यनेन स्वकथा सूचिता ॥ ३७ ॥ "यो नित्यं तव वल्लभो ह्यमृतद श्रीरुद्रसंज्ञो मनुः शैवानां सुखदायको द्रुततरं सर्वायसंहारकः॥ त्वत्पूजाहवनं च तर्पणजप लिंगाभिषेकः सदा तेन स्यात्स्तवनं च सांबपुरतो मृत्युंजय प्रार्थये" ॥ १॥ इति श्रीलिंग महापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिंशोऽध्यायः ॥ ३० ॥ एकत्रिंशे ऋषिगणा ब्रह्मप्रोक्तविधानतः ॥ तपसाराध्य देवेशं भावेन ददृशुः शिवम् ॥ १ ॥ सनत्कुमारः

केन वा तपसा देव यज्ञेनाप्यथ केन वा ॥ व्रतैर्वा भगवद्भक्ता भविष्यंति द्विजातयः ॥ ३१ ॥ पितामह उवाच ॥ न दानेन मुनिश्रेष्ठास्तपसा च न विद्यया ॥ यज्ञैर्होमैर्व्रतैर्वेदैर्योगशास्त्रैर्निरोधनैः ॥३२॥ प्रसादे नैव सा भक्तिः शिवे परमकारणे ॥ अथ तस्य वचः श्रुत्वा सर्वे ते परमर्षयः ॥ ३३ ॥ सदारतनयाः श्रांताः प्रणेमुश्च पितामहम् ॥ तस्मात्पाशुपती भक्तिर्धर्मकामार्थसिद्धिदा ॥३४॥ मुनेर्विजयदा चैव सर्वमृत्युजयप्रदा ॥ दधीचस्तु पुरा भक्त्यां हरिं जित्वामरैर्विभुम् ॥ ३५ ॥ क्षयं जघान पादेन वज्रास्थित्वं च लब्धवान् ॥ मयापि निर्जितो मृत्युर्महादेवस्य कीर्तनात् ॥ ३६ ॥ श्वेतेनापि गतेनास्यं मृत्योर्मुनिवरेण तु ॥ महादेवप्रसादेन जितो मृत्युर्यथा मया ॥ ३७ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे त्रिंशोध्यायः ॥ ३० ॥ सनत्कुमार उवाच ॥ कथं भवप्रसादेन देवदारुवनौकसः ॥ प्रपन्नाः शरणं देवं वक्तुमर्हसि मे प्रभो ॥ १ ॥ शैलादिरुवाच ॥ तानुवाच महाभागान्भगवानात्मभूः स्वयम् ॥ देवदारुवनस्थांस्तु तपसा पावकप्रभान् ॥ २ ॥ पितामह उवाच ॥ एष देवो महादेवो विज्ञेयस्तु महेश्वरः ॥ न तस्मात्परमं किंचित्पदं समधिगम्यते ॥ ३ ॥ देवानां च ऋषीणां च पितॄणां चैव स प्रभुः ॥ सहस्रयुगपर्यंते प्रलये सर्वदेहिनः ॥ ४ ॥ संहरत्येष भगवान् कालो भूत्वा महेश्वरः ॥ एष चैव प्रजाः सर्वाः सृजत्येकः स्वतेजसा ॥ ५ ॥ एष चक्री च वज्री च श्रीवत्सकृतलक्षणः ॥ योगी कृतयुगे चैव त्रेतायां क्रतुरुच्यते ॥ ६ ॥ द्वापरे चैव कालाग्निर्धर्मकेतुः कलौ स्मृतः ॥ रुद्रस्य मूर्तयस्त्वेता येऽभिध्यायंति पंडिताः ॥ ७ ॥ चतुरस्रं बहिश्चांतरष्टास्रं पिंडिकाश्रये ॥ वृत्तं सुदर्शनं योग्यमेवं लिंगं प्रपूजयेत् ॥ ८ ॥ तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुः प्रकाशकम् ॥ मूर्तिरेका स्थिता चास्य मूर्तयः परिकीर्तिताः ॥ ९ ॥ यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम् ॥ तस्माद्धि देवदेवेशमीशानं प्रभुमव्ययम् ॥१०॥

शैलादिं प्रति ऋषिवृत्तांतं पृच्छति कथमित्यादिना ॥ १ ॥ २ ॥ पितामहो ब्रह्मा शिव एव सर्वस्वरूप इति वर्णयति एष इत्यादिना ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तमस्तमो गुणः अग्निः रजो ब्रह्मा सत्त्वं विष्णुः इति परिकीर्तिता मूर्तयः अस्य शिवस्यैका मूर्तिरित्यन्वयः ॥ ९ ॥ योगेन समाधिना समन्वितं यत्र जीवे शिवरूपमिति शेषः । तिष्ठति तदेव ब्रह्म यद्वा योगेन पिंडिकायोगेन समन्वितं शिवरूपं लिंगं यत्र तिष्ठति तदेव ब्रह्मेत्यन्वयः । तस्यैव सर्वाधारत्वात्स्वस्यैव स्वाधिकरणत्वं बोध्यम् । तस्माद्ब्रह्मरूपत्वादीशानमाराधयंतीत्याग्रिमेणान्वयः ॥ १० ॥ ११ ॥ अंगुष्ठमात्रमंगुष्ठपरिमाणकमेव न तु ततो न्यूनमित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तस्य लिंगस्य वेदिमध्ये वेदिलग्नक इत्यर्थः "मध्यं न्यायेवकाशे च लग्नके लग्नकेधमे" । इति विश्वः ॥ १७ ॥ सबीजं पंचाक्षरमंत्रसहितं यथा स्यात्तथा ब्रह्मभिः सद्योजातादिमंत्रैः ॥ १८ ॥ यथालाभं यथालब्धद्रव्यैरित्यर्थः

आराधयंति विप्रेंद्रा जितक्रोधा जितेंद्रियाः ॥ लिंगं कृत्वा यथान्यायं सर्वलक्षणसंयुतम् ॥ ११ ॥ अंगुष्ठमात्रं सुशुभं सुवृत्तं सर्वसंमतम् ॥ समनाभं तथाष्टास्रं षोडशास्रमथापि वा ॥ १२ ॥ सुवृत्तं मंडलं दिव्यं सर्वकामफलप्रदम् ॥ वेदिका द्विगुणा तस्य समा वा सर्वसंमता ॥ १३ ॥ गोमुखी च त्रिभागैका वेद्या लक्षणसंयुता ॥ पट्टिका च समंताद्वै यवमात्रा द्विजोत्तमाः ॥ १४ ॥ सौवर्णं राजतं शैलं कृत्वा ताम्रमयं तथा ॥ वेदिकायाश्च विस्तारं त्रिगुणं वै समंततः ॥ १५ ॥ वर्तुलं चतुरस्रं वा षडस्रं वा त्रिरस्रकम् ॥ समंतान्निर्व्रणं शुभ्रं लक्षणैस्तत्सुलक्षितम् ॥ १६ ॥ प्रतिष्ठाप्य यथान्यायं पूजालक्षणसंयुतम् ॥ कलशं स्थापयेत्तस्य वेदिमध्ये तथा द्विजाः ॥ १७ ॥ सहिरण्यं सबीजं च ब्रह्मभिश्चाभिमंत्रितम् ॥ सेचयेच्च ततो लिंगं पवित्रैः पंचभिः शुभैः ॥ १८ ॥ पूजयेच्च यथालाभं ततः सिद्धिमवाप्स्यथ ॥ समाहिताः पूजयध्वं सपुत्राः सह बंधुभिः ॥ १९ ॥ सर्वे प्रांजलयो भूत्वा शूलपाणिं प्रपद्यत ॥ ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः ॥ २० ॥ यं दृष्ट्वा सर्वमज्ञानमधर्मश्च प्रणश्यति ॥ ततः प्रदक्षिणं कृत्वा ब्रह्माणममितौजसम् ॥ २१ ॥ संप्रस्थिता वनौकास्ते देवदारुवनं ततः ॥ आराधयितुमारब्धा ब्रह्मणा कथितं यथा ॥ २२ ॥ स्थंडिलेषु विचित्रेषु पर्वतानां गुहासु च ॥ नदीनां च विविक्तेषु पुलिनेषु शुभेषु च ॥ २३ ॥ शैवालशोभनाः केचित्केचिदंतर्जलेशयाः ॥ केचिदभ्रावकाशास्तु पादांगुष्ठाग्रधिष्ठिताः ॥ २४ ॥ दंतोलूखलिनस्त्वन्ये अश्मकुट्टास्तथापरे ॥ स्थानवीरासनास्त्वन्ये मृगचर्यारताः परे ॥ २५ ॥ कालं नयंति तपसा पूजया च महाधियः ॥ एवं संवत्सरे पूर्णे वसंते समुपस्थिते ॥ २६ ॥ ततस्तेषां प्रसादार्थं भक्तानामनुकंपया ॥ देवः कृतयुगे तस्मिन्गिरौ हिमवतः शुभे ॥ २७ ॥

तदुक्तं ब्रह्मोत्तरखंडे—"यथकल्पः स्वयं निःस्वो यथाविभवमर्चयेत् ॥ भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति ॥" ततः पूर्वोक्तविधिना सिद्धिमवाप्स्यथेत्यन्वयः ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥ २३ ॥ शैवाले शोभंति ते शैवालशोभनाः शैवालासना इत्यर्थः । अंतर्जले शयितं येषां तेंतर्जलेशयाः दर्भेषु अवकाशं ते ते दर्भावकाशाः पादांगुष्ठाग्रेणाधितिष्ठंति ते पादांगुष्ठाग्रधिष्ठिताः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भूमेः पुरा दोहप्रवर्तनमित्यनुक्रमणिकाध्याये उक्तत्वात् ॥ ४४ ॥ ४५ ॥ वर्तुं जीवितुं कामो यासां ताः वर्तुकामाः प्रजा इत्यर्थः कृषिं वार्तां कृषिरूपां जीविकां समायाताः प्राप्ताः कृषिकामप्रयत्नतः कृषिकामप्रयत्नः सार्वविभक्तिकस्तसिः वार्ता वृत्तिः समाख्याता कथितेत्यर्थः ॥ ४६ ॥ अन्यथा कृषिं विना तासां प्रजानामित्यर्थः हस्तादेवोद्भवः प्रादुर्भावो यासां ताः हस्तोद्भवाः खनित्रानपेक्षा इत्यर्थः अप इत्यत्र दीर्घाभावश्छांदसः ॥ ४७ ॥ युगवलेन युगशक्त्या बलाद्धठादित्यर्थः ॥ ४८ ॥ क्षताद्दुःखात्त्रातुं रक्षितुं क्षत्रियान् ससर्जेत्यन्वयः ॥ ४९ ॥ वृत्तेन स्वस्वधर्मेण वृत्तिना जीवनोपायेन वृत्तं जीवनं विश्वात्मा स्वयं निर्ममे इत्यन्वयः ॥ ५० ॥ तत्रापि त्रेतायामपि केचिन्मुमुक्षवः पशुयज्ञं पशुकरणकं यागं न

दुदोह गां प्रयत्नेन सर्वभूतहिताय वै ॥ तदाप्रभृति चौपध्यः फालकृष्टास्त्वितस्ततः ॥ ४५ ॥ वार्तां कृषिं समायाता वर्तुकामाः प्रयत्नतः ॥ वार्तावृत्तिः समाख्याता कृषिकामप्रयत्नतः ॥ ४६ ॥ अन्यथा जीवितं तासां नास्ति त्रेतायुगात्यये ॥ हस्तोद्भवा ह्यपश्चैव भवंति बहुशस्तदा ॥ ४७ ॥ तत्रापि जगृहुः सर्वे चान्योन्यं क्रोधमूर्छिताः ॥ सुतदारधनाद्यांस्तु बलाद्युगबलेन तु ॥ ४८ ॥ मर्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः ॥ ससर्ज क्षत्रियांस्त्रातुं क्षतात्कमलसंभवः ॥ ४९ ॥ वर्णाश्रमप्रतिष्ठां च चकार स्वेन तेजसा ॥ वृत्तेन वृत्तिना वृत्तं विश्वात्मा निर्ममे स्वयम् ॥ ५० ॥ यज्ञप्रवर्तनं चैव त्रेतायामभवत्क्रमात् ॥ पशुयज्ञं न सेवंते केचित्तत्रापि सुव्रताः ॥ ५१ ॥ बलाद्विष्णुस्तदा यज्ञमकरोत्सर्वदृक् क्रमात् ॥ द्विजास्तदा प्रशंसंति ततस्त्वाहिंसकं मुने ॥ ५२ ॥ द्वापरेष्वपि वर्तंते मतिभेदास्तदा नृणाम् ॥ मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति ॥ ५३ ॥ तदा तु सर्वभूतानां कायक्लेशवशात्क्रमात् लोभो भृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ॥ ५४ ॥ वेदशाखाप्रणयनं धर्माणां संकरस्तथा ॥ वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥ ५५ ॥ द्वापरे तु प्रवर्तंते रागो लोभो मदस्तथा ॥ वेदो व्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु ॥ ५६ ॥ एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ॥ संक्षयादायुषश्चैव व्यस्यते द्वापरेषु सः ॥ ५७ ॥

सेवंते इत्यन्वयः अत्र वर्तमानप्रयोगाच्छक्रशिलादसंवादस्त्रेतायामभवदिति भाति यद्वा वर्तमानसामीप्ये वर्तमानवद्वेति विहितोऽत्र लट् ॥ ५१ ॥ तदा त्रेतायुगे ततः पशुयज्ञकारिणः सकाशात् अहिंसकं मुमुक्षया केवलचरुपुरोडाशयाजिनं प्रशंसंति स्तुवंतीत्यर्थः अनेन कृते सर्वथा हिंसाभावादहिंसकप्रशंसा नासीदिति सूचितम् ॥ ५२ ॥ ५३ ॥ भृतिर्वेतनग्रहणेन सेवा वणिजां युद्धं वणिग्युद्धं वाणिज्यादिविवादः तत्त्वानां यथार्थवस्तूनामविनिश्चयः चित्तकालुष्यात्संशय इत्यर्थः ॥ ५४ ॥ वेदशाखानां प्रणयनं विभजनं धर्माणां संकरः अन्यधर्मप्रवृत्तिः वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां परिध्वंसः प्रायशो विनाशः ॥ ५५ ॥ द्वापरादिषु द्वापरादिकालेषु ॥ ५६ ॥ चतुष्पादऋगादिपादयुक्तः एकः समग्रः इह भूलोके त्रेतासु त्रेतासंज्ञकांतकालेषु विधीयते अधीयते इत्यर्थः ॥ ५७ ॥ ऋग्यजुःसाम्नां संहिताः सामान्या समानाः वैकृताः विभक्ताः दृष्टिविभ्रमैर्मतिभेदैर्मनीषिभिः ऋषिपुत्रैः पुनरन्यप्रकारेण मंत्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः पृथक्पृथक् संहन्यंते विभज्यंते इत्यग्रिमस्थैरन्वयः ॥ ५८ ॥ ५९ ॥ ब्राह्मणं विधिप्रशंसनमंत्रविनियोजकं कल्पसूत्राणि क्रियाप्रतिपादकसूत्राणि मंत्रप्रवचनानि मीमांसान्यायसूत्राणि चक्रुरिति शेषः। अन्ये तु तान्प्रस्थिताः तन्न्यूनताबोधका आसन्निति शेषः ॥ ६० ॥ इतिहासपुराणान्यपि कालगौरवात् अनेककल्पभेदात् भिद्यंते भेदविशिष्टानि भवंतीत्यर्थः। पुराणानुक्रमं कथयति–ब्राह्ममित्यादिसार्धद्वाभ्याम्। पुराणमानं तु भागवते द्वादशस्कंधे उक्तम्–"ब्राह्मं दश सहस्राणि पाद्मं पंचोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ दशाष्टौ श्रीभागवतं नारदं पंचविंशति ॥ १ ॥ मार्कंडं नव वाह्नं तु दशपंचचतुःशतम् ॥ चतुर्दश भविष्यं स्यात्तथा पंचशतानि च ॥ २ ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ ३ ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥ कौर्मं

ऋषिपुत्रैःपुनर्भेदा भिद्यंते दृष्टिविभ्रमैः ॥ मंत्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥ ५८ ॥ संहिता ऋग्यजुःसाम्नां संहन्यंते मनीषिभिः ॥ सामान्या वैकृताश्चैव दृष्टिभिस्तैः पृथक्पृथक् ॥ ५९ ॥ ब्राह्मणं कल्पसूत्राणि मंत्रप्रवचनानि च ॥ अन्ये तु प्रस्थितास्तान्वै केचित्तान्प्रत्यवस्थिताः ॥ ६० ॥ इतिहासपुराणानि भिद्यंते कालगौरवात् ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ ६१ ॥ भविष्यं नारदीयं च मार्कंडेयमतः परम् ॥ आग्नेयं ब्रह्मवैवर्तं लैंगं वाराहमेव च ॥ ६२ ॥ वामनाख्यं ततः कूर्मं मात्स्यं गारुडमेव च ॥ स्कांदं तथा च ब्रह्मांडं तेषां भेदः प्रकथ्यते ॥ ६३ ॥ लैंगमेकादशविधं प्रभिन्नं द्वापरे शुभम् ॥ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः ॥ ६४ ॥ यमापस्तंबसंवर्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशंखलिखिता दक्षगौतमौ ॥ ६५ ॥ शातातपो वसिष्ठश्च एवमाद्यैः सहस्रशः ॥ अवृष्टिर्मरणं चैव तथा व्याध्याद्युपद्रवाः ॥ ६६ ॥ वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायते ततः ॥ निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ ६७ ॥ विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम् ॥ दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः ॥ ६८ ॥

सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ ४ ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ ५ ॥" इति ॥ ६१ ॥ ६२ ॥ तथाच पूर्वोक्तप्रकारस्तेषां भेदः प्रकथ्यते वर्ण्यत इत्यर्थः ॥ ६३ ॥ शुभं कल्याणकरं लैंगम् एकादशविधमेकादशाख्यकं द्वापरे प्रभिन्नं विभक्तमित्यर्थः। वेदपुराणविभाजकऋषिमुख्यान्कथयति मन्वत्रीत्यादिना ॥ ६४ ॥ ६५ ॥ एवमाद्यैरेतन्मुख्यैः सहस्रशः सहस्रावधि ऋषिभिः भिद्यंत इति शेषः। वैराग्यं विना ज्ञानं न दृढं वैराग्यमपि दोषदर्शनं विना न तत्तु द्वापरादिषु कालेषु दुःखं विना न भवतीति तत्क्रमं निरूपयति अवृष्टिरित्यादिना। मरणमकालमृतिरित्यर्थः। व्याधिः रोगः आदिर्मुख्यो येषां ते चोरव्याघ्रराजकृताः उपद्रवाः उपसर्गा इत्यर्थः ॥ ६६ ॥ ततः उपद्रववशाद्वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायत इत्यन्वयः ॥ ६७ ॥ दोषाणां दर्शनाच्चैवेत्यत्र चकारात्पूर्वोक्तदुःखसंग्रहः एतदुभयादेव द्वापरे ज्ञानसंभव इत्यनेन कृतत्रेतयोस्तु ज्ञाने स्वाभाविकी प्रवृत्तिर्बोध्यते ॥ ६८ ॥ एषा पूर्वोक्ता रजस्तमोभ्यां युक्ता मिश्रा द्वापरे वृत्तिः प्रवृत्तिरित्यर्थः। आद्यकृते प्रथमकृतयुग इत्यर्थः। धर्मः अस्ति सर्वत्र वर्तत इत्यर्थः। तथा च तत्र धर्मज्ञानं स्वाभाविकमासीदिति सूचितं स धर्मस्त्रेतायां प्रवर्तते विधिचोदनया प्रवृत्तो भवतीत्यर्थः ॥ ६९ ॥ द्वापरे व्याकुलीभूत्वा पीडितो भूत्वा कलौ युगे प्रणश्यति प्रनष्टो भविष्यतीत्यर्थः ॥ ७० ॥ "कलावधर्मरोगेण ग्रस्तं मां पार्वतीपते ॥ कुरु विश्वेश निरुजं त्वत्स्मृत्यामृतरूपया ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ "चत्वारिंशे वर्ण्यंतेऽस्मिन्धर्माः कलियुगोद्भवाः ॥ कृतारंभक्रमो व्याख्या कल्पमन्वंतरस्य च ॥ १ ॥" शक्रः प्रथमतः कलियुगवृत्तांतं कथयति

एषा रजस्तमोयुक्ता वृत्तिव द्वापरे स्मृता ॥ आद्ये कृते तु धर्मोस्ति स त्रेतायां प्रवर्तते ॥ ६९ ॥ द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ७० ॥ इति श्रीलिंग महापुराणे पूर्वभागे एकोनचत्वारिंशोध्यायः ॥ ३९ ॥ शक्र उवाच ॥ तिष्ये मायामसूयां च वधं चैव तपस्विनाम्। साधयंति नरास्तत्र तमसा व्याकुलेंद्रियाः ॥ १ ॥ कलौ प्रमादको रोगः सततं क्षुद्भयानि च ॥ अनावृष्टिभयं घोरं देशानां च विपर्ययः ॥ २ ॥ न प्रामाण्यं श्रुतेरस्ति नृणां चाधर्मसेवनम् ॥ अधार्मिकास्त्वनाचारा महाकोपाल्पचेतसः ॥ ३ ॥ अनृतं ब्रुवते लुब्धास्तिष्ये जाताश्च दुष्प्रजाः ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ ४ ॥ विप्राणां कर्मदोषेण प्रजानां जायते भयम् ॥ नाधीयंते तदा वेदान्न यजंति द्विजातयः ॥ ५ ॥ उत्सीदंति नराश्चैव क्षत्रियाश्च विशः क्रमात् ॥ शूद्राणां मंत्रयोगेन संबंधो ब्राह्मणैः सह ॥ ६ ॥ भवतीह कलौ तस्मिञ्शयनासनभोजनैः ॥ राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयंति ते ॥ ७ ॥ भ्रूणहत्या वीरहत्या प्रजायंते प्रजासु वै ॥ शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥ ८ ॥ राजवृत्तिस्थिताश्चौराः चौराचाराश्च पार्थिवाः ॥ एकपत्न्यो न शिष्यंति वर्धिष्यंत्यभिसारिकाः ॥ ९ ॥ वर्णाश्रमप्रतिष्ठानो जायते नृषु सर्वतः ॥ तदा स्वल्पफला भूमिः क्वचिच्चापि महाफला ॥ १० ॥ अरक्षितारो हर्तारः पार्थिवाश्च शिलाशन ॥ शूद्रा वै ज्ञानिनः सर्वे ब्राह्मणैरभिवंदिताः ॥ ११ ॥ अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः ॥ आसनस्था द्विजान्दृष्ट्वा न चलंत्यल्पबुद्धयः ॥ १२ ॥ ताडयंति द्विजेंद्रांश्च शूद्रा वै स्वल्पबुद्धयः ॥ आस्ये निधाय वै हस्तं कर्णं शूद्रस्य वै द्विजाः ॥ १३ ॥ नीचस्येव तदा वाक्यं वदंति विनयेन तम्। उच्चासनस्थान् शूद्रांश्च द्विजमध्ये द्विजर्षभ ॥ १४ ॥ ज्ञात्वा न हिंसते राजा कलौ कालवशेन तु ॥ पुष्पैश्च वासितैश्चैव तथान्यैर्मंगलैः शुभैः ॥ १५ ॥ शूद्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः ॥ न प्रेक्षंते गर्वितांश्च शूद्रा द्विजवरान्द्विज ॥ १६ ॥

तिष्य इत्यादिना ॥ १ ॥ प्रमादकः प्रमादः रोगः क्षुद्भयानि च भवंतीति शेषः देशानां विपर्ययो नाशः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ मंत्रयोगेन मंत्रोपदेशयोगेन ॥ ६ ॥ ७ ॥ भ्रूणहत्या बालहत्या वीरहत्या विक्रांतपुरुषहत्या प्रजासु प्रजायंते ... इति तात्पर्यार्थः ... अभिसारिकाः व्यभिचारिकाः व्यभिचारिण्य इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ न हिंसते दंडं न करोतीत्यर्थः अन्यमंगलैर्गंधालंकरणादिभिः ॥ १५ ॥ अल्पं श्रुतं ज्ञानं भाग्यं प्रारब्धं बलं सामर्थ्यं तेनान्विताः

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

युक्ताः अतएव शूद्रान् शूद्रादीनित्यर्थः ॥ १६ ॥ वाहनस्थान् शूद्रान् समावृत्य परिवार्य शूद्रोपजीवनो ब्राह्मणाः सेवंत इत्यग्रिमेणान्वयः ॥ १७ ॥ १८ ॥ यतयः संन्यस्तवेषधारिणः ॥ १९ ॥ कर्माणि श्रौतस्मार्तादीनि ॥ २० ॥ धर्मस्य प्रतिष्ठार्थं संरक्षणार्थं विकृताकृतिः उच्छिन्नभिन्नलिंगस्वरूपः तथैवेदानीं काश्यादौ दृश्यमानत्वात्। तं विकृताकृतिमपि शंकरं ये पूर्वोक्ताचारा अपि विप्रा येन केनापि सदसद्धेतुनापि निषेवंते ते कलिदोषं विनिर्जित्य परमं पदं शिवपदं प्रयांति गच्छंतीत्यग्रिमेणान्वयः ॥ २१ ॥ २२ ॥ तदा कलौ दानमूलवान् सूक्ष्मोपि महोदर्कः ऐश्वर्यरूपः दुर्लभो भवेदिति शेषः॥२३॥२४॥अट्टशूला इति। अट्टो भक्तं वा शुल्कं कन्याद्रव्यं शूलो विक्रयो येषां ते अट्टशूलाः जनपदाः देशा इत्यर्थः॥अट्टो भक्ते च शुल्के च" इति विश्वः॥शिवो वेदः शूलो विक्रयो येषां ते शिवशूलाः चत्वारः पंथानो ब्रह्मचर्यादयो येषां ते चतुष्पथा ब्राह्मणा इत्यर्थः। यद्वा-शिवो योगांतरं

सेवावसरमालोक्य द्वारे तिष्ठंति वै द्विजाः ॥ वाहनस्थान्समावृत्य शूद्राञ्शूद्रोपजीविनः ॥ १७॥ सेवंते ब्राह्मणास्तत्र स्तुवंति स्तुतिभिः कलौ
तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः ॥ १८॥ यतयश्च भविष्यंति बहवोस्मिन्कलौ युगे॥ पुरुषाल्पं बहुस्त्रीकं युगांते समुपस्थिते ॥ १९॥
निन्दंति वेदविद्यां च द्विजाः कर्माणि वै कलौ॥ कलौ देवो महादेवः शंकरो नीललोहितः ॥ २०॥ प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः ॥
ये तं विप्रा निषेवंते येन केनापि शंकरम् ॥ २१॥ कलिदोषान् विनिर्जित्य प्रयांति परमं पदम् ॥ श्वापदप्रबलत्वं च गवां चैव परिक्षयः ॥२२॥
साधूनां विनिवृत्तिश्च वेद्या तस्मिन्युगक्षये॥ तदा सूक्ष्मो महोदर्को दुर्लभो दानमूलवान् ॥ २३॥ चातुराश्रमशैथिल्ये धर्मः प्रतिचलिष्यति ॥
अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः॥२४॥ युगांतेषु भविष्यंति स्वरक्षणपरायणाः॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ॥ २५॥
प्रमदाः केशशूलिन्यो भविष्यंति कलौ युगे॥ चित्रवर्षी तदा देवो यदा प्राहुर्युगक्षयम् ॥ २६॥ सर्वे वणिग्जनाश्चापि भविष्यंत्यधमे युगे॥
कुशीलचर्याः पाखंडैर्वृथारूपैः समावृताः॥२७॥ बहुयाजनको लोको भविष्यति परस्परम्॥ नाव्याहृतक्रूरवाक्यो नार्जवी नानसूयकः ॥ २८॥
न कृते प्रतिकर्ता च युगक्षीणे भविष्यति॥ निंदकाश्चैव पतिता युगांतस्य च लक्षणम् ॥ २९॥ नृपशून्या वसुमती न च धान्यधनावृता॥
मंडलानि भविष्यंति देशेषु नगरेषु च॥ ३०॥

व्यभिचारादिरूपं शूलो विक्रयो येषु ते शिवशूलाः चतुष्पथाश्चतुर्मार्गा इत्यर्थः 'चतुष्पथश्चतुर्मार्गे संगमे ब्राह्मणेपि च" इति मेदिनी । "शिवो हरे वेदे योगांतरे च" इति विश्वः ॥२५॥प्रमदाः स्त्रियः केशशूलाः भगविक्रयिण्यः कलौ युगे भविष्यंतीत्यग्रिमेणान्वयः । एतदेवोक्तं भारतव्याख्यातृभिः "अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः॥ केशो भगं समाख्यातं शूलं तद्विक्रयं विदुः"इति।चित्रमाश्चर्यकरं वर्षति तच्छीलः चित्रवर्षी कदाचित्सुवृष्टिकर इत्यर्थः॥२६॥वणिग्जनाः वार्धुषिका इत्यर्थः।कुत्सितं शीलं चर्या च येषां ते कुशीलचर्याः वृथारूपैः दांभिकैः पाखंडैरवैदिकमार्गैः समावृताः युक्ता इत्यर्थः ॥ २७ ॥ बहुयाजनको ग्रामयाजनकः लोको जनः परस्परमव्याहृतक्रूरवाक्यो न आर्जवी ऋजुस्वभावः न अनसूयकः गुणेषु दोषदर्शकः न कृते प्रतिकर्ता प्रत्युपकारकश्च न भविष्यतीत्यग्रिमेणान्वयः ॥ २८ ॥ २९ ॥ नृपशून्या रक्षकशून्या इत्यर्थः मंडलानि जनशून्यस्थलानि॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ प्रनष्टचेष्टनाः निरुद्योगा इत्यर्थः मुक्तः केशो ह्रीबेरं येस्ते मुक्तकेशाः "केशो दैत्यांतरे बाले ह्रीबेरे कुंतलेपि च " इति विश्वः। ह्रीबेरं लज्जामूलं शीलमिति चतुर्धरैर्भारतव्याख्यायामुक्तम् तथा च त्यक्तलज्जा इत्यर्थः शूलिनः रोगविशिष्टा यद्वा पण्यस्त्रीविशिष्टाः इत्यर्थः "शूलं केतके रोगयोगयोः॥ कीलके पण्ययोषिति" इति विश्वः ॥ ३३ ॥ अजिनं कृष्णाजिनमक्षाः रुद्राक्षा येषां ते अजिनाक्षाः शुक्लदंताश्च ते अजिनाक्षाश्च शुक्लदंताजिनाक्षाः यतिवेषधारका इत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ कौशिकीं तत्सं

अल्पोदका चाल्पफला भविष्यति वसुंधरा ॥ गोप्तारश्चाप्यगोप्तारः संभविष्यंत्यशासनाः॥ ३१॥ हर्तारः परवित्तानां परदारप्रधर्षकाः॥ कामा
त्मानो दुरात्मानो ह्यधमाः साहसप्रियाः॥ ३२ ॥ प्रनष्टचेष्टनाः पुंसो मुक्तकेशाश्च शूलिनः॥ जनाः षोडशवर्षाश्च प्रजायंते युगक्षये ॥ ३३ ॥
शुक्लदंताजिनाक्षाश्च मुंडाः काषायवाससः ॥ शूद्रा धर्मं चरिष्यंति युगांते समुपस्थिते ॥ ३४ ॥ सस्यचौरा भविष्यंति दृढचैलाभिलाषिणः ॥
चौराश्चोरस्वहर्तारो हर्तुर्हर्ता तथापरः ॥३५॥ योग्यकर्मण्युपरते लोके निष्क्रियतां गते॥ कीटमूषकसर्पाश्च धर्षयिष्यंति मानवान् ॥ ३६॥ सुभिक्षं
क्षेममारोग्यं सामर्थ्यं दुर्लभं तदा ॥ कौशिकीं प्रतिपत्स्यंते देशान्क्षुद्भयपीडिताः ॥ ३७॥ दुःखेनाभिप्लुतानां च परमायुः शतं तदा॥ दृश्यंते न
च दृश्यंते वेदाः कलियुगेऽखिलाः॥ ३८॥ उत्सीदंति तदा यज्ञा केवलाधर्मपीडिताः॥ काषायिणोप्यनिर्ग्रंथाः कापालीबहुलास्त्विह ॥ ३९ ॥
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे॥ वर्णाश्रमाणां ये चान्ये पाखंडाः परिपंथिनः॥ ४०॥ उत्पद्यंते तदा ते वै संप्राप्ते तु कलौ युगे ॥ अधी
यंते तदा वेदाञ्शूद्रा धर्मार्थकोविदाः॥ ४१ ॥ यजंते चाश्वमेधेन राजानः शूद्रयोनयः॥ स्त्रीबालगोवधं कृत्वा हत्वा चैव परस्परम् ॥ ४२॥
उपद्रवांस्तथान्योन्यं साधयंति तदा प्रजाः ॥ दुःखप्रभूतमल्पायुर्देहोत्सादः सरोगता ॥ ४३॥ अधर्माभिनिवेशित्वात्तमोवृत्तं कलौ स्मृतम् ॥
प्रजासु ब्रह्महत्यादि तदा वै संप्रवर्तते॥ ४४॥ तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते॥ तदा त्वल्पेन कालेन सिद्धिं गच्छंति मानवाः॥ ४५॥
धन्या धर्मं चरिष्यंति युगांते द्विजसत्तमाः॥ श्रुतिस्मृत्युदितं धर्मं ये चरंत्यनसूयकाः॥ ४६॥ त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः ॥
यथाक्लेशं चरन्प्राज्ञस्तदह्ना प्राप्नुते कलौ॥ ४७॥

ज्ञकां नदीमित्यर्थः ॥ ३७ ॥ ३८ ॥ अनिर्ग्रंथा मूर्खा इत्यर्थः ॥३९॥४०॥४१॥४२॥४३॥४४॥४५॥४६॥ प्राज्ञः सुज्ञः यथाक्लेशं यथाशक्ति कलौ अह्ना दिवसेन चरन्नाचरन् आप्नुते प्राप्नोतीत्यर्थः एतदेवोक्तं विष्णुपुराणे "यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्॥ द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ॥१॥ तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः ॥ प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्" इति ॥ ४७ ॥४८॥ स्वांशेषु संध्यांशेषु पादशः पादेन न्यूना इति शेषः प्रतिष्ठिता इत्यन्वयः ॥४९॥५०॥ कल्किप्रादुर्भावं कथयति गोत्रेति स्वायंभुवेंतरे प्रमितिः य उच्यते सः मानवस्य मनुपुत्रस्यांशेन अस्मिन्कलिसमाप्तिकाले नाम्ना चंद्रमसो गोत्रे सोमशर्मकब्राह्मणगोत्र इत्यर्थः उत्पन्न इति शेषः ॥ ५१ ॥ समाः वर्षाणीत्यर्थः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ प्रवृत्तचक्रः प्रवृत्ताज्ञामंडलः ॥ ५६ ॥ ननु कल्किसंज्ञो विष्णोरवतार इति प्रसिद्धमत्र मानवांशत्वेन पूर्वमुक्त इति विरोधाशंक

एषा कलियुगावस्था संध्यांशं तु निबोध मे ॥ युगेयुगे च हीयंते त्रींस्त्रीन्पादांस्तु सिद्धयः॥ ४८ ॥ युगस्वभावाः संध्यास्तु तिष्ठंतीह तु पादशः ॥
संध्यास्वभावाः स्वांशेषु पादशस्ते प्रतिष्ठिताः॥ ४९ ॥ एवं संध्यांशके काले संप्राप्ते तु युगांतिके ॥ तेषां शास्ता ह्यसाधूनां भूतानां निधनोत्थितः
॥ ५० ॥ गोत्रेस्मिन्वै चंद्रमसो नाम्ना प्रमितिरुच्यते॥ मानवस्य तु सोंशेन पूर्वं स्वायंभुवेंतरे ॥ ५१ ॥ समाः सविंशतिः पूर्णा पर्यटन्वै वसुंध
राम् ॥ अनुकर्षन्स वै सेनां सवाजिरथकुंजराम् ॥५२॥ प्रगृहीतायुधैर्विप्रैः शतशोथ सहस्रशः॥ स तदा तैः परिवृतो म्लेच्छान्हंति सहस्रशः॥५३॥
स हत्वा सर्वशश्चैव राज्ञस्ताञ्शूद्रयोनिजान्॥ पाखंडांस्तु ततः सर्वान्निःशेषं कृतवान् प्रभुः॥ ५४॥ नात्यर्थं धार्मिका ये च तान् सर्वान् हंति
सर्वतः॥ वर्णव्यत्यासजाताश्च ये च तानुनुजीविनः॥ ५५॥ प्रवृत्तचक्रो बलवान् म्लेच्छानामंतकृत्स तु॥ अधृष्यः सर्वभूतानां चचाराथ वसुं
धराम् ॥ ५६ ॥ मानवस्य तु सोंशेन देवस्येह विजज्ञिवान् ॥ पूर्वजन्मनि विष्णोस्तु प्रमितिर्नाम वीर्यवान् ॥ ५७ ॥ गोत्रतो वै चंद्रमसः पूर्णे
कलियुगे प्रभुः॥ द्वात्रिंशेभ्युदिते वर्षे प्रक्रांतो विंशतिः समाः॥ ५८॥ विनिघ्नन्सर्वभूतानि शतशोथ सहस्रशः॥ कृत्वा बीजावशेषां तु पृथिवीं
क्रूरकर्मणः॥ ५९॥ परस्परनिमित्तेन कोपेनाकस्मिकेन तु॥ ससाधयित्वा वृषलान् प्रायशस्तानधार्मिकान्॥ ६०॥ गंगायमुनयोर्मध्ये स्थितिं
प्राप्तः सहानुगः॥ ततो व्यतीते काले तु सामात्यः सह सैनिकः॥ ६१॥ उत्साद्य पार्थिवान् सर्वान् म्लेच्छांश्चैव सहस्रशः॥ तत्र संध्यांशके
काले संप्राप्ते तु युगांतिके॥ ६२॥ स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित्क्वचित्॥ अप्रग्रहास्ततस्ता वै लोभाविष्टास्तु कृत्स्नशः ॥ ६३ ॥

मपनुदति मानवस्येति पूर्वजन्मनि यः प्रमितिर्नाम तु पुनः इह भरतखंडे विष्णोर्देवस्य तु चांशे मानवस्यांशेन चंद्रमसः गोत्रे कलियुगे पूर्णे विजज्ञिवानित्यग्रिमश्लोकैरन्वयः तस्य उभयांशकत्वाच्छककर्तेति व्यवहारोपि संगतः॥ ५७॥ विंशतिः समाः प्रक्रांतः प्रक्रममाणः द्वात्रिंशे वर्षेभ्युदिते सति सहानुगः गंगायमुनयोर्मध्ये स्थितिं प्राप्त इत्येकषष्टितमेनान्वयः ॥ ५८ ॥ ५९ ॥ सादयित्वा घातयित्वा ॥ ६० ॥ ६१ ॥ ६२ ॥ ततः कल्क्यवतारसमाप्त्यनंतरम् यद्वा सर्वकलियुगेषु कल्क्यवताराभावात्तदुपलक्षितकालानंतरमित्यर्थः ॥ ६३ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रणिपत्य उपहिंसंति विश्वस्य घातयंतीत्यर्थः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ प्रत्यंतान् म्लेच्छदेशान् " प्रत्यंतो म्लेच्छदेशः स्यात् " इत्यमरः ॥ ६९ ॥ ७० ॥ ॥ ७१ ॥ निर्वेदाद्दुःखाद्विचारणा विचारश्छेदित्यर्थः ॥ ७२ ॥ स्वयमल्पशमयुक्ताः अशक्तिमूलकशांतियुक्ता इत्यर्थः ॥ ७३ ॥ अहोरात्रादहोरात्रेण तासां सुतमत्तवत्संमोहनं कृत्वा युगं कलियुगं परिवर्तते निवृत्तं भवतीत्यर्थः ॥७४॥७५॥ इह ये सप्त सिद्धाः अदृष्टास्तिष्ठंति विचरंति चेत्यग्रिमस्थसप्तपदस्यात्रान्वयो बोध्यः सप्त सिद्धास्तु व्यपोहनस्तवे उक्ताः–

उपहिंसंति चान्योन्यं प्रणिपत्य परस्परम् ॥ अराजके युगवशात्संशये समुपस्थिते ॥ ६४ ॥ प्रजास्ता वै ततः सर्वाः परस्परभयार्दिताः ॥ व्याकुलाश्च परिभ्रांतास्त्यक्त्वा दारान् गृहाणि च ॥ ६५ ॥ स्वान्प्राणान नपेक्षंतो निष्कारुण्याः सुदुःखिताः ॥ नष्टे श्रौते स्मार्तधर्मे परस्परहतास्तदा ॥ ६६ ॥ निर्मर्यादा निराक्रांता निःस्नेहा निरपत्रपाः ॥ नष्टे धर्मे प्रतिहताः ह्रस्वकाः पंचविंशकाः ॥ ६७ ॥ हित्वा पुत्रांश्च दारांश्च विवादव्याकुलेंद्रियाः ॥ अनावृष्टिहताश्चैव वार्तामुत्सृज्य दूरतः ॥ ६८ ॥ प्रत्यंतानुपसेवंते हित्वा जनपदान्स्वकान् ॥ सरित्सागरकूपांस्ते सेवंते पर्वतांस्तथा ॥ ॥ ६९ ॥ मधुमांसैर्मूलफलैर्वर्तयंति सुदुःखिताः ॥ चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः ॥ ७० ॥ वर्णाश्रमपरिभ्रष्टाः संकटं घोरमास्थिताः ॥ एवं कष्टमनुप्राप्ता अल्पशेषाः प्रजास्तदा ॥ ७१ ॥ जराव्याधिक्षुधाविष्टा दुःखान्निर्वेदमानसाः ॥ विचारणा तु निर्वेदात्साम्यावस्था विचारणा ॥ ७२ ॥ साम्यावस्थात्मको बोधः संबोधाद्धर्मशीलता ॥ अल्पशमयुक्तास्तु कलिशिष्टा हि वै स्वयम् ॥ ७३ ॥ अहोरात्रात्तदा तासां युगं तु परिवर्तते ॥ चित्तसंमोहनं कृत्वा तासां वै सुतमत्तवत् ॥ ७४ ॥ भाविनोऽर्थस्य च बलात्ततः कृतमवर्तत ॥ प्रवृत्ते तु ततस्तस्मिन्पुनः कृतयुगे तु वै ॥ ७५ ॥ उत्पन्नाः कलिशिष्टास्तु प्रजाः कार्तयुगास्तदा ॥ तिष्ठंति चेह ये सिद्धा अदृष्टा विचरंति च ॥ ७६ ॥ सप्तसप्तर्षिभिश्चैव तत्र ते तु व्यवस्थिताः ॥ ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह ॥ ७७ ॥ कलिजैः सह ते सर्वे निर्विशेषास्तदाऽभवन् ॥ तेषां सप्तर्षयो धर्मं कथयंतीतरेऽपि च ॥ ७८ ॥ वर्णाश्रमाचारयुतं श्रौतं स्मार्तं द्विधा तु यम् ॥ ततस्तेषु क्रियावत्सु वर्धंते वै प्रजाः कृते ॥ ७९ ॥ श्रौतस्मार्तकृतानां च धर्मे सप्तर्षिदर्शिते ॥ केचिद्धर्मव्यवस्थार्थं तिष्ठंतीह युगक्षये ॥ ८० ॥ मन्वंतराधिकारेषु तिष्ठंति मुनयस्तु वै ॥ यथा दावप्रदग्धेषु तृणेष्विह ततः क्षितौ ॥ ८१ ॥ वनानां प्रथमं वृष्ट्या तेषां मूलेषु संभवः ॥ तथा कार्तयुगानां तु कलिजेष्विह संभवः ॥८२॥ एवं युगाद्युगस्येह संतानं तु परस्परम् ॥ वर्तते ह्यव्यवच्छेदाद्यावन्मन्वंतरक्षयः ॥ ८३ ॥ सुखमायुर्बलं रूपं धर्मोऽर्थः काम एव च ॥ युगेष्वेतानि हीयंते त्रींस्त्रीन्पादान्क्रमेण तु ॥ ८४ ॥

"मंत्रज्ञो मंत्रविन्प्राज्ञो मंत्रराट् सिद्धपूजितः ॥ सिद्धवत्परमः सिद्धः सर्वसिद्धिप्रदायिनः" इति ॥ ७६ ॥ ७७ ॥ सप्तर्षिभिः कश्यपादिभिस्तदुक्तं–"कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ वसिष्ठो जमदग्निश्च सप्तर्षय उदाहृताः" इति ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ युगेषु कृतत्रेताद्वापरेषु त्रींस्त्रीन् पादान् त्रिपादत्रिपादमित इत्यर्थः ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ अनार्जवम् ऋजुताभावः जडीभावः आलस्यमायुगक्षयपाद्यंत इति शेषः ॥ ८७ ॥ ८८ ॥ ८९ ॥ सर्गेसर्गे यथा पंचविंशत्परिमिताः पचविंशतितत्त्वरूपा इत्यर्थः । तदुक्तमुत्तरभागे–"शिवजातानितत्त्वानि पंचविंशन्मनीषिभिः ।" इति । न न्यूनाधिका यथा उत्पद्यंते तथा कल्पा भवंतीत्यग्रिमेणान्वयः ॥ ९० ॥ ९१ ॥९२॥९३॥९४॥९५॥९६॥ देवाः अष्टविधाः अष्टप्रकारा इत्यर्थः ते च अमरोक्ताः बोध्याः "आदित्यविश्ववसवस्तुषिता भास्वरानिलाः ॥ महाराजिकसाध्याश्च रुद्राश्च गणदेवताः" इति ॥ ९७ ॥ ९८ ॥९९॥

ससंध्यांशेषु हीयंते युगानां धर्मसिद्धयः ॥ इत्येषा प्रतिसिद्धिर्वै कीर्तितेषा क्रमेण तु ॥ ८५ ॥ चतुर्युगानां सर्वेषामनेनैव तु साधनम् ॥ एषा चतुर्युगावृत्तिरासहस्राद्गुणीकृता ॥ ८६ ॥ ब्रह्मणस्तदहः प्रोक्तं रात्रिश्चैतावती स्मृता ॥ अनार्जवं जडीभावो भूतानामायुगक्षयात् ॥ ८७ ॥ एतदेव तु सर्वेषां युगानां लक्षणं स्मृतम् ॥ एषां चतुर्युगाणां च गुणिता ह्येकसप्ततिः ॥ ८८ ॥ क्रमेण परिवृत्तातु मनोरंतरमुच्यते ॥ चतुर्युगे यथैकस्मिन्भवतीह यदा तु यत् ॥ ८९ ॥ तथा चान्येषु भवति पुनस्तद्वै यथाक्रमम् ॥ सर्गेसर्गे यथा भेदा उत्पद्यंते तथैव तु ॥ ९० ॥ पंचविंशत्परिमिता न न्यूना नाधिकास्तथा ॥ तथा कल्पा युगैः सार्धं भवंति सह लक्षणैः ॥९१॥ मन्वंतराणां सर्वेषामेतदेव तु लक्षणम् ॥ ९२ ॥ यथा युगानां परिवर्तनानि चिरप्रवृत्तानि युगस्वभावात् ॥ तथा तु संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ॥ ९३ ॥ इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ॥ अतीतानागतानां हि सर्वमन्वंतरेषु वै ॥ ९४ ॥ मन्वंतरेण चैकेन सर्वाण्येवांतराणि च ॥ व्याख्यातानि न संदेहः कल्पः कल्पेन चैव हि ॥ ९५ ॥ अनागतेषु तद्वच्च तर्कः कार्यो विजानता ॥ मन्वंतरेषु सर्वेषु अतीतानागतेष्विह ॥ ९६ ॥ तुल्याभिमानिनः सर्वे नामरूपैर्भवंत्युत ॥ देवा ह्यष्टविधा ये च ये च मन्वंतरेश्वराः ॥ ९७ ॥ ऋषयो मनवश्चैव सर्वे तुल्यप्रयोजनाः ॥ एवं वर्णाश्रमाणां तु प्रविभागो युगेयुगे ॥९८॥ युगस्वभावश्च तथा विधत्ते वै तदा प्रभुः ॥ वर्णाश्रमविभागाश्च युगानि युगसिद्धयः ॥ ९९ ॥ युगानां परिमाणं ते कथितं हि प्रसंगतः ॥ वदामि देविपुत्रत्वं पद्मयोनेः समासतः ॥ १०० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे चतुर्युगपरिमाणं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ इंद्र उवाच ॥ पुनः ससर्ज भगवान्प्रभ्रष्टाः पूर्ववत्प्रजाः ॥ सहस्रयुगपर्यंते प्रभाते तु पितामहः ॥ १ ॥

देविपुत्रत्वं दाक्षायणीपुत्रत्वं पद्मयोनेर्ब्रह्मण इत्यर्थः ॥ १०० ॥ "भवतश्चरमापत्यप्रेम्णा धन्यः कलिर्यथा सांब ॥ तद्वन्मम चरमोयं देहो भूयाच्च वै सतां मान्यः॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥ एकचत्वारिंशके तु पुत्रता परमेष्ठिनः ॥ देव्याः परस्पराज्जन्म त्रिमूर्तीनां च वर्ण्यते ॥ १ ॥ अत्रादाविन्द्रः पूर्वोक्तं ब्रह्मणो देवीपुत्रत्वं शिलादाय कथयति पुनरित्यादिना ॥ भगवान्पितामहः सहस्रयुगपर्यंते निशाकाले प्रभ्रष्टाः नष्टाः पूर्ववत्प्रजाः प्रभाते तु ससर्जेत्यन्वयः ॥ १ ॥ महाप्रलयं वर्णयति एवमिति । धरा अंभस्युदके व्याप्ता प्रविष्टेत्यर्थः ॥२॥ तन्मात्रसंयुतः गंधादिमात्रायुक्त इत्यर्थः॥३॥४॥ अव्यक्तं प्रधानं स्वगुणैः सत्त्वादिभिः भवे शिव इत्यर्थः॥ ॥ ५ ॥ ततः शिवोपादानात्पुरुषात्पुरुषरूपात्तस्माच्छिवात्सृष्टिरभूदित्यन्वयः । एतदेवोक्तं शिवपुराणे–"नान्यत्किंचित्तदा ह्यासत्प्रिकृतिं पुरुषं विना ॥ एतस्मिन्नंतरे ब्रह्मस्तत्वान्यान्वयः ॥ १० ॥ अथ दाहानंतरम् आत्मनः अर्धमात्रामर्धपरिमाणामित्यर्थः । योगमार्गेण चिंतनरूपेणेत्यर्थः ॥ ११ ॥ १२ ॥ तस्यां परेश्वर्यां हरिं ब्रह्माणं पाशुपतमन्त्रं च ससर्ज

एवं परार्धे विप्रेंद्र द्विगुणे तु तथा गते ॥ तदा धरांभसि व्याप्ता ह्यापो वह्नौ समीरणे ॥२॥ वह्निः समीरणश्चैव व्योम्नि तन्मात्रसंयुतः ॥ इंद्रियाणि दशैकं च तन्मात्राणि द्विजोत्तम ॥ ३ ॥ अहंकारमनुप्राप्य प्रलीनास्तत्क्षणादहो ॥ अभिमानस्तदा तत्र महांतं व्याप्य वै क्षणात् ॥ ४ ॥ महानपि तथा व्यक्तं प्राप्य लीनोऽभवद्द्विज ॥ अव्यक्तं स्वगुणैः सार्धं प्रलीनमभवद्भवे ॥ ५ ॥ ततः सृष्टिरभूत्तस्मात्पूर्ववत्पुरुषाच्छिवात् ॥ अथ सृष्टास्तदा तस्य मनसा तेन मानसाः॥६॥ न व्यवर्धंत लोकेऽस्मिन्प्रजाः कमलयोनिना ॥ वृद्ध्यर्थं भगवान्ब्रह्मा पुत्रैर्वै मानसैः सह ॥ ७ ॥ दुश्चरं विचचारेशं समुद्दिश्य तपः स्वयम् ॥ तुष्टस्तु तपसा तस्य भवो ज्ञात्वा सर्वांछितम् ॥ ८ ॥ ललाटमध्यं निर्भिद्य ब्रह्मणः पुरुषस्य तु ॥ पुत्रत्वमगमद्देवः स्त्रीपुंरूपो भवत्तदा ॥ ९ ॥ तस्य पुत्रो महादेवो ह्यर्धनारीश्वरोऽभवत् ॥ ददाह भगवान्सर्वं ब्रह्माणं च जगद्गुरुम् ॥ १० ॥ अथार्धमात्रां कल्याणीमात्मनः परमेश्वरीम् ॥ बुभुजे योगमार्गेण वृद्ध्यर्थं जगतां शिवः ॥ ११ ॥ तस्यां हरिं च ब्रह्माणं ससर्ज परमेश्वरः ॥ विश्वेश्वरस्तु विश्वात्मा चास्त्रं पाशुपतं तथा ॥ १२ ॥ तस्माद्ब्रह्मा महादेव्याश्चांशजश्च हरिस्तथा ॥ अंडजः पद्मजश्चैव भवांगभव एव च॥१३॥ एतत्ते कथितं सर्वमितिहासं पुरातनम् ॥ परार्धं ब्रह्मणो यावत्तावद्भूतिः समासतः ॥ १४ ॥ वैराग्यं ब्रह्मणो वक्ष्ये तमोद्भूतं समासतः ॥ नारायणोऽपि भगवान्द्विधाः कृत्वात्मनस्तनुम् ॥ १५ ॥ ससर्ज सकलं तस्मात्स्वांगादेव चराचरम् ॥ ततो ब्रह्माणमसृजद्ब्रह्मा रुद्रं पितामहः ॥ १६ ॥ मुने कल्पांतरे रुद्रो हरिं ब्रह्माणमीश्वरम् ॥ ततो ब्रह्माणमसृजन्मुने कल्पांतरे हरिः ॥ १७ ॥

उत्पादयामासेत्यर्थः ॥ १३ ॥ ब्रह्मणः यावत्परार्धं तावद्भूतिरैश्वर्यमित्यर्थः ॥ १४ ॥ ब्रह्मणस्तमोद्भूतं वैराग्यं वक्ष्ये अग्रे कथयिष्यामीत्यन्वयः । ब्रह्मविष्णुरुद्राणां परस्परसर्गं कथयति नारायणेत्यादिना त्रिभिः । एतदेव वर्णितं [illegible] कालिदासेन–"एकैव मूर्तिर्बिभिदे त्रिधा सा [illegible] विष्णोर्हरस्तस्य हरिः कदाचिद्धातु तयोस्तावपि धातुराद्यौ" इति ॥ १५ ॥ १६ ॥ १७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदा लयकाल इत्यर्थः ॥ १८ ॥ ब्रह्मसमाधिं वर्णयति सर्गमित्यादिना ॥ १९ ॥ २०॥२१॥ स्थापयामास भावनया निश्चलं चकारेत्यर्थः तदा समाधिकाले ॐ इति ॐकारशब्दसंबंधिनी या अर्धमात्रारूपा तस्माद्यः परः नादस्तस्मादपि परं नादमतिपाद्यमित्यर्थः "नादाख्यं ब्रह्मसंज्ञितम्" इति सतदशोक्तत्वात् शिवं देवमयजदिति चतुर्विंशश्लोकेनान्वयः॥२२॥ मृणालतंतुभागैकशतभागे व्यवस्थितमित्यनेनातिसूक्ष्मपीतवह्निशिखामध्यवर्तित्वं बोधितम् तथा च श्रुतिः "नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥ तस्याः शिखाया मध्ये हि परमात्मा व्यवस्थितः" इति एतादृशध्यानफलं शिवगीतायामुक्तम्–"वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम् ॥ मामात्मस्थं येऽनुपश्यंति धीरास्तेषां शांतिः

नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥ तदा विचार्य वै ब्रह्मा दुःखं संसार इत्यजः ॥ १८ ॥ सर्गं विसृज्य चात्मानमात्मन्येव नियोज्य च ॥ संहृत्य प्राणसंचारं पाषाण इव निश्चलः ॥ १९ ॥ दशवर्षसहस्राणि समाधिस्थो भवत्प्रभुः ॥ अधोमुखं तु यत्पद्मं हृदि संस्थं सुशोभनम् ॥२०॥ पूरितं पूरकेणैव प्रबुद्धं चाभवत्तदा॥तदूर्ध्वैवक्त्रमभवत्कुंभकेन निरोधितम् ॥ २१ ॥ तत्पद्मकर्णिकामध्ये स्थापयामास चेश्वरम् ॥ तदोमिति शिवं देवमर्धमात्रापरं परम् ॥ २२ ॥ मृणालतंतुभागैकशतभागे व्यवस्थितम् ॥ यमी यमविशुद्धात्मा नियम्यैव हृदीश्वरम् ॥ २३ ॥ यमपुष्पादिभिः पूज्यं याज्यो ह्ययजदव्ययम् ॥ तस्य हृत्कमलस्थस्य नियोगाचांराजो विभुः ॥ २४ ॥ ललाटमस्य निर्भिद्य प्रादुरासीत्पितामहात् ॥ लोहितो भूत्स्वयं नीलः शिवस्य हृदयोद्भवः ॥ २५ ॥ वह्नेश्चैव तु संयोगात्प्रकृत्या पुरुषः प्रभुः ॥ नीलश्च लोहितश्चैव यतः कालाकृतिः पुमान् ॥ २६ ॥ नीललोहित इत्युक्तस्तेन देवेन वै प्रभुः ॥ ब्रह्मणा भगवान्कालः प्रीतात्मा चाभवद्विभुः ॥ २७ ॥ सुप्रीतमनसं देवं तुष्टाव च पितामहः ॥ नामाष्टकेन विश्वात्मा विश्वात्मानं महामुने ॥ २८ ॥ पितामह उवाच ॥ नमस्ते भगवन् रुद्र भास्करामिततेजसे ॥ नमो भवाय देवाय रसायांबुमयाय ते ॥ २९ ॥ शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ॥ ईशाय वायवे तुभ्यं संस्पर्शाय नमो नमः ॥ ३० ॥

शाश्वती नेतरेषाम्" इति ॥ २३ ॥ यमसंज्ञं यद्योगांगं तदेव पुष्पं तदादिभिः नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपैरुपचारैः पूज्यं पूजार्हं याज्यः यजनयोग्यो ब्रह्मा अव्ययं शिवमयजदित्यन्वयः विभुः रुद्रः ॥ २४ ॥ शिवस्य हृदयोद्भवः प्रकृत्या पुरुषः स्वयं नीलोपि प्रभुः रुद्रः वह्नेः संयोगाल्लोहितोऽभूदित्याग्रिमस्थैरन्वयः ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥ पितामहप्रोक्तमष्टनामकाष्टमूर्तिस्तोत्रं कथयति नमस्त इत्यादिना । हे भगवन् रुद्र भास्कर अमिततेजसे ते नम इत्यन्वयः ॥२९ ॥ सदा सुरभिणे सर्वदा शोभनगंधविशिष्टायेत्यर्थः सम्यक् प्रत्यक्षविषयः स्पर्शो यस्यासौ तस्मै ॥ ३० ॥

शब्दमात्राय शब्दमात्रगुणकायेत्यर्थः ॥ ३१ ॥ कर्मयोगिने कर्मफलभोक्त्रे जीवरूपायेत्यर्थः ॥ ३२ ॥ स्तोत्रमाहात्म्यं निरूपयति य इत्यादिना ॥ ३३ ॥ ३४ ॥ तदाष्टमूर्तिस्तत्र्क्षणकाल इत्यर्थः ॥ ३५ ॥ सर्वगं सुषिरं सर्वव्यापिगगनमित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ एकादशधा एकादशरुद्ररूपेणेत्यर्थः एतन्नामानि विष्णुपुराणे उक्ता

पशूनां पतये चैव पावकायातितेजसे ॥ भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ ३१ ॥ महादेवाय सोमाय अमृताय नमोस्तु ते ॥ उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ ३२ ॥ यः पठेच्छृणुयाद्वापि पैतामहमिमं स्तवम् ॥ रुद्राय कथितं विप्राञ्श्रावयेद्वा समाहितः ॥ ३३ ॥ अष्टमूर्तेस्तु सायुज्यं वर्षादेकादवाप्नुयात् ॥ एवं स्तुत्वा महादेवमवैक्षत पितामहः ॥ ३४ ॥ तदाष्टधा महादेवः समातिष्ठत्समंततः ॥ तदा प्रकाशते भानुः कृष्णवर्त्मा निशाकरः ॥ ३५ ॥ क्षितिर्वायुः पुमानंभः सुषिरं सर्वगं तथा ॥ तदाप्रभृति तं प्राहुरष्टमूर्तिरितीश्वरम् ॥ ३६ ॥ अष्टमूर्तेः प्रसादेन विरिंचिश्चासृजत्पुनः ॥ सृष्ट्वैतदखिलं ब्रह्मा पुनः कल्पांतरे प्रभुः ॥ ३७ ॥ सहस्रयुगपर्यंतं संसुप्ते च चराचरे ॥ प्रजाः स्रष्टुमनास्तेपे तत उग्रं तपो महत् ॥ ३८ ॥ तस्यैवं तप्यमानस्य न किंचित्समवर्तत ॥ ततो दीर्घेण कालेन दुःखात्क्रोधो व्यजायत ॥ ३९ ॥ क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिंदवः ॥ ततस्तेभ्योऽश्रुबिंदुभ्यो भूताः प्रेतास्तदाभवन् ॥ ४० ॥ सर्वांस्तानग्रजान्दृष्ट्वा भूतप्रेतनिशाचरान् ॥ अनिंदत तदा देवो ब्रह्मात्मानमजो विभुः ॥ ४१ ॥ जहौ प्राणांश्च भगवान् क्रोधाविष्टः प्रजापतिः ॥ ततः प्राणमयो रुद्रः प्रादुरासीत्प्रभोर्मुखात् ॥ ४२ ॥ अर्धनारीश्वरो भूत्वा बालार्कसदृशद्युतिः ॥ तदैकादशधात्मानं प्रविभज्य व्यवस्थितः ॥ ४३ ॥ अर्धेनांशेन सर्वात्मा ससर्जासौ शिवामुमाम् ॥ सा चासृजत्तदा लक्ष्मीं दुर्गां श्रेष्ठां सरस्वतीम् ॥ ४४ ॥ वामां रौद्रीं महामायां वैष्णवीं वारिजेक्षणाम् ॥ कलां विकिरिणीं चैव कालीं कमलवासिनीम् ॥ ४५ ॥ बलविकरिणीं देवीं बलप्रमथिनीं तथा ॥ सर्वभूतस्य दमनीं ससृजे च मनोन्मनीम् ॥ ४६ ॥ तथान्या बहवः सृष्टास्तया नार्यः सहस्रशः ॥ रुद्रैश्चैव महादेवस्ताभिस्त्रिभुवनेश्वरः ॥ ४७ ॥ सर्वात्मनश्च तस्याग्रे ह्यतिष्ठत्परमेश्वरः ॥ मृतस्य तस्य देवस्य ब्रह्मणः परमेष्ठिनः ॥ ४८ ॥ घृणी ददौ पुनः प्राणान्ब्रह्मपुत्रो महेश्वरः॥ब्रह्मणः प्रददौ प्राणानात्मस्थांस्तु तदा प्रभुः॥४९॥प्रहृष्टोभूत्ततो रुद्रः किंचित्प्रत्यागतासवम् ॥ अभ्यभाषत देवेशो ब्रह्माणं परमं वचः ॥ ५० ॥ मा भैर्देव महाभाग विरिंच जगतां गुरो ॥ मयेह स्थापिताः प्राणास्तस्मादुत्तिष्ठ वै प्रभो ॥ ५१ ॥

नि "अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान् ॥ हरश्च बहुरूपश्च त्र्यंबकश्चापराजितः ॥ वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा ॥ एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः" इति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ प्रत्यागतासवं प्राप्तसंज्ञं ब्रह्माणं दृष्ट्वेति शेषः रुद्रः प्रहृष्टोभूत्ततः ब्रह्माणं परमं वचः देवेशोऽभ्यभाषदित्यन्वयः ॥ ५० ॥ ५१ ॥

मनोगतं हृद्यमित्यर्थः तस्य वचः स्वप्नभूतं अस्वप्नमपि समग्रस्मृत्यभावात्स्वप्नप्रायमित्यर्थः ॥ ५२ ॥ ५३ ॥५४॥ ५५ ॥ एनां शिवामित्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ततः ब्रह्मप्रार्थनानंतरं स्वतः मुक्तस्यापि ब्रह्मणः मुक्तिप्रार्थनमनुकुर्वति पितामहे प्रहस्योमापतिः रुद्रैस्तया शिवया चांतर्दधे इत्यग्रिमेणान्वयः ॥ ५९ ॥ तस्मात्पूर्वोक्तकारणात् ॥ ६० ॥ स ब्रह्मा पद्मजोपि अयोनिजोपीत्यर्थः समृत्युः मृत्युसहितः ॥६१॥६२॥६३॥ सितेनैभेनैरावतेन देवः इंद्रः ॥६४॥ "अन्नदेयदातारमष्टमूर्तिस्वरूपिणम् ॥ अजाद्येकादशविधं श्री

श्रुत्वा वचस्ततस्तस्य स्वप्नभूतं मनोगतम् ॥ पितामहः प्रसन्नात्मा नेत्रैः फुल्लांबुजप्रभैः ॥ ५२ ॥ ततः प्रत्यागतप्राणः समुद्वैक्षन्महेश्वरम् ॥ स उद्वीक्ष्य चिरं कालं स्निग्धगंभीरया गिरा ॥ ५३ ॥ उवाच भगवान्ब्रह्मा समुत्थाय कृतांजलिः॥ भो भो वद महाभाग आनंदयसि मे मनः॥५४॥ को भवानष्टमूर्तिर्वै स्थित एकादशात्मकः ॥ इंद्र उवाच ॥ तस्य तद्वचनं श्रुत्वा व्याजहार महेश्वरः ॥ ५५ ॥ स्पृशन्कराभ्यां ब्रह्माणं सुखाभ्यां स सुरारिहा ॥ श्रीशंकर उवाच ॥ मां विद्धि परमात्मानमेनां मायामजामिति ॥ ५६ ॥ एते वै संस्थिता रुद्रास्त्वां रक्षितुमिहागताः ॥ ततः प्रणम्य तं ब्रह्मा देवदेवमुवाच ह ॥ ५७ ॥ कृतांजलिपुटो भूत्वा हर्षगद्गदया गिरा ॥ भगवन्देवदेवेश दुःखैराकुलितो ह्यहम् ॥ ५८ ॥ संसारान्मोक्तुमीशान मामिहार्हसि शंकर ॥ ततः प्रहस्य भगवान्पितामहमुमापतिः ॥ ५९ ॥ तदा रुद्रैर्जगन्नाथस्तया चांतर्दधे विभुः ॥ इंद्र उवाच ॥ तस्माच्छिलाद लोकेषु दुर्लभो वै त्वयोनिजः ॥ ६० ॥ मृत्युहीनः पुमान्विद्धि समृत्युः पद्मजोपि सः ॥ किंतु देवेश्वरो रुद्रः प्रसीदति यदीश्वरः ॥ ६१ ॥ न दुर्लभो मृत्युहीनस्तव पुत्रो ह्ययोनिजः ॥ मया च विष्णुना चैव ब्रह्मणा च महात्मना ॥ ६२ ॥ अयोनिजं मृत्युहीनमसमर्थं निवेदितुम् ॥ शैलादिरुवाच ॥ एवं व्याहृत्य विप्रेंद्रमनुगृह्य च तं घृणी ॥ ६३ ॥ देवैर्वृतो ययौ देवः सितेनेभेन वै प्रभुः ॥ ६४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे इंद्रवाक्यं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ सूत उवाच ॥ गते पुण्ये च वरदे सहस्राक्षे शिलाशनः ॥ आराधयन्महादेवं तपसा तोषयद्विभुम् ॥ १ ॥ अथ तस्यैवमनिशं तत्परस्य द्विजस्य तु ॥ दिव्यं वर्षसहस्रं तु गतं क्षणमिवाद्भुतम् ॥ २ ॥ वल्मीकेनावृतांगश्च लक्ष्यः कीटगणैर्मुनिः ॥ वज्रसूचीमुखैश्चान्यै रक्तकीटैश्च सर्वतः ॥ ३ ॥ निर्मांसरुधिरत्वग्वै निर्लेपः कुड्यवास्थितः ॥ अस्थिशेषोऽभवत्पश्चात्तममन्यत शंकरः ॥ ४ ॥ यदा स्पृष्टो मुनिस्तेन करेण च स्मरारिणा ॥ तदैव मुनिशार्दूलश्चोत्ससर्ज क्लमं द्विजः ॥ ५ ॥ तपतस्तस्य तपसा प्रभुस्तुष्टोथ शंकरः ॥ तुष्टस्तवेत्यथोवाच सगणश्चोमया सह ॥ ६ ॥ तपसानेन किं कार्यं भवतस्ते महामते ॥ ददामि पुत्रं सर्वज्ञं सर्वशास्त्रार्थपारगम् ॥ ७ ॥ ततः प्रणम्य देवेशं स्तुत्वोवाच शिलाशनः ॥ हर्षगद्गदया वाचा सोमं सोमविभूषणम् ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

रुद्रं प्रणतोस्म्यहम्" ॥१ ॥ इति श्रीलिं[illegible] ॥ शिलादस्य[illegible] ॥ शिलादस्य सुतमाप्तिर्निरूप्यते ॥ १ ॥ सूतः शक्रगमनानंतरवृत्तांतं वर्णयति गत इत्यादिना ॥ १ ॥ २॥ कीटगणैर्लक्ष्य इत्यनेन शरीराक्रांतिलक्ष्यत्वाभावः सूचितः ॥३ ॥ अमन्यत बुद्धवानित्यर्थः ॥४॥५॥६॥७॥ सोममुमासहितं

सोमविभूषणं चंद्र कलाधरमित्यर्थः ॥ ८ ॥ ९ ॥ परमेश्वरो रुद्रः ब्रह्मणा पूर्वमाराधितः शिलादाराधनात्परमया प्रीत्या युक्त इति शेषः शिलादं माहेत्यन्वयः ॥ १० ॥ ११ ॥

शिलाद उवाच ॥ भगवन्देवदेवेश त्रिपुरार्दन शंकर ॥ अयोनिजं मृत्युहीनं पुत्रमिच्छामि सत्तम ॥ ९ ॥ सूत उवाच ॥ पूर्वमाराधितः प्राह तपसा परमेश्वरः ॥ शिलादं ब्रह्मणा रुद्रः प्रीत्या परमया पुनः ॥ १० ॥ श्रीदेवदेव उवाच ॥ पूर्वमाराधितो विप्र ब्रह्मणाहं तपोधन ॥ तपसा चावतारार्थं मुनिभिश्च सुरोत्तमैः ॥ ११ ॥ तव पुत्रो भविष्यामि नंदिनाम्ना त्वयोनिजः ॥ पिता भविष्यसि मम पितुर्वै जगतां मुने ॥ १२ ॥ एवमुक्त्वा मुनिं प्रेक्ष्य प्रणिपत्य स्थितं घृणी ॥ सोमः सोमोपमः प्रीतस्तत्रैवांतरधीयत ॥ १३ ॥ लब्धपुत्रः पिता रुद्रात्प्रीतो मम महामुने ॥ यज्ञांगणं महत्प्राप्य यज्ञार्थं यज्ञवित्तमः ॥ १४ ॥ तदंगणादहं शंभोस्तनुजस्तस्य चाज्ञया ॥ संजातः पूर्वमेवाहं युगांताग्निसमप्रभः ॥ १५ ॥ ववर्षुस्तदा पुष्करावर्त्तकाद्या जगुः खेचराः किन्नराः सिद्धसाध्याः ॥ शिलादात्मजत्वं गते मय्युपेंद्रः ससर्जाथ वृष्टिं सुपुष्पौघमिश्राम् ॥ १६ ॥ मां दृष्ट्वा कालसूर्याभं जटामुकुटधारिणम् ॥ त्र्यक्षं चतुर्भुजं बालं शूलटंकगदाधरम् ॥ १७ ॥ वज्रिणं वज्रदंष्ट्रं च वज्रिणाराधितं शिशुम् ॥ वज्रकुंडलिनं घोरं नीरदोपमनिःस्वनम् ॥ १८ ॥ ब्रह्माद्यास्तुष्टुवुः सर्वे सुरेंद्रश्च मुनीश्वराः ॥ नेदुः समंततः सर्वे ननृतुश्चाप्सरोगणाः ॥ १९ ॥ ऋषयो मुनिशार्दूल ऋग्यजुः सामसंभवैः ॥ मंत्रैर्माहेश्वरैः स्तुत्वा संप्रणेमुर्मुदान्विताः ॥ २० ॥ ब्रह्मा हरिश्च रुद्रश्च शक्रः साक्षाच्छिवांबिका ॥ जीवश्चेंदुर्महातेजा भास्करः पवनोनलः ॥ २१ ॥ ईशानो निर्ऋतिर्यक्षो यमो वरुण एव च ॥ विश्वेदेवास्तथा रुद्रा वसवश्च महाबलाः ॥ २२ ॥ लक्ष्मीः साक्षाच्छची ज्येष्ठा देवी चैव सरस्वती ॥ अदितिश्च दितिश्चैव श्रद्धा लज्जा धृतिस्तथा ॥ २३ ॥ नंदा भद्रा च सुरभी सुशीला सुमनास्तथा ॥ वृषेंद्रश्च महातेजा धर्मो धर्मात्मजस्तथा ॥ २४ ॥ आवृत्य मां तथालिंग्यतुष्टुवुर्मुनिसत्तम ॥ शिलादोपि मुनिर्दृष्ट्वा पिता मे तादृशं तदा ॥ २५ ॥ प्रीत्या प्रणम्य पुण्यात्मा तुष्टावेष्टप्रदं सुतम् ॥ शिलाद उवाच ॥ भगवन्देवदेवेश त्रियंबक ममाव्यय ॥ २६ ॥ पुत्रोसि जगतां यस्मात्त्राता दुःखाद्धि किं पुनः ॥ रक्षको जगतां यस्मात्पिता मे पुत्र सर्वग ॥ २७ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ पुष्करावर्तकाद्यास्तत्संज्ञका मेघा इत्यर्थः ॥ १६ ॥ १७ ॥ वज्रिणं वज्रायुधविशिष्टं वज्रदंष्ट्रं हीरकदंष्ट्रं वज्रिणा इंद्रेण आराधितं सेवितमित्यर्थः ॥ ॥ १८ ॥ १९ ॥ २० ॥ जीवो गुरुः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ सस्नानाम्ना नदी भवति शेषमादायान्वयः ॥ २९ ॥ पितरौ मातापितरावित्यर्थः ॥ ३० ॥ पितामहाश्चेति बहुवचनात्प्रपितामहादयः सर्वे ग्राह्याः ॥ ३१ ॥ ३२ ॥ हे नंदीश नंदिरूप शिव मया पुत्रत्वमेव मत्वा पुत्रभावमेव ज्ञात्वा यत्कीर्तितं तत्त्वया क्षम्यतामित्यग्रिमेणान्वयः ॥ ३३ ॥ स्तवैः स्तवितुं योग्यस्तवस्तव्यः ॥ ३४ ॥ ३५ ॥ शिलादोवाचेत्यत्र संधिरार्षः ॥ ३६ ॥ ३७ ॥ मे मह्यं हिताय कल्याणायेत्यर्थः ॥ ३८ ॥ "शिलादकृच्छ्रार्जितपुण्यपुंजाद्यः प्रादुरासीत्किल यज्ञभूमौ ॥ स नंदिसंज्ञो भगवान् भवो

अयोनिज नमस्तुभ्यं जगद्योने पितामह ॥ पिता पुत्र महेशान जगतां च जगद्गुरो ॥ २८ ॥ वत्सवत्स महाभाग पाहि मां परमेश्वर ॥ त्वयाऽहं नंदितो यस्मान्नंदी नाम्ना सुरेश्वर ॥ २९ ॥ तस्मान्नंदय मां नंदिन्नमामि जगदीश्वरम् ॥ प्रसीद पितरौ मेद्य रुद्रलोकं गतौ विभो ॥ ३० ॥ पितामहाश्च भो नंदिन्नवतीर्णे महेश्वरे ॥ ममैव सफलं लोके जन्म वै जगतां प्रभो ॥ ३१ ॥ अवतीर्णे सुते नंदिन् रक्षार्थं मह्यमीश्वर ॥ तुभ्यं नमः सुरेशान नंदीश्वर नमोस्तु ते ॥ ३२ ॥ पुत्र पाहि महाबाहो देवदेव जगद्गुरो ॥ पुत्रत्वमेव नंदीश मत्वा यत्कीर्तितं मया ॥ ३३ ॥ त्वया तत्क्षम्यतां वत्स स्तवस्तव्य सुरासुरैः ॥ यः पठेच्छृणुयाद्वापि मम पुत्रप्रभाषितम् ॥ ३४ ॥ श्रावयेद्वा द्विजान् भक्त्या मया सार्धं स मोदते ॥ एवं स्तुत्वा सुतं बालं प्रणम्य बहुमानतः ॥ ३५ ॥ मुनीश्वरांश्च संप्रेक्ष्य शिलादोवाच सुव्रतः ॥ पश्यध्वं मुनयः सर्वे महाभाग्यं ममाव्ययः ॥ ३६ ॥ नंदी यज्ञांगणे देवश्चावतीर्णो यतः प्रभुः ॥ मत्समः कः पुमाँल्लोके देवो वा दानवोपि वा ॥ ३७ ॥ एष नंदी यतो जातो यज्ञभूमौ हिताय मे ॥ ३८ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे नंदिकेश्वरोत्पत्तिर्नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ नंदिकेश्वर उवाच ॥ मया सह पिता हृष्टः प्रणम्य च महेश्वरम् ॥ उटजं स्वं जगामाशु निधिं लब्ध्वेव निर्धनः ॥ १ ॥ यदागतोहमुटजं शिलादस्य महामुने ॥ तदा वै दैविकं रूपं त्यक्त्वा मानुष्यमास्थितः ॥२॥ नष्टा चैव स्मृतिर्दिव्या येन केनापि कारणात् ॥ मानुष्यमास्थितं दृष्ट्वा पिता मे लोकपूजितः ॥ ३ ॥ विललापादिदुःखार्तः स्वजनैश्च समावृतः ॥ जातकर्मादिकाश्चैव चकार मम सर्ववित् ॥४॥ शालंकायनपुत्रो वै शिलादः पुत्रवत्सलः ॥ उपदिष्ठ हितेनैव ऋक्शाखा यजुषस्तथा ॥ ५ ॥ सामशाखासहस्रं च सांगोपांगं महामुने ॥ आयुर्वेदं धनुर्वेदं गांधर्वं चाश्वलक्षणम् ॥ ६ ॥

स्माच्चैवाग्रणीर्नंदयतां सदैव ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ त्रिचत्वारिंशत्कोऽध्याये मानुषं रूपमागतः ॥ नंदी रुद्राराधनतः प्रसादं महदाप्तवान ॥ १ ॥ नंद्यग्रिमवृत्तांतं कथयति मयेत्यादिना ॥१॥ २ ॥ येन केनापि कारणादनिर्वचनीयेश्वरेच्छयेत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ महामुने हे सनत्कुमार ॥ ६ ॥

॥ ७ ॥ ८ ॥९॥ एवं सर्वविद्याप्रवीणत्वरूपपूर्वोक्तप्रकारमत एवाश्चर्यमाश्चर्यकरमायुरस्येति शेषः अत एतत्कालमारभ्य वर्षात्परं न दृष्टं नावलोकितमित्यर्थः ॥१०॥ अतीव विस्वरम् त्युपतापसहितमित्यर्थः ॥ ११ ॥ १२ ॥ विह्वलात्यर्थमित्यत्र सवर्णदीर्घश्छांदसः ॥ १३ ॥ मधुना माक्षिकेन संप्लुतां व्याप्तामित्यर्थः सर्वद्रव्यसमन्वितां युक्तां तदुक्तमुपारे भागे " तं पुष्टिवर्धनं देवं घृतेन पयसा तथा ॥ मधुना यवगोधूममाषबिल्वफलेन च ॥ कुमुदार्कशमीपत्रगौरसर्षपशालिभिः ॥ हुत्वा लिंगे यथान्यायं भक्त्या देवं यजामहे" इति ॥ १४ ॥ १५ ॥ १६ ॥ हृत्पुंडरीके सुषिरे त्रियंबकं त्रिगुणपालकं देवं शिवं ध्यात्वा रुद्रजाप्यरतः रुद्राध्यायजपपरोऽभवमित्यन्वयः ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

हस्तिनां चरितं चैव नराणां चैव लक्षणम् ॥ संपूर्णे सप्तमे वर्षे ततोथ मुनिसत्तमौ ॥ ७ ॥ मित्रावरुणनामानौ तपोयोगबलान्वितौ ॥ तस्याश्रमं गतौ दिव्यौ द्रष्टुं मां चाज्ञया विभोः ॥ ८ ॥ ऊचतुश्च महात्मानौ मां निरीक्ष्य मुहुर्मुहुः ॥ तात नंद्ययमल्पायुः सर्वशास्त्रार्थपारगः ॥ ९ ॥ न दृष्टमेवमाश्चर्यमायुर्वर्षादतः परम् ॥ इत्युक्तवति विप्रेंद्रः शिलादः पुत्रवत्सलः ॥ १० ॥ समालिंग्य च दुःखार्तो रुरोदातीव विस्वरम् ॥ हा पुत्र पुत्रेति पपात च समंततः ॥ ११ ॥ अहो बलं दैवविधेर्विधातश्चेति दुःखितः ॥ तस्य चार्तस्वरं श्रुत्वा तदाश्रमनिवासिनः ॥ १२ ॥ निपेतुर्विह्वलात्यर्थं रक्षांश्चक्रुश्च मंगलम् ॥ तुष्टुवुश्च महादेवं त्रियंबकमुमापतिम् ॥ १३ ॥ हुत्वा त्रियंबकेनैव मधुनैव च संप्लुताम् ॥ दूर्वामयुतसंख्यातां सर्वद्रव्यसमन्विताम् ॥१४॥ पिता विगतसंज्ञश्च तथा चैव पितामहः ॥ विचेष्टश्च ललापासौ मृतवन्निपपात च ॥१५॥ मृत्योर्भीतोहमचिराच्छिरसा चाभिवंद्य तम् ॥ मृतवत्पतितं साक्षात्पितरं च पितामहम् ॥ १६ ॥ प्रदक्षिणीकृत्य च तं रुद्रं जाप्यरतोभवम् ॥ हृत्पुंडरीके सुषिरे ध्यात्वा देवं त्रियंबकम् ॥१७॥ त्र्यक्षं दशभुजं शांतं पंचवक्त्रं सदाशिवम् ॥ सरितस्थांतरे पुण्ये स्थितं मां परमेश्वरः ॥ १८ ॥ तुष्टोब्रवीन्महादेवः सोमः सोमार्धभूषणः ॥ वत्स नंदिन्महाबाहो मृत्योर्भीतिः कुतस्तव ॥ १९ ॥ मयैव प्रेषितौ विप्रौ मत्समस्त्वं न संशयः ॥ वत्सैनत्तव देहं च लौकिकं परमार्थतः ॥ २० ॥ नास्त्येव दैविकं दृष्टं शिलादेन पुरा तव ॥ देवैश्च मुनिभिः सिद्धैर्गंधर्वैर्दानवोत्तमैः ॥ २१ ॥ पूजितं यत्पुरा वत्स दैविकं नंदिकेश्वर ॥ संसारस्य स्वभावोयं सुखं दुःखं पुनः पुनः ॥ २२ ॥ नृणां योनिपरित्यागः सर्वथैव विवेकिनः ॥ एवमुक्त्वा तु मां साक्षात्सर्वदेवमहेश्वरः ॥ २३ ॥

पुनःपुनः सुखदुःखमयसंसारस्य स्वभाव एवातः नृणां मनुष्याणां योनिपरित्यागः स्त्रीसमागमत्यागः सर्वथा युक्त इति शेषमादायाग्रिमेणान्वयः ननु "अनधीत्य द्विजो वेदाननुत्पाद्य च वै प्रजाः ॥ अनिष्ट्वा शक्तितो यज्ञैर्मोक्षमिच्छन्पतत्यधः ॥" इत्यादिवचनैस्तथा वेदादावपि विवाहविधिकथनात्सर्वथा योनिपरित्यागस्य युक्तत्वमसंगतमिति चेदनधीत्येत्यादिवचनानि तथा विवाहविधिकथनमपि सरागविषयम् " पंच पंचनखा भक्ष्याः" इति वत्परिसंख्यारूपमेव अत एवात्र विवेकिन इत्युक्तम् एतदेवोक्तं भागवतैकादशस्कंधे "लोके व्यवायामिषमद्यसेवा नित्यास्तु जंतोर्नहि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इति ॥ २२ ॥ २३ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

परमार्तिर्मरणपीडा ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ कुशेशयमयीं शतपत्रकमलनिर्मितामित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

कराभ्यां सुशुभाभ्यां च उभाभ्यां परमेश्वरः ॥ पस्पर्श भगवान् रुद्रः परमार्तिहरो हरः ॥ २४॥ उवाच च महादेवस्तुष्टात्मा वृषभध्वजः ॥ निरीक्ष्य गणपांश्चैव देवीं हिमवतः सुताम् ॥ २५ ॥ समालोक्य च तुष्टात्मा महादेवः सुरेश्वरः ॥ अजरो जरया त्यक्तो नित्यं दुःखविवर्जितः ॥ २६ ॥ अक्षयश्चाव्ययश्चैव सपिता ससुहृज्जनः ॥ ममेष्टो गणपश्चैव मद्वीर्यो मत्पराक्रमः ॥ २७ ॥ इष्टो मम सदा चैव मम पार्श्वगतः सदा ॥ मद्बलश्चैव भविता महायोगबलान्वितः ॥ २८ ॥ एवमुक्त्वा च मां देवो भगवान्सगणस्तदा ॥ कुशेशयमयीं मालां समुन्मुच्यात्मनस्तदा ॥ २९ ॥ आबबंध महातेजा मम देवो वृषध्वजः ॥तयाहं मालया जातः शुभया कंठसक्तया॥३०॥त्र्यक्षो दशभुजश्चैव द्वितीय इव शंकरः ॥ तत एव समादाय हस्तेन परमेश्वरः ॥ ३१ ॥ उवाच ब्रूहि किं तेद्य ददामि वरमुत्तमम् ॥ ततो जटाश्रितं वारि गृहीत्वा चातिनिर्मलम् ॥ ३२ ॥ उक्ता नदी भवस्वेति उत्ससर्ज वृषध्वजः ॥ ततः सा दिव्यतोया च पूर्णासितजला शुभा ॥ ३३ ॥ पद्मोत्पलवनोपेता प्रावर्तत महानदी ॥ तामाह च महादेवो नदीं परमशोभनाम् ॥ ३४ ॥ यस्माज्जटोदकादेव प्रवृत्ता त्वं महानदी ॥ तस्माज्जटोदका पुण्या भविष्यसि सरिद्वरा ॥ ३५ ॥ त्वयि स्नात्वा नरः कश्चित्सर्वपापैः प्रमुच्यते ॥ ततो देव्या महादेवः शिलादतनयं प्रभुः ॥ ३६ ॥ पुत्रस्तेऽयमिति प्रोच्य पादयोः सन्यपातयत् ॥ सा मामाघ्राय शिरसि पाणिभ्यां परिमार्जती ॥ ३७ ॥ पुत्रप्रेम्णाभ्यषिंचच्च स्रोतोभिस्तनयैस्त्रिभिः ॥ पयसा शंखगौरेण देवदेवं निरीक्ष्य सा ॥ ३८ ॥ तानि स्रोतांसि त्रीण्यस्याः स्रोतस्विन्योभवंस्तदा ॥ नदीं त्रिस्रोतसं देवो भगवानवदद्भवः ॥ ३९ ॥ त्रिस्रोतसं नदीं दृष्ट्वा वृषः परमहर्षितः ॥ ननाद नादात्तस्माच्च सरिदन्या ततोभवत् ॥ ४० ॥ वृषध्वनिरिति ख्याता देवदेवेन सा नदी ॥ जांबूनदमयं चित्रं सर्वरत्नमयं शुभम् ॥ ४१ ॥ स्वं देवश्चाद्भुतं दिव्यं निर्मितं विश्वकर्मणा ॥ मुकुटं चाबबंधेशो मम मूर्ध्नि वृषध्वजः ॥ ४२ ॥ कुंडले च शुभे दिव्ये वज्रवैडूर्यभूषिते ॥ आबबंध महादेवः स्वयमेव महेश्वरः ॥ ४३ ॥ मां तथाभ्यर्चितं व्योम्नि दृष्ट्वा मेघैः प्रभाकरः ॥ मेघांभसा चाभ्यषिंचच्छिलादनमथो मुने ॥ ४४ ॥ तस्याभिषिक्तस्य तदा प्रवृत्ता स्रोतसा भृशम् ॥ यस्मात्सुवर्णान्निःसृत्य नद्येषा संप्रवर्तते ॥ ४५ ॥

॥ ३५ ॥ ३६॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ स्वं स्वकीयमित्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ "यो रुद्ररूपोपि महानुभावः शैवान्समादेष्टुमयो हि नन्दी ॥ मानुष्यमास्थाय निरस्तसंगो जजाप रुद्रं तमहं नमामि ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥"चतुश्चत्वारिंशके तु नंदिनः सर्वसंभृतः ॥ गाणपत्येभिषेको वै विवाहश्च निरूप्यते

स्वर्णोदकेति तामाह देवदेवस्त्रियंबकः ॥ जाम्बूनदमयाद्यस्माद्वितीया मुकुटाच्छुभा ॥ ४६ ॥ प्रावर्तत नदी पुण्या ऊचुर्जांबूनदीति ताम् ॥ एतत्पंचनदं नाम जप्येश्वरसमीपगम् ॥ ४७ ॥ यः पंचनदमासाद्य स्नात्वा जप्येश्वरेश्वरम् ॥ पूजयेच्छिवसायुज्यं प्रयात्येव न संशयः ॥ ४८ ॥ अथ देवो महादेवः सर्वभूतपतिर्भवः ॥ देवीमुवाच शर्वाणीमुमां गिरिसुतामजाम् ॥ ४९ ॥ देवि नंदीश्वरं देवमभिषिंचामि भूतपम् ॥ गणेंद्रं व्याहरिष्यामि किं वा त्वं मन्यसेऽव्यये ॥ ५० ॥ तस्य तद्वचनं श्रुत्वा भवानी हर्षितानना ॥ स्मयंती वरदं प्राह भवं भूतपतिं पतिम् ॥ ५१ ॥ सर्वलोकाधिपत्यं च गणेशत्वं तथैव च ॥ दातुमर्हसि देवेश शैलादिस्तनयो मम ॥ ५२ ॥ ततः स भगवाञ्शर्वः सर्वलोकेश्वरेश्वरः ॥ सस्मार गणपान्दिव्यान्देवदेवो वृषध्वजः ॥ ५३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे नंदिकेश्वरप्रादुर्भावनंदिकेश्वराभिषेकमंत्रो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ शैलादिरुवाच ॥ स्मरणादेव रुद्रस्य संप्राताश्च गणेश्वराः ॥ सर्वे सहस्रहस्ताश्च सहस्रायुधपाणयः ॥ १ ॥ त्रिनेत्राश्च महात्मानस्त्रिदशैरपि वंदिताः ॥ कोटिकालाग्निसंकाशा जटामुकुटधारिणः ॥ २ ॥ दंष्ट्राकरालवदना नित्या बुद्धाश्च निर्मलाः ॥ कोटिकोटिगणैस्तुल्यैरात्मना च गणेश्वराः ॥ असंख्याता महात्मा नस्तत्राजग्मुर्मुदायुताः ॥ ३ ॥ गायंतश्च द्रवंतश्च नृत्यंतश्च महाबलाः ॥ मुखाडंबरवाद्यानि वादयंतस्तथैव च ॥ ४ ॥ रथैर्नागैर्हयैश्चैव सिंहमर्कटवाहनाः ॥ विमानेषु तथारूढा हेमचित्रेषु वै गणाः ॥ ५ ॥ भेरीमृदंगकाद्यैश्च पणवानकगोमुखैः ॥ वादित्रैर्विविधैश्चान्यैः पटहैरेकपुष्करैः॥६॥भेरीमुरजसंनादैराडंबरकडिंडिमैः॥मर्दलैर्वेणुवीणाभिः विविधैस्तालनिःस्वनैः ॥७॥ दर्दुरैस्तलघातैश्च कच्छपैः पणवैरपि ॥ वाद्यमानैर्महायोगा आजग्मुर्देवसंसदम् ॥ ८ ॥ ते गणेशा महासत्त्वाः सर्वदेवेश्वरेश्वराः ॥ प्रणम्य देवं देवीं देवं च इदं वचनमब्रुवन् ॥ ९ ॥ भगवन्देवदेवेश त्रियंबक वृषध्वज ॥ किमर्थं च स्मृता देव आज्ञापय महाद्युते ॥ १० ॥ किं सागरांञ्शोषयामो यमं वा सह किंकरैः ॥ हन्मो मृत्युसुतां मृत्युं पशुवद्धन्म पद्मजम् ॥ ११ ॥

॥ १ ॥" शैलादिः सनत्कुमाराय स्वाभिषेकादिवृत्तांतं कथयति । स्मरणादित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ मृत्युसुतां जरामित्यर्थः । जरायाः कालकन्येतिसंज्ञा भागवते पुरंजनोपाख्याने उक्ता ॥ ११ ॥
॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ सर्व एव गणपाः संमंत्र्य विचारं कृत्वा एवमाज्ञप्तमस्त्विति विज्ञाप्येति शेषः । ततस्तदनंतरं संभारानभिषेकोपस्करानाहरन्नयामासुरित्यर्थः ॥ १८ ॥ मेरुसंकाशं सौवर्णमत्युच्छ्रितमित्यर्थः ॥ १९ ॥ २० ॥ किंकिणीजालसंवृतं क्षुद्रघंटाजालवृतमित्यर्थः विश्वतोमुखं चतुर्द्वारमित्यर्थः ॥ २१ ॥ २२ ॥

बद्ध्वेंद्रं सह देवैश्च सह विष्णुं च वायुना ॥ आनयामः सुसंक्रुद्धा दैत्यान्वा सह दानवैः ॥ १२ ॥ कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया ॥ कस्य वाद्योत्सवो देव सर्वकामसमृद्धये ॥ १३ ॥ तांस्तथावादिनः सर्वान् गणेशान् सर्वसंमतान् ॥ उवाच देवः संपूज्य कोटिकोटिशतान्प्रभुः ॥ १४ ॥ शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः ॥ श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशंकिताः ॥१५॥ नंदीश्वरोयं पुत्रो नः सर्वेषामीश्वरेश्वरः॥ प्रियोयं नायकश्चैव सेनानीर्वः समृद्धिमान् ॥ १६ ॥ तमिमं मम संदेशाद्यूयं सर्वेपि संमताः ॥ सेनान्यमभिषिंचध्वं महायोगपतिं पतिम् ॥ १७ ॥ एवमुक्ता भगवता गणपाः सर्व एव ते ॥ एवमस्त्विति संमंत्र्य संभारानाहरंस्ततः ॥ १८ ॥ तस्य सर्वाश्रयं दिव्यं जांबूनदमयं शुभम् ॥ आसनं मेरुसंकाशं मनोहरमुपाहरन् ॥ १९ ॥ नैकस्तंभमयं चापि चामीकरवरप्रभम् ॥ मुक्तादामावलंबं च मणिरत्नावभासितम् ॥ २० ॥ स्तंभैश्च वैडूर्यमयैः किंकिणीजालसंवृतम् ॥ चारुरत्नकसंयुक्तं मंडपं विश्वतोमुखम् ॥२१॥ कृत्वा विन्यस्य तन्मध्ये तदासनवरं शुभम् ॥ तस्याग्रतः पादपीठं नीलवज्रावभासितम् ॥ २२ ॥ चक्रुः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ ॥ संपूर्णौ परमांभोभिररविंदावृताननौ ॥ २३ ॥ कलशानां सहस्रं तु सौवर्णं राजतं तथा ॥ ताम्रजं मृन्मयं चैव सर्वतीर्थांबुपूरितम् ॥२४॥ वासोयुगं तथा दिव्यं गंधं दिव्यं तथैव च ॥ केयूरे कुंडले चैव मुकुटं हारमेव च ॥ २५ ॥ छत्रं शतशलाकं च वालव्यजनमेव च ॥ दत्तं महात्मना तेन ब्रह्मणा परमेष्ठिना ॥ २६ ॥ शंखहारांगगौरेण पृष्ठेनापि विराजितम् ॥ व्यजनं चंद्रशुभ्रं च हेमदंडं सुचामरम् ॥ २७ ॥ ऐरावतः सुप्रतीको गजावेतौ सुपूजितौ ॥ मुकुटं कांचनं चैव निर्मितं विश्वकर्मणा ॥ २८ ॥ कुंडले चामले दिव्ये वज्रं चैव वरायुधम् ॥ जांबूनदमयं सूत्रं केयूरद्वयमेव च ॥ २९ ॥ संभाराणि तथान्यानि विविधानि बहून्यपि ॥ समंतान्न्युरव्यग्रा गणपा देवसंमताः ॥ ३० ॥ ततो देवाश्च सेंद्राश्च नारायणमुखास्तथा ॥ मुनयो भगवान्ब्रह्मा नवब्रह्माण एव च ॥ ३१ ॥

॥ २३ ॥ २४ ॥ २५ ॥ शतशलाकं [illegible] तत्कृतशलाकमतिविस्तृतमित्यर्थः ॥ २६ ॥ हारांगगौरेण शिवांगवदतिशुभ्रेण पृष्ठेनापि छन्दादुपरिभागेन विराजितं शंखमित्यनेन पूर्वपश्चाद्भागः सुवर्णावृतो बोधितः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ नवब्रह्माणो मुनयो मरीच्यादयः [illegible] पुलस्त्यं पुलहं क्रतुम् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

एते नीलादय इत्यर्थः ॥ ५१ ॥ "देवाद्यैः स्पृहणीयं ब्राह्मण्यं भारते वर्षे ॥ दत्तं कृपया शम्भो सफलं भूयात्मसादात्ते ॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विपंचाशोऽध्यायः॥५२॥"त्रिपंचाशत्तमे प्रोक्तं प्लक्षद्वीपाद्यनुक्रमात्॥भूलोकश्चोर्ध्वलोकाश्च नरका यक्षचेष्टितम्॥१॥"प्लक्षद्वीपादिद्वीपेषु सप्तसप्तसु पर्वताःसंतीति शेषः वर्षपर्वताः वर्षवि

मयूरबर्हवर्णस्तु शातकुंभस्त्रिशृंगवान् ॥ एते पर्वतराजानो जंबुद्वीपे व्यवस्थिताः ॥५१॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशस्वभाववर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ सूत उवाच ॥ प्लक्षद्वीपादिद्वीपेषु सप्त सप्तसु पर्वताः ॥ ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्वताः ॥ १ ॥ प्लक्षद्वीपे तु वक्ष्यामि सप्त दिव्यान्महाचलान् ॥ गोमेदकोत्र प्रथमो द्वितीयश्चांद्र उच्यते ॥२॥ तृतीयो नारदो नाम चतुर्थो दुंदुभिः स्मृतः ॥ पंचमः सोमको नाम सुमनाः षष्ठ उच्यते ॥ ३ ॥ स एव वैभ्रवः प्रोक्तो वैभ्राजः सप्तमः स्मृतः ॥ सप्तैते गिरयः प्रोक्ताः प्लक्षद्वीपे विशेषतः ॥ ४ ॥ सप्त वै शाल्मलिद्वीपे तांस्तु वक्ष्याम्यनुक्रमात् ॥ कुमुदश्चोत्तमश्चैव पर्वतश्च वलाहकः ॥५॥ द्रोणः कंकश्च महिषः ककुद्मान् सप्तमः स्मृतः ॥ कुशद्वीपे तु सप्तैव द्वीपाश्च कुलपर्वताः॥६॥तांस्तु संक्षेपतो वक्ष्ये नाममात्रेण वै क्रमात्॥विद्रुमः प्रथमः प्रोक्तो द्वितीयो हेमपर्वतः॥७॥तृतीयो द्युतिमान्नाम चतुर्थः पुष्पितः स्मृतः ॥ कुशेशयः पंचमस्तु षष्ठो हरिगिरिः स्मृतः ॥८॥ सप्तमो मंदरः श्रीमान्महादेवनिकेतनम् ॥ मंदा इति ह्यपां नाम मंदरो धारणादपाम् ॥ ९ ॥ तत्र साक्षाद्वृषांकस्तु विश्वेशो विमलः शिवः ॥ सोमः सनंदी भगवानास्ते हेमगृहोत्तमे ॥१०॥ तपसा तोषितः पूर्वं मंदरेण महेश्वरः॥अविमुक्तं महाक्षेत्रे लेभे स परमं वरम् ॥११॥ प्रार्थितश्च महादेवो निवासार्थं सहांबया ॥ अविमुक्तादुपागम्य चक्रे वासं स मंदरे॥१२॥ सनंदी सगणः सोमस्तेनासौ तत्र मुंचति ॥ क्रौंचद्वीपे तु सप्तैव क्रौंचाद्याः कुलपर्वताः॥१३॥ क्रौंचो वामनकः पश्चात्तृतीयश्चांधकारकः॥ अंधकारात्परश्चापि दिवावृन्नाम पर्वतः॥१४॥ दिवावृतः परश्चापि विविंदो गिरिरुच्यते ॥ विविंदात्परतश्चापि पुंडरीको महागिरिः ॥१५॥ पुंडरीकात्परश्चापि प्रोच्यते दुंदुभिस्वनः ॥ एते रत्नमयाः सप्त क्रौंचद्वीपस्य पर्वताः ॥ १६ ॥ शाकद्वीपे च गिरयः सप्त तांस्तु निबोधत ॥ उदयो रैवतश्चापि श्यामको मुनिसत्तमाः ॥१७॥ राजतश्च गिरिः श्रीमानांबिकेयः सुशोभनः ॥ आंबिकेयात्परो रम्यः सर्वौषधिसमन्वितः ॥ १८ ॥ तथैव केसरीत्युक्तो यतो वायुः प्रजायते ॥ पुष्करे पर्वतः श्रीमान्नेक एव महाशिलः ॥ १९ ॥

भाजकगिरयः"ऋज्वायताः प्रतिदिशं निविष्टा इत्यन्वयः ॥१॥२॥३॥४॥५॥६॥ तान् कुलपर्वतानित्यर्थः ॥७॥८॥ मंदरशब्दार्थं दर्शयति मन्दा इति । अपां शिवमौलिनिःसृतगंगोदकानाम् एतदर्थकं मदर इति रूपं पृषोदरादित्वात् ज्ञेयम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ तेन वरेणेत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ महत्यः शिलाः यस्मिन्नसौ महाशिलः ॥ १९ ॥ चित्राणि चित्रवर्णानि सानूनि शिखराणि यस्य स चित्रसानुः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८॥ एवं पूर्वोक्तक्रमेणेत्यर्थः ॥२९॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ आभानोर्भानुमंडलपर्यंतमित्यर्थः भुवः तत्संज्ञकलोकः आध्रुवात् ध्रुवपर्यंतं स्वः स्वर्लोक इत्यर्थः । वायुचक्राणि कथयति आवहाद्या

चित्रैर्मणिमयैः कूटैः शिलाजालैः समुच्छ्रितैः ॥ द्वीपस्य तस्य पूर्वार्धे चित्रसानुस्थितो महान् ॥ २० ॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ अधश्चैव चतुस्त्रिंशत्सहस्राणि महाचलः ॥ २१ ॥ द्वीपस्यार्धे परिक्षितः पर्वतो मानसोत्तरः ॥ स्थितो वेलासमीपे तु नवचंद्र इवोदितः ॥ २२ ॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ तावदेव तु विस्तीर्णः पार्श्वतः परिमंडलः ॥ २३ ॥ स एव द्वीपपश्चार्धे मानसः पृथिवीधरः ॥ एक एव महासानुः सन्निवेशाद्द्विधा कृतः ॥ २४ ॥ तस्मिन्द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ॥ राजतौ मानसस्याथ पर्वतस्यानुमंडलौ ॥ २५ ॥ महावी तंतु यद्वर्षं बाह्यतो मानसस्य तु ॥ तस्यैवाभ्यंतरो यस्तु धातकीखंड उच्यते ॥ २६ ॥ स्वादूदकेनो दधिना पुष्करः परिवारितः ॥ पुष्करद्वीपविस्तारविस्तीर्णोऽसौ समंततः ॥ २७ ॥ विस्तारान्मंडलाच्चैव पुष्करस्य समेन तु ॥ एवं द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ॥ २८ ॥ द्वीपस्यानंतरो यस्तु समुद्रः सप्तमस्तु वै ॥ एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम् ॥२९॥ परेण पुष्करस्याथ अनुवृत्यस्थितो महान् ॥ स्वादूदकसमुद्रस्तु समंतात्परिवेष्ट्य च ॥ ३० ॥ परेण तस्य महती दृश्यते लोकसंस्थितिः ॥ कांचनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥३१॥ तस्याः परेण शैलस्तु मर्यादापारमंडलः ॥ प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ ३२ ॥ दृश्यादृश्यगिरिर्यावत्तावद्वेषा धरा द्विजाः ॥ योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ ३३ ॥ तावांश्च विस्तरस्तस्य लोकालोकमहागिरेः ॥ अर्वाचीने तु तस्यार्धे चरंति रविरश्मयः ॥ ३४ ॥ परार्धे तु तमो नित्यं लोकालोकस्ततः स्मृतः ॥ एवं संक्षेपतः प्रोक्तो भूर्लोकस्य च विस्तरः ॥ ३५ ॥ आभानोर्वै भुवः स्वस्तु आध्रुवान्मुनिसत्तमाः ॥ आवहाद्या निविष्टास्तु वायोर्वै सप्त नेमयः ॥ ३६ ॥ आवहः प्रवहश्चैव ततश्चानुवहस्तथा ॥ संवहो विवहश्चाथ ततश्चोर्ध्वं परावहः ॥ ३७ ॥ द्विजाः परिवहश्चेति वायोर्वै सप्त नेमयः ॥ वलाहकास्तथा भानुश्चंद्रो नक्षत्रराशयः ॥३८॥ ग्रहाणि ऋषयः सप्त ध्रुवो विप्राः क्रमादिह ॥ योजनानां महीपृष्ठादूर्ध्वं पंचदशाध्रुवात् ॥ ३९ ॥ नियुतान्येकनियुतं भूपृष्ठाद्भानुमंडलम् ॥ रथः षोडशसाहस्रो भास्करस्य तथोपरि ॥ ४० ॥ चतुराशीतिसाहस्रो मेरुश्चोपरि भूतलात् ॥ कोटियोजनमाक्रम्य महर्लोको ध्रुवाध्रुवः ॥ ४१ ॥

इति ॥ ३६ ॥ ३७ ॥ आवहादिवायुसप्तचक्रवर्तिनः क्रमशः कथयति वलाहका इत्यादिना ॥ ३८ ॥ महीपृष्ठाद्भूपृष्ठमारभ्य आध्रुवात् ध्रुवपर्यंतमूर्ध्वं योजनानां पंचदश नियुतानि भवंतीति शेषमादायाग्रिमस्थेनान्वयः ॥ ३९ ॥ ४० ॥ ध्रुवात् ध्रुवलोकात् कोटियोजनमाक्रम्य परिच्छिद्य महर्लोकः ध्रुवः दैनंदिनप्रलयरहित इत्यर्थः ॥ ४१ ॥

॥४२॥४३॥मायाऽविद्यांते समाप्तौ यासां ता मायांताः घोरोऽहंकारः आद्यः कारणभूतो यासां ताः घोराद्याः नरकाणामष्टाविंशतिकोटय इत्यन्वयः ॥ ४४ ॥ ४५ ॥ नरकाणि प्रत्येकं पंचकानि पंचसंख्याकानि ॥४६॥ ४७ ॥ ४८ ॥ ४९ ॥५०॥ अदेहिनः वस्तुतो देहशून्यस्य परमात्मनः शिवस्य अखिलं समस्तं मायिकं देहं अहो आश्चर्यमित्यर्थः। गृहमेधिनः अष्टमूर्तेः शर्वस्य गृहिणी प्रकृतिरित्यग्रिमेणान्वयः ॥ ५१ ॥ ५२ ॥ भगवान् शिव एव षड्विंशतितत्त्वरूप इति वर्णयति आद्यंतेति । पुमान् पुरुषः प्रधानमूर्तिः प्रकृतिरूपः प्रधान

जनलोको महर्लोकात्तथा कोटिद्वयं द्विजाः ॥ जनलोकात्तपोलोकश्चतस्रः कोटयो मतः ॥ ४२ ॥ प्राजापत्याद्ब्रह्मलोकः कोटिषट्कं विसृज्य तु ॥ पुण्यलोकास्तु सप्तैते ह्यंडेस्मिन्कथिता द्विजाः ॥४३॥ अधः सप्ततलानां तु नरकाणां हि कोटयः ॥ मायांताश्चैव घोराद्या अष्टाविंशतिरेव तु ॥४४॥ पापिपनस्तेषु पच्यंते स्वस्वकर्मानुरूपतः ॥ अवीच्यंतानि सर्वाणि रौरवाद्यानि तेषु च॥४५॥प्रत्येकं पंचकान्याहुर्नरकाणि विशेषतः ॥ अंडमादौ मया प्रोक्तमंडस्यावरणानि च ॥४६॥ हिरण्यगर्भसर्गश्च प्रसंगाद्बहुविस्तरात् ॥ अंडानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः ॥ ४७ ॥ सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधस्तथा ॥ अंडेष्वेतेषु सर्वेषु भुवनानि चतुर्दश॥४८॥ प्रत्यंडं द्विजशार्दूलास्तेषां हेतुर्महेश्वरः॥ अंडेषु चांडबाह्येषु तथांडावरणेषु च ॥ ४९ ॥ तमोंते च तमःपारे चाष्टमूर्तिर्व्यवस्थितः ॥ अस्यात्मनो महेशस्य महादेवस्य धीमतः ॥ ५० ॥ अदेहिनस्त्वहो देहमखिलं परमात्मनः ॥ अस्याष्टमूर्तेः शर्वस्य शिवस्य गृहमेधिनः ॥ ५१ ॥ गृहिणी प्रकृतिर्दिव्या प्रजाश्च महदादयः ॥ पशवः किंकरास्तस्य सर्वे देहाभिमानिनः ॥ ५२ ॥ आद्यंतहीनो भगवाननंतः पुमान्प्रधानप्रमुखाश्च सप्त ॥ प्रधानमूर्तिस्त्वथ षोडशांगो महेश्वरश्चाष्टतनुः स एव ॥ ५३ ॥ आज्ञाबलात्तस्य धरा स्थितेह धराधरा वारिधराः समुद्राः ॥ ज्योतिर्गणः शक्रमुखाः सुराश्च वैमानिकाः स्थावरजंगमाश्च ॥ ५४ ॥ दृष्ट्वा यक्षं लक्षणहीनमीशं दृष्ट्वा सेंद्रास्ते किमेतत्त्विहेति ॥ यक्षं गत्वा निश्चयात्पावकाद्याः शक्तिक्षीणाश्चाभवन्यत्ततोपि ॥ ५५ ॥ दग्धुं तृणं वापि समक्षमस्य यक्षस्य वह्निर्न शशाक विप्राः ॥ वायुस्तृणं चालयितुं तथान्ये स्वान्स्वान्प्रभावान्सकलामरेंद्राः ॥ ५६ ॥ तदा स्वयं वृत्ररिपुः सुरेंद्रैः सुरेश्वरः सर्वसमृद्धिहेतुः ॥ सुरेश्वरं यक्षमुवाच को वा भवानितीत्थं स कुतूहलात्मा ॥ ५७ ॥

प्रमुखाः प्रधानाद्याः सप्त महदादयः [illegible] षोडशांगः पंचभूतदशेंद्रियमनोरूपः अष्टतनुः स शिव एवेत्यन्वयः ॥ ५३ ॥ ५४ ॥ लक्षणैः स्वकीयचिह्नैर्हीनम् ईशं शिवं यक्षं यक्षरूपिणं दृष्ट्वा सेंद्राः इंद्रसहिताः देवाः इहैतत्किंत्विति आनिश्चयाद्यक्षं गत्वा शक्तिक्षीणाः अभवन्नित्यन्वयः । एतद्विस्तरो ब्रह्मगीतायामुक्तः—"स्वस्य दर्शयितुं तेषां दुर्ज्ञेयत्वं तथैव च ॥ आविर्बभूव सर्वज्ञो यक्षरूपेण हे सुराः" इत्यादिना ॥ ५५ ॥ सुरेश्वरं शिवं यक्षं यक्षरूपिणमुवाचेत्यन्वयः ॥ ५६ ॥ ५७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ अजस्य शिवस्य नियोगादजः ब्रह्मा तस्मात् अजात् ब्रह्मणः अंडं तस्मादंडाज्ज्योतिर्गणैरखिलं लोकजातमभूत्तस्मात्तत्पूर्वोक्तं सर्वमजात्मकं शिवस्वरूप मित्यर्थः ॥ ६२ ॥ "शिवः स्वकीयैः सकलैश्च चिह्नैरुमायुतः प्राविश मानसंमे :॥ नो चेद्विभो तच्छिव भेदभ्रांत्या यक्षादिरूपं न विभावयिष्यति ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ "चतुःपंचाशकेऽध्याये सूर्यस्य गतिरुत्तमा ॥ ध्रुवस्य चाभ्रमेघानां विशेषाः समुदाहृताः ॥ १ ॥" सूतः ज्योतिश्चक्रं निरूपयति ज्योतिरित्यादिना। ग्रहाणां चारो गतिः तस्य प्रसिद्धये सम्यक् ज्ञानार्थं देवक्षेत्राणि स्थानानि आलोक्य निरूपयेत्यर्थः ॥ १ ॥ मेरोः प्राच्यां मानसोपरि मानसाचले

तदा ह्यदृश्यं गत एव यक्षस्तदांबिका हैमवती शुभास्या॥उमा शुभैराभरणैरनेकैः सुशोभमाना त्वनु चाविरासीत् ॥५८॥ तां शक्रमुख्या बहुशो भमानामुमामजां हैमवतीमपृच्छन् ॥ किमेतदीश बहुशोभमाने को वांबिके यक्षवपुश्चकास्ति ॥ ५९ ॥ निशम्य तद्यक्षमुमांबिकाह त्वगो चरश्चेति सुराः सशक्राः ॥ प्रणेमुरेनां मृगराजगामिनीमुमामजां लोहितशुक्लकृष्णाम् ॥ ६० ॥ संभाविता सा सकलामरेंद्रैः सर्वप्रवृत्तिस्तु सुरासुराणाम् ॥ अहं पुरासं प्रकृतिश्च पुंसो यक्षस्य चाज्ञावशगेत्यथाह ॥ ६१ ॥ तस्माद्विजाः सर्वमजस्य तस्य नियोगतश्चांडमभूदजाद्वै ॥ अजश्च अंडादखिलं च तस्माज्ज्योतिर्गणैर्लोकमजात्मकं तत् ॥ ६२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशविन्यासनिर्णयो नाम त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ सूत उवाच॥ ज्योतिर्गणप्रचारं वै संक्षिप्यांडे ब्रवीम्यहम् ॥ देवक्षेत्राणि चालोक्य ग्रहचारप्रसिद्धये ॥ १ ॥ मान सोपरि माहेंद्री प्राच्यां मेरोः पुरी स्थिता ॥ दक्षिणे भानुपुत्रस्य वरुणस्य च वारुणी ॥ २ ॥ सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः ॥ अमरावती संयमनी सुखा चैव विभा क्रमात् ॥ ३ ॥ लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने ॥ काष्ठां गतस्य सूर्यस्य गतिर्यां तां निबोधत ॥४॥ दक्षिणप्रक्रमे भानुः क्षिप्तेषुरिव धावति ॥ ज्योतिषां चक्रमादाय सततं परिगच्छति ॥ ५ ॥ पुरांतगो यदा भानुः शक्रस्य भवति प्रभुः॥ सर्वैः सायमनैः सौरो ह्युदयो दृश्यते द्विजाः ॥ ६ ॥ स एव सुखवत्यां तु निशांतस्थः प्रदृश्यते ॥ अस्तमेति पुनः सूर्यो विभायां वि श्वदृग्विभुः ॥ ७ ॥ मया प्रोक्तोमरावत्यां यथासौ वारितस्करः ॥ तथा संयमनीं प्राप्य सुखां चैव विभां खगः ॥ ८ ॥ यदाप्ना ह्नस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः ॥ तदा त्वपररात्रश्च वायुभागे सुदारुणः ॥ ९ ॥ ईशान्यां पूर्वरात्रस्तु गतिरेषा च सर्वतः ॥ एवं पुष्करम ध्ये तु यदा सर्पति वारिपः ॥ १० ॥ त्रिंशांशकं तु मेदिन्यां मुहूर्तेनैव गच्छति ॥ योजनानां मुहूर्तस्य इमां संख्यां निबोधत ॥ ११ ॥

परि भानुपुत्रस्य यमस्य ॥ २ ॥ ३ ॥ लोकपालोपरिष्टाल्लोकपालोपरिभागे सर्वतः सूर्यस्य गतिः दक्षिणायने काष्ठां दक्षिणाशां गतस्य या गतिस्तां निबोधत जानीतेत्यर्थः ॥ ४ ॥ क्षिप्तेषुरिव अतित्वरितगत्येत्यर्थः ॥ ५ ॥ ६ ॥ स एव संयमिनीस्थ एव सुखवत्यां निशांतस्थः प्रातःकालः प्रदृश्यत इत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ पुष्करमध्ये गगनमध्ये इत्यर्थः । "पुष्करं पंकजे व्योम्नि" इति विश्वः ॥ १० ॥ मुहूर्तस्य तत्कालगमनस्य योजनानामिमां वक्ष्यमाणां संख्यां निबोधतेत्यन्वयः ॥ ११ ॥

सा पूर्वोक्ता संख्या शतसहस्राणामेकत्रिंशत्तथान्यानि अधिकानि पंचाशच्च सहस्राणि पूर्णा संपूर्णा स्मृतेत्यन्वयः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तस्य ध्रुवस्य मनसा इच्छयेत्यर्थः । तेन ध्रुवेण अधिष्ठितः ध्रुवे स्थित इत्यर्थः ।

पूर्णा शतसहस्राणामेकत्रिंशत्तु सा स्मृता ॥ पंचाशच्च तथान्यानि सहस्राण्यधिकानि तु ॥ १२ ॥ मौहूर्तिकी गतिर्ह्येषा भास्करस्य महात्मनः ॥ एतेन गतियोगेन यदा काष्ठां तु दक्षिणाम् ॥ १३ ॥ पर्यपृच्छेत्पतंगोऽपि सौम्याशां चोत्तरेऽह्नि ॥ मध्ये तु पुष्करस्याथ भ्रमते दक्षिणायने ॥ १४ ॥ मानसोत्तरशैले तु महातेजा विभावसुः ॥ मंडलानां शतं पूर्णं तदशीत्यधिकं विभुः ॥ १५ ॥ बाह्यं चाभ्यंतरं प्रोक्तमुत्तरायणदक्षिणे ॥ प्रत्यहं चरते तानि सूर्यो वै मंडलानि तु ॥ १६ ॥ कुलालचक्रपर्यंतो यथा शीघ्रं प्रवर्तते ॥ दक्षिणप्रक्रमे देवस्तथा शीघ्रं प्रवर्तते ॥ १७ ॥ तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥ सूर्यो द्वादशभिः शीघ्रं मुहूर्तैर्दक्षिणायने ॥ १८ ॥ त्रयोदशार्धमृक्षाणामह्ना तु चरते रविः ॥ मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १९ ॥ कुलालचक्रमध्यं तु यथा मंदं प्रसर्पति ॥ तथोदगयने सूर्यः सर्पते मंदविक्रमः ॥ २० ॥ तस्मा द्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ स रथो धिष्ठितो भानोरादित्यैर्मुनिभिस्तथा ॥ २१ ॥ गंधर्वैरप्सरोभिश्च ग्रामणीः सर्पराक्षसैः ॥ प्रदीपयन् सहस्रांशुरग्रतः पृष्ठतोऽप्यधः ॥ २२ ॥ ऊर्ध्वतश्च करं त्यक्त्वा सभां ब्राह्मीमनुत्तमाम् ॥ अंभोभिर्मुनिभिस्त्यक्तैः संध्यायां तु निशाचरान् ॥ २३ ॥ हत्वा हत्वा तु संप्राप्तान्ब्राह्मणैश्चरते रविः ॥ अष्टादश मुहूर्तं तु उत्तरायणपश्चिमम् ॥ २४ ॥ अहर्भवति तच्चापि चरते मंदविक्रमः ॥ त्रयोदशार्धमृक्षाणि नक्तं द्वादशभी रविः ॥ मुहूर्तैस्तावदृक्षाणि दिवाष्टादशभिश्चरन् ॥ २५ ॥ ततो मंदतरं नाभ्यां चक्रं भ्रमति वै यथा ॥ मृत्पिंड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ २६ ॥ त्रिंशन्मुहूर्तैरेवाहुरहोरात्रं पुराविदः ॥ उभयोः काष्ठयोर्मध्ये भ्रमतो मंडलानि तु ॥ २७ ॥ कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ॥ औत्तानपादो भ्रमति ग्रहैः सार्धं ग्रहाग्रणीः ॥ २८ ॥ गणो मुनिज्योतिषां तु मनसा तस्य सर्पति ॥ अधिष्ठितः पुनस्तेन भानुस्तत्वादाय तिष्ठति ॥ २९ ॥ किरणैः सर्वतस्तोयं देवो वै ससमीरणः ॥ औत्तानपादस्य सदा ध्रुवत्वं वै प्रसादतः ॥ ३० ॥ विष्णोरौत्तानपादेन चाप्तं तातस्य हेतुना ॥ आपः पीतास्तु सूर्येण क्रमंते शशिनः क्रमात् ॥ ३१ ॥ निशाकरान्निस्रवंते जीमूतान्प्र त्यपः क्रमात् ॥ वृंदं जलमुचां चैव श्वसनेनाभिताडितम् ॥ ३२ ॥ क्ष्मायां सृष्टिं विसृजतेऽभासयत्तेन भास्करः ॥ तोयस्य नास्ति वै नाशः तदेव परिवर्तते ॥ ३३ ॥

ससमीरणः देवो भानुः किरणैः सर्वतः तोयमादाय तिष्ठतीत्यग्रिमस्थैरन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ भास्करशब्दार्थं दर्शयति अभासयज्जगदीप्तं चकार तेन दीप्तकरणेन भास्करः स्मृत इति शेषः । अत्र अभासयदिति पदच्छेदः । तत्पूर्वस्थितजलमेव परिवर्तते ऊर्ध्वाधो गच्छतीत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ गोधूमभूताः पृथिवीसंचयिधूमरूपाः याः याः ऊर्ध्वमाकाशे निष्क्रमंति तास्ताः मारुतेनेरिताः अग्निना वायुना च सहिता अभ्राणि भवंतीति शेषः ॥ ३८ ॥ अभ्रशब्दार्थमाह । आपः वारीणि भ्रमति वर्षतीत्यभ्रम् ॥ ३९ ॥ अभ्रविशेषान् सगुणान् कथयति यज्ञ इत्यादिना ॥ ४० ॥ ४१ ॥४२॥४३ ॥इह भारतखंडे षण्मासानि अपां निधानं स्थानं जीमूताः पवनाज्ञयैव जगतां हिताय वर्षयंतीत्यन्वयः ॥ ४४॥ इह मेघे स्तनितं गर्जितं वायव्यं वायुजन्यं वैद्युतं विद्युत्स्फुरणं पावकोद्भवं वह्निजन्यमित्यर्थः ॥ ४५ ॥ अभ्रशब्दस्य अन्यार्थं

हिताय सर्वजंतूनां गतिः शर्वेण निर्मिता ॥ भूर्भुवः स्वस्तथा ह्यापो ह्यन्नं चामृतमेव च ॥ ३४ ॥ प्राणा वै जगतामापो भूतानि भुवनानि च ॥ बहुनात्र किमुक्तेन चराचरमिदं जगत् ॥३५॥ अपां शिवस्य भगवानाधिपत्ये व्यवस्थितः ॥ अपां त्वधिपतिर्देवो भव इत्येव कीर्तितः ॥ ३६ ॥ भवात्मकं जगत्सर्वमिति किं चेह चाद्भुतम् ॥ नारायणत्वं देवस्य हरेश्चाद्भिः कृतं विभोः ॥ जगतामालयो विष्णुस्त्वापस्तस्यालयानि तु ॥३७॥ दंदह्यमानेषु चराचरेषु गोधूमभूतास्त्वथ निष्क्रमंति ॥ या या ऊर्ध्वं मारुतेनेरिता वै तास्तास्त्वभ्राण्यग्निना वायुना च ॥ ३८ ॥ अतो धूमाग्निवातानां संयोगस्त्वभ्रमुच्यते ॥ वारीणि वर्षतीत्यभ्रमभ्रस्येशः सहस्रदृक् ॥ ३९ ॥ यज्ञधूमोद्भवं चापि द्विजानां हितकृत्सदा॥दावाग्नि धूमसंभूतमभ्रं वनहितं स्मृतम् ॥ ४० ॥ मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति ॥ अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः ॥ ४१ ॥ एवं धूमवि शेषेण जगतां वै हिताहितम् ॥ तस्मादाच्छादयेद्धूममभिचारकृतं नरः ॥ ४२ ॥ अनाच्छाद्य द्विजः कुर्याद्धूमं यश्चाभिचारिकम् ॥ एवमुद्दिश्यलो कस्य क्षयकृच्च भविष्यति ॥ ४३ ॥ अपां निधानं जीमूताः षण्मासानिह सुव्रताः ॥ वर्षयंत्येव जगतां हिताय पवनाज्ञया ॥ ४४ ॥ स्तनितं चेह वायव्यं वैद्युतं पावकोद्भवम् ॥ त्रिधा तेषामिहोत्पत्तिरभ्राणां मुनिपुंगवाः ॥४५ ॥ न भ्रश्यंति यतोऽभ्राणि मेहनान्मेघ उच्यते ॥ काष्ठा वाह्नाश्च वै रिंच्याः पक्षाश्चैव पृथग्विधाः ॥ ४६ ॥ आज्यानां काष्ठसंयोगादग्नेर्धूमः प्रवर्तितः ॥ द्वितीयानां च संभूतिर्विरिंचोच्छ्वास वायुना ॥ ४७ ॥ भूभृतां त्वथ पक्षैस्तु मघवच्छेदितैस्ततः ॥ वाह्नयास्त्वथ जीमूतास्त्वावहस्थानगाः शुभाः ॥४८॥ विरिंचोच्छ्वासजाः सर्वे प्रवहस्कंधजास्ततः ॥ पक्षजाः पुष्कराद्याश्च वर्षंति च यदा जलम् ॥ ४९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दर्शयति न भ्रश्यंति नाधः पतंतीत्यभ्राणि मेहनात्सेचनान्मेघ उच्यते कथ्यत इत्यर्थः । काष्ठाः काष्ठमयी इदं वाह्नविशेषणं पक्षाः पक्षजाः ॥ ४६ ॥ आज्यानामाज्यसंबंधेन काष्ठसं योगात्तद्धेतुकः अग्नेरग्निसकाशात्प्रवर्तितः प्रवृत्तः धूमः प्रथमानां हेतुरिति शेषः ॥ ४७॥ ततस्तदनंतराणां तृतीयानामित्यर्थः । मघवच्छेदितैर्भूभृतां पक्षैः संभूतिरित्यनुषंगः वाह्नेयाः जीमूताः आवहस्थानगाः आवहसंज्ञकवायुस्कंधवर्तिन इत्यर्थः॥४८॥प्रवहस्कंधजाः द्वितीयतत्संज्ञकवायुस्कंधभवा इत्यर्थः । ततस्तदुपरिष्टाद्वर्तमानाः पुष्कराद्याः पुष्करादिसंज्ञकाः

एते नीलादय इत्यर्थः ॥ ५१ ॥ "देवाद्यैः स्पृहणीयं त्राह्मण्यं भारते वर्षे ॥ दत्तं कृपया शभो सफलं भूयात्प्रसादात्ते ॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विपंचाशोऽध्यायः॥५२॥"त्रिपंचाशत्तमे प्रोक्तं प्लक्षद्वीपाद्यनुक्रमात्॥भूलोकश्चोर्ध्वलोकाश्च नरका यक्षचेष्टितम्॥१॥"प्लक्षद्वीपादिद्वीपेषु सतससप्तसु पर्वताःसंतीति शेषः वर्षपर्वताः वर्षवि

मयूरबर्हवर्णस्तु शातकुंभस्त्रिशृंगवान् ॥ एते पर्वतराजानो जंबुद्वीपे व्यवस्थिताः ॥५१॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशस्वभाववर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ सूत उवाच ॥ प्लक्षद्वीपादिद्वीपेषु सप्त सप्तसु पर्वताः ॥ ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्वताः ॥ १ ॥ प्लक्षद्वीपे तु वक्ष्यामि सप्त दिव्यान्महाचलान् ॥ गोमेदकोऽत्र प्रथमो द्वितीयश्चांद्र उच्यते ॥२॥ तृतीयो नारदो नाम चतुर्थो दुंदुभिः स्मृतः ॥ पंचमः सोमको नाम सुमनाः षष्ठ उच्यते ॥ ३ ॥ स एव वैभ्रवः प्रोक्तो वैभ्राजः सप्तमः स्मृतः ॥ सप्तैते गिरयः प्रोक्ताः प्लक्षद्वीपे विशेषतः ॥ ४ ॥ सप्त वै शाल्मलिद्वीपे तांस्तु वक्ष्याम्यनुक्रमात् ॥ कुमुदश्चोत्तमश्चैव पर्वतश्च बलाहकः ॥५॥ द्रोणः कंकश्च महिषः ककुद्मान् सप्तमः स्मृतः ॥ कुशद्वीपे तु सप्तैव द्वीपाश्च कुलपर्वताः॥६॥तांस्तु संक्षेपतो वक्ष्ये नाममात्रेण वै क्रमात्॥विद्रुमः प्रथमः प्रोक्तो द्वितीयो हेमपर्वतः॥७॥तृतीयो द्युतिमान्नाम चतुर्थः पुष्पितः स्मृतः ॥ कुशेशयः पंचमस्तु षष्ठो हरिगिरिः स्मृतः ॥८॥ सप्तमो मंदरः श्रीमान्महादेवनिकेतनम् ॥ मंदा इति ह्यपां नाम मंदरो धारणादपाम् ॥ ९ ॥ तत्र साक्षाद्वृषांकस्तु विश्वेशो विमलः शिवः ॥ सोमः सनंदी भगवानास्ते हैमगृहेऽत्तमे ॥१०॥ तपसा तोषितः पूर्वं मंदरेण महेश्वरः॥अविमुक्त महाक्षेत्रे लेभे स परमं वरम् ॥११॥ प्रार्थितश्च महादेवो निवासार्थं सहांबया ॥ अविमुक्ताद्दुपागम्य चक्रे वासं स मंदरे॥१२॥ सनंदी सगणः सोमस्तेनासौ तत्र मुंचति ॥ क्रौंचद्वीपे तु सप्तेह क्रौंचाद्याः कुलपर्वताः॥१३॥ क्रौंचो वामनकः पश्चात्तृतीयश्चांधकारकः॥ अंधकारा त्परश्चापि दिवावृन्नाम पर्वतः॥१४॥ दिवावृतः परश्चापि विविंदो गिरिरुच्यते ॥ विविंदात्परतश्चापि पुंडरीको महागिरिः ॥१५॥ पुंडरीकात्परश्चापि प्रोच्यते दुंदुभिस्वनः ॥ एते रत्नमयाः सप्त क्रौंचद्वीपस्य पर्वताः ॥ १६ ॥ शाकद्वीपे च गिरयः सप्त तांस्तु निबोधत ॥ उदयो रैवतश्चापि श्यामको मुनिसत्तमाः ॥१७॥ राजतश्च गिरिः श्रीमानांविकेयः सुशोभनः ॥ आंविकेयात्परो रम्यः सर्वौषधिसमन्वितः ॥ १८ ॥ तथैव केसरीत्युक्तो यतो वायुः प्रजायते ॥ पुष्करे पर्वतः श्रीमान्नेक एव महाशिलः ॥ १९ ॥

भाजकगिरयः"ऋज्वायताः प्रतिदिशं निविष्टा इत्यन्वयः ॥१॥२॥३॥४॥५॥६॥ तान् कुलपर्वतानित्यर्थः ॥७॥८॥ मंदरशब्दार्थं दर्शयति मन्दा इति । अपां शिवमौलिनिःसृतगंगोदकानाम् एतदर्थकं मदर इति रूपं पृषोदरादित्वात् ज्ञेयम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ तेन वरेणेत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ महत्यः शिलाः यस्मिन्नसौ महाशिलः ॥ १९ ॥ चित्राणि चित्रवर्णानि सानूनि शिखराणि यस्य स चित्रसानुः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८॥ एवं पूर्वोक्तक्रमेणेत्यर्थः ॥२९॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ आभानोर्भानुमंडलपर्यंतमित्यर्थः भुवः तत्संज्ञकलोकः आध्रुवात् ध्रुवपर्यंतं स्वः स्वर्लोक इत्यर्थः । वायुचक्राणि कथयति आवहाद्या

चित्रैर्मणिमयैः कूटैः शिलाजालैः समुच्छ्रितैः ॥ द्वीपस्य तस्य पूर्वार्धे चित्रसानुस्थितो महान् ॥ २० ॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ अधश्चैव चतुस्त्रिंशत्सहस्राणि महाचलः ॥ २१ ॥ द्वीपस्यार्धे परिक्षिप्तः पर्वतो मानसोत्तरः ॥ स्थितो वेलासमीपे तु नवचंद्र इवोदितः ॥ २२ ॥ योजनानां सहस्राणि ऊर्ध्वं पंचाशदुच्छ्रितः ॥ तावदेव तु विस्तीर्णः पार्श्वतः परिमंडलः ॥ २३ ॥ स एव द्वीपपश्चार्धे मानसः पृथिवीधरः ॥ एक एव महासानुः सन्निवेशाद्द्विधा कृतः ॥ २४ ॥ तस्मिन्द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ॥ राजतौ मानसस्याथ पर्वतस्यानुमंडलौ ॥ २५ ॥ महावी तंतु यद्वर्षं वाह्यतो मानसस्य तु ॥ तस्यैवाभ्यंतरो यस्तु धातकीखंड उच्यते ॥ २६ ॥ स्वादूदकेनो दधिना पुष्करः परिवारितः ॥ पुष्करद्वीपविस्तारविस्तीर्णोऽसौ समंततः ॥ २७ ॥ विस्तारान्मंडलाच्चैव पुष्करस्य समेन तु ॥ एवं द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ॥ २८ ॥ द्वीपस्यानंतरो यस्तु समुद्रः सप्तमस्तु वै ॥ एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम् ॥२९॥ परेण पुष्करस्याथ अनुवृत्यस्थितो महान् ॥ स्वादूदकसमुद्रस्तु समंतात्परिवेष्ट्य च ॥ ३० ॥ परेण तस्य महती दृश्यते लोकसंस्थितिः ॥ कांचनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥३१॥ तस्याः परेण शैलस्तु मर्यादापारमंडलः ॥ प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ ३२ ॥ दृश्यादृश्यगिरिर्यावत्तावद्देषा धरा द्विजाः ॥ योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ ३३ ॥ तावांश्च विस्तरस्तस्य लोकालोकमहागिरेः ॥ अर्वाचीने तु तस्यार्धे चरंति रविरश्मयः ॥ ३४ ॥ परार्धे तु तमो नित्यं लोकालोकस्ततः स्मृतः ॥ एवं संक्षेपतः प्रोक्तो भूर्लोकस्य च विस्तरः ॥ ३५ ॥ आभानोर्वै भुवः स्वस्तु आध्रुवान्मुनिसत्तमाः ॥ आवहाद्या निविष्टास्तु वायोर्वै सप्त नेमयः ॥ ३६ ॥ आवहः प्रवहश्चैव ततश्चानुवहस्तथा ॥ संवहो विवहश्चाथ ततश्चोर्ध्वं परावहः ॥ ३७ ॥ द्विजाः परिवहश्चेति वायोर्वै सप्त नेमयः ॥ बलाहकास्तथा भानुश्चंद्रो नक्षत्रराशयः ॥३८॥ ग्रहाणि ऋषयः सप्त ध्रुवो विप्राः क्रमादिह ॥ योजनानां महीपृष्ठादूर्ध्वं पंचदशाध्रुवात् ॥ ३९ ॥ नियुतान्येकनियुतं भूपृष्ठाद्भानुमंडलम् ॥ रथः षोडशसाहस्रो भास्करस्य तथोपरि ॥ ४० ॥ चतुराशीतिसाहस्रो मेरुश्चोपरि भूतलात् ॥ कोटियोजनमाक्रम्य महर्लोको ध्रुवाद्ध्रुवः ॥ ४१ ॥

इति ॥ ३६ ॥ ३७ ॥ आवहादिवायुसप्तचक्रवर्तिनः क्रमशः कथयति बलाहका इत्यादिना ॥ ३८ ॥ महीपृष्ठाद्भूपृष्ठमारभ्य आध्रुवात् ध्रुवपर्यंतमूर्ध्वं योजनानां पंचदश नियुतानि भवंतीति शेषमादायाग्रिमस्थेनान्वयः ॥ ३९ ॥ ४० ॥ ध्रुवात् ध्रुवलोकात् कोटियोजनमाक्रम्य परिच्छिद्य महर्लोकः ध्रुवः दैनंदिनप्रलयरहित इत्यर्थः ॥ ४१ ॥

॥४२॥४३॥मायाऽविद्यांते समाप्तौ यासां ता मायांताः घोरोऽहंकारः आद्यः कारणभूतो यासां ताः घोराद्याः नरकाणामष्टाविंशतिकोटय इत्यन्वयः ॥ ४४ ॥ ४५ ॥ नरकाणि प्रत्येकं पंचकानि पंचसंख्याकानि ॥४६॥ ४७ ॥ ४८ ॥ ४९ ॥५०॥ अदेहिनः वस्तुतो देहशून्यस्य परमात्मनः शिवस्य अखिलं समस्तं मायिकं देहं अहो आश्चर्यमित्यर्थः। गृहमेधिनः अष्टमूर्तेः शर्वस्य गृहिणी प्रकृतिरित्यग्रिमेणान्वयः ॥ ५१ ॥ ५२ ॥ भगवान् शिव एव षड्विंशतितत्त्वरूप इति वर्णयति आद्यंतेति । पुमान् पुरुषः प्रधानमूर्तिः प्रकृतिरूपः प्रधान

जनलोको महर्लोकात्तथा कोटिद्वयं द्विजाः ॥ जनलोकात्तपोलोकश्चतस्रः कोटयो मताः ॥ ४२ ॥ प्राजापत्याद्ब्रह्मलोकः कोटिषट्कं विसृज्य तु ॥ पुण्यलोकास्तु सप्तैते ह्यंडेऽस्मिन्कथिता द्विजाः ॥४३॥ अधः सप्ततलानां तु नरकाणां हि कोटयः ॥ मायांताश्चैव घोराद्या अष्टाविंशतिरेव तु ॥४४॥ पापिनस्तेषु पच्यंते स्वस्वकर्मानुरूपतः ॥ अवीच्यंतानि सर्वाणि रौरवाद्यानि तेषु च॥४५॥प्रत्येकं पंचकान्याहुर्नरकाणि विशेषतः ॥ अंडमादौ मया प्रोक्तमंडस्यावरणानि च ॥४६॥ हिरण्यगर्भसर्गश्च प्रसंगाद्बहुविस्तरात् ॥ अंडानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः ॥ ४७ ॥ सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधस्तथा ॥ अंडेष्वेतेषु सर्वेषु भुवनानि चतुर्दश ॥४८॥ प्रत्यंडं द्विजशार्दूलास्तेषां हेतुर्महेश्वरः॥ अंडेषु चांडवाह्येषु तथांडावरणेषु च ॥ ४९ ॥ तमोंते च तमःपारे चाष्टमूर्तिर्व्यवस्थितः ॥ अस्यात्मनो महेशस्य महादेवस्य धीमतः ॥ ५० ॥ अदेहिनस्त्वहो देहमखिलं परमात्मनः ॥ अस्याष्टमूर्तेः शर्वस्य शिवस्य गृहमेधिनः ॥ ५१ ॥ गृहिणी प्रकृतिर्दिव्या प्रजाश्च महदादयः ॥ पशवः किंकरास्तस्य सर्वे देहाभिमानिनः ॥ ५२ ॥ आद्यंतहीनो भगवाननंतः पुमान्प्रधानप्रमुखाश्च सप्त ॥ प्रधानमूर्तिस्त्वथ षोडशांगो महेश्वरश्चाष्टतनुः स एव ॥ ५३ ॥ आज्ञाबलात्तस्य धरा स्थितेह धराधरा वारिधराः समुद्राः ॥ ज्योतिर्गणः शक्रमुखाः सुराश्च वैमानिकाः स्थावरजंगमाश्च ॥ ५४ ॥ दृष्ट्वा यक्षं लक्षणैर्हीनमीशं दृष्ट्वा सेंद्रास्ते किमेतत्त्विहेति ॥ यक्ष गत्वा निश्चयात्पावकाद्याः शक्तिक्षीणाश्चाभवन्यत्ततोपि ॥ ५५ ॥ दग्धुं तृणं वापि समक्षमस्य यक्षस्य वह्निर्न शशाक विप्राः ॥ वायुस्तृणं चालयितुं तथान्ये स्वान्स्वान्प्रभावान्सकलामरेंद्राः ॥ ५६ ॥ तदा स्वयं वृत्ररिपुः सुरेंद्रैः सुरेश्वरः सर्वसमृद्धिहेतुः ॥ सुरेश्वरं यक्षमुवाच को वा भवानितीत्थं स कुतूहलात्मा ॥ ५७ ॥

प्रमुखाः प्रधानाद्याः सप्त महदादयः पंच तन्मात्राः षोडशांगः पंचभूतदशेंद्रियमनोरूपः अष्टतनुः स शिव एवेत्यन्वयः ॥ ५३ ॥ ५४ ॥ लक्षणैः स्वकीयचिह्नैर्हीनम् ईशं शिवं यक्षं यक्षरूपिणं दृष्ट्वा सेंद्राः इंद्रसहिताः देवाः इहैतत्किंत्विति आनिश्चयाद्यक्षं गत्वा शक्तिक्षीणाः अभवन्नित्यन्वयः । एतद्विस्तरो ब्रह्मगीतायामुक्तः—"स्वस्य दर्शयितुं तेषां दुर्ज्ञेयत्वं तथैव च ॥ आविर्बभूव सर्वज्ञो यक्षरूपेण हे सुराः" इत्यादिना ॥ ५५ ॥ सुरेश्वरं शिवं यक्षं यक्षरूपिणमुवाचेत्यन्वयः ॥ ५६ ॥ ५७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ अजस्य शिवस्य नियोगादजः ब्रह्मा तस्मात् अजात् ब्रह्मणः अंडं तस्मादंडाज्ज्योतिर्गणैरखिलं लोकजातमभूत्तस्मात्तत्पूर्वोक्तं सर्वमजात्मकं शिवस्वरूप मित्यर्थः ॥ ६२ ॥ "शिवः स्वकीयैः सकलैश्च चिह्नैरुमायुतः प्राविश मानसं मे ॥ नो चेद्विभो तच्छिव भेदभ्रांत्या पत्नादिरूपं न विभावयिष्यति ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ "चतुःपंचाशकेऽध्याये सूर्यस्य गतिरुत्तमा ॥ ध्रुवस्य चाभ्रमेघानां विशेषाः समुदाहृताः ॥ १ ॥" सूतः ज्योतिश्चक्रं निरूपयति ज्योतिरित्यादिना। ग्रहाणां चारो गतिः तस्य प्रसिद्धये सम्यक् ज्ञानार्थं देवक्षेत्राणि स्थानानि आलोक्य निरूप्येत्यर्थः ॥ १ ॥ मेरोः प्राच्यां मानसोपरि मानसाचलो

तदा ह्यदृश्यं गत एव यक्षस्तदांबिका हैमवती शुभास्या॥उमा शुभैराभरणैरनेकैः सुशोभमाना त्वनु चाविरासीत् ॥५८॥ तां शक्रमुख्या बहुशो भमानाम्रुमामजां हैमवतीमपृच्छन् ॥ किमेतदीश बहुशोभमाने को वांबिके यक्षवपुश्च कास्ति ॥ ५९ ॥ निशम्य तद्ब्रह्ममुमांबिकाह त्वगो चरश्चेति सुराः सशक्राः ॥ प्रणेमुरेनां मृगराजगामिनीमुमामजां लोहितशुक्लकृष्णाम् ॥ ६० ॥ संभाविता सा सकलामरेंद्रैः सर्वप्रवृत्तिस्तु सुरासुराणाम् ॥ अहं पुरासं प्रकृतिश्च पुंसो यक्षस्य चाज्ञावशगेत्यथाह ॥ ६१ ॥ तस्माद्द्विजाः सर्वमजस्य तस्य नियोगतश्चांडमभूदजाद्वै ॥ अजश्च अंडादखिलं च तस्माज्ज्योतिर्गणैर्लोकमजात्मकं तत् ॥ ६२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशविन्यासनिर्णयो नाम त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ सूत उवाच॥ ज्योतिर्गणप्रचारं वै संक्षिप्यांडे ब्रवीम्यहम् ॥ देवक्षेत्राणि चालोक्य ग्रहचारप्रसिद्धये ॥ १ ॥ मान सोपरि माहेंद्री प्राच्यां मेरोः पुरी स्थिता ॥ दक्षिणे भानुपुत्रस्य वरुणस्य च वारुणी ॥ २ ॥ सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः ॥ अमरावती संयमनी सुखा चैव विभा क्रमात् ॥ ३ ॥ लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने ॥ काष्ठां गतस्य सूर्यस्य गतिर्या तां निबोधत ॥४॥ दक्षिणप्रक्रमे भानुः क्षिप्तेषुरिव धावति ॥ ज्योतिषां चक्रमादाय सततं परिगच्छति ॥ ५ ॥ पुरांतगो यदा भानुः शक्रस्य भवति प्रभुः॥ सर्वैः सायमनैः सौरो ह्युदयो दृश्यते द्विजाः ॥ ६॥ स एव सुखवत्यां तु निशांतस्थः प्रदृश्यते ॥ अस्तमेति पुनः सूर्यो विभायां वि श्वदृग्विभुः ॥ ७ ॥ मया प्रोक्तोमरावत्यां यथासौ वारितस्करः ॥ तथा संयमनीं प्राप्य सुखां चैव विभां खगः ॥ ८ ॥ यदाप्र ह्लस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः ॥ तदा त्वपररात्रश्च वायुभागे सुदारुणः ॥ ९ ॥ ईशान्यां पूर्वरात्रस्तु गतिरेषा च सर्वतः ॥ एवं पुष्करम ध्ये तु यदा सर्पति वारिपः ॥ १० ॥ त्रिंशांशकं तु मेदिन्यां मुहूर्तेनैव गच्छति ॥ योजनानां मुहूर्तस्य इमां संख्यां निबोधत ॥ ११ ॥

परि भानुपुत्रस्य यमस्य ॥ २ ॥ ३ ॥ लोकपालोपरिष्टाल्लोकपालोपरिभागे सर्वतः सूर्यस्य गतिः दक्षिणायने काष्ठां दक्षिणाशां गतस्य या गतिस्तां निबोधत जानीतेत्यर्थः ॥ ४ ॥ क्षिप्तेषुरिव अतित्वरितगत्येत्यर्थः ॥ ५ ॥ ६ ॥ स एव संयमिनीस्थ एव सुखवत्यां निशांतस्थः प्रातःकालः प्रदृश्यत इत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ पुष्करमध्ये गगनमध्ये इत्यर्थः । "पुष्करं पंकजे व्योम्नि" इति विश्वः ॥ १० ॥ मुहूर्तस्य तत्कालगमनस्य योजनानामिमां वक्ष्यमाणां संख्यां निबोधतेत्यन्वयः ॥ ११ ॥

सा पूर्वोक्ता संख्या शतसहस्राणामेकत्रिंशत्तथान्यानि अधिकानि पंचाशच्च सहस्राणि पूर्णा संपूर्णा स्मृतेत्यन्वयः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तस्य ध्रुवस्य मनसा इच्छयेत्यर्थः । तेन ध्रुवेण अधिष्ठितः ध्रुवे स्थित इत्यर्थः ।

पूर्णा शतसहस्राणामेकत्रिंशच्च सा स्मृता ॥ पंचाशच्च तथान्यानि सहस्राण्यधिकानि तु ॥ १२ ॥ मौहूर्तिकी गतिर्ह्येषा भास्करस्य महात्मनः ॥ एतेन गतियोगेन यदा काष्ठां तु दक्षिणाम् ॥ १३ ॥ पर्यपृच्छेत्पतंगोऽपि सौम्याशां चोत्तरेऽह्नि ॥ मध्ये तु पुष्करस्याथ भ्रमते दक्षिणायने ॥ १४ ॥ मानसोत्तरशैले तु महातेजा विभावसुः ॥ मंडलानां शतं पूर्णं तदशीत्यधिकं विभुः ॥ १५ ॥ बाह्यं चाभ्यंतरं प्रोक्तमुत्तरायणदक्षिणे ॥ प्रत्यहं चरते तानि सूर्यो वै मंडलानि तु ॥ १६ ॥ कुलालचक्रपर्यंतो यथा शीघ्रं प्रवर्तते ॥ दक्षिणप्रक्रमे देवस्तथा शीघ्रं प्रवर्तते ॥ १७ ॥ तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥ सूर्यो द्वादशभिः शीघ्रं मुहूर्तैर्दक्षिणायने ॥ १८ ॥ त्रयोदशार्धमृक्षाणामह्ना तु चरते रविः ॥ मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १९ ॥ कुलालचक्रमध्यं तु यथा मंदं प्रसर्पति ॥ तथोदगयने सूर्यः सर्पते मंदविक्रमः ॥ २० ॥ तस्मा द्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ स रथो धिष्ठितो भानोरादित्यैर्मुनिभिस्तथा ॥ २१ ॥ गंधर्वैरप्सरोभिश्च ग्रामणीः सर्पराक्षसैः ॥ प्रदीपयन् सहस्रांशुरग्रतः पृष्ठतोऽप्यधः ॥ २२ ॥ ऊर्ध्वतश्च करं त्यक्त्वा सभां ब्राह्मीमनुत्तमाम् ॥ अंभोभिर्मुनिभिस्त्यक्तैः संध्यायां तु निशाचरान् ॥ २३ ॥ हत्वा हत्वा तु संप्राप्तान्ब्राह्मणैश्चरते रविः ॥ अष्टादश मुहूर्तं तु उत्तरायणपश्चिमम् ॥ २४ ॥ अहर्भवति तच्चापि चरते मंदविक्रमः ॥ त्रयोदशार्धमृक्षाणि नक्तं द्वादशभी रविः ॥ मुहूर्तैस्तावदृक्षाणि दिवाष्टादशभिश्चरन् ॥ २५ ॥ ततो मंदतरं नाभ्यां चक्रं भ्रमति वै यथा ॥ मृत्पिंड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ २६ ॥ त्रिंशन्मुहूर्तैरेवाहुरहोरात्रं पुराविदः ॥ उभयोः काष्ठयोर्मध्ये भ्रमतो मंडलानि तु ॥ २७ ॥ कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ॥ औत्तानपादो भ्रमति ग्रहैः सार्धं ग्रहाग्रणीः ॥ २८ ॥ गणो मुनिज्योतिषां तु मनसा तस्य सर्पति ॥ अधिष्ठितः पुनस्तेन भानुस्त्वादाय तिष्ठति ॥ २९ ॥ किरणैः सर्वतस्तोयं देवो वै ससमीरणः ॥ औत्तानपादस्य सदा ध्रुवत्वं वै प्रसादतः ॥ ३० ॥ विष्णोरौत्तानपादेन चाप्तं तातस्य हेतुना ॥ आपः पीतास्तु सूर्येण क्रमंते शशिनः क्रमात् ॥ ३१ ॥ निशाकरान्निस्रवंते जीमूतान्त्र त्यपः क्रमात् ॥ वृंदं जलमुचां चैव श्वसनेनाभिताडितम् ॥ ३२ ॥ क्ष्मायां सृष्टिं विसृजतेऽभासयत्तेन भास्करः ॥ तोयस्य नास्ति वै नाशः तदेव परिवर्तते ॥ ३३ ॥

ससमीरणः देवो भानुः किरणैः सर्वतः तोयमादाय तिष्ठतीत्यग्निमस्थैरन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ भास्करशब्दार्थं दर्शयति अभासयज्जगदीशं चकार तेन दीप्तकरणेन भास्करः स्मृत इति शेषः । अत्र अभासयदिति पदच्छेदः । तत्पूर्वस्थितजलमेव परिवर्तते ऊर्ध्वाधो गच्छतीत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ गोधूमभूताः पृथिवीसंबंधिधूमरूपाः याया: ऊर्ध्वमाकाशे निष्क्रमंति तास्ताः मारुतेनेरिताः अग्निना वायुना च सहिता अभ्राणि भवंतीति शेषः ॥ ३८ ॥ अभ्रशब्दार्थमाह। आपः वारीणि भ्रमति वर्षतीत्यभ्रम् ॥ ३९ ॥ अभ्रविशेषान् सगुणान् कथयति यज्ञ इत्यादिना ॥ ४० ॥ ४१ ॥४२॥४३ ॥इह भारतखंडे षण्मासानि अत्रां निधानं स्थानं जीमूताः पवनाज्ञयैव जगतां हिताय वर्षयंतीत्यन्वयः ॥ ४४॥ इह मेघे स्तनितं गर्जितं वायव्यं वायुजन्यं वैद्युतं विद्युत्स्फुरणं पावकोद्भवं वह्निजन्यमित्यर्थः ॥ ४५ ॥ अभ्रशब्दस्य अन्यार्थ

हिताय सर्वजंतूनां गतिः शर्वेण निर्मिता ॥ भूर्भुवः स्वस्तथा ह्यापो ह्यन्नं चामृतमेव च ॥ ३४ ॥ प्राणा वै जगतामापो भूतानि भुवनानि च ॥ बहुनात्र किमुक्तेन चराचरमिदं जगत् ॥३५॥ अपां शिवस्य भगवानाधिपत्ये व्यवस्थितः ॥ अपां त्वधिपतिर्देवो भव इत्येव कीर्तितः ॥ ३६ ॥ भवात्मकं जगत्सर्वमिति किं चेह चाद्भुतम् ॥ नारायणत्वं देवस्य हरेश्चाद्भिः कृतं विभोः ॥ जगतामालयो विष्णुस्त्वापस्तस्यालयानि तु ॥३७॥ दंदह्यमानेषु चराचरेषु गोधूमभूतास्त्वथ निष्क्रमंति ॥ या या ऊर्ध्वं मारुतेनेरिता वै तास्तास्त्वभ्राण्यग्निना वायुना च ॥ ३८ ॥ अतो धूमाग्निवातानां संयोगस्त्वभ्रमुच्यते ॥ वारीणि वर्षतीत्यभ्रमभ्रस्येशः सहस्रदृक् ॥ ३९ ॥ यज्ञधूमोद्भवं चापि द्विजानां हितकृत्सदा॥दावाग्नि धूमसंभूतमभ्रं वनहितं स्मृतम् ॥ ४० ॥ मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति ॥ अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः ॥ ४१ ॥ एवं धूमवि शेषेण जगतां वै हिताहितम् ॥ तस्मादाच्छादयेद्धूममभिचारकृतं नरः ॥ ४२ ॥ अनाच्छाद्य द्विजः कुर्याद्धूमं यश्चाभिचारिकम् ॥ एवमुद्दिश्यलो कस्य क्षयकृच्च भविष्यति ॥ ४३ ॥ अपां निधानं जीमूताः षण्मासानिह सुव्रताः ॥ वर्षयंत्येव जगतां हिताय पवनाज्ञया ॥ ४४ ॥ स्तनितं चेह वायव्यं वैद्युतं पावकोद्भवम् ॥ त्रिधा तेषामिहोत्पत्तिरभ्राणां मुनिपुंगवाः ॥४५॥ न भ्रश्यंति यतोऽभ्राणि मेहनान्मेघ उच्यते ॥ काष्ठा बाह्लाश्च वै रिंच्याः पक्षाश्चैव पृथग्विधाः ॥ ४६ ॥ आज्यानां काष्ठसंयोगादग्नेर्धूमः प्रवर्तितः ॥ द्वितीयानां च संभूतिर्विरिंचोच्छ्वास वायुना ॥ ४७ ॥ भूभृतां त्वथ पक्षैस्तु मघवच्छेदितैस्ततः ॥ बाह्लेयास्त्वथ जीमूतास्त्वावहस्थानगाः शुभाः ॥४८॥ विरिंचोच्छ्वासजाः सर्वे प्रवहस्कंधजास्ततः ॥ पक्षजाः पुष्कराद्याश्च वर्षंति च यदा जलम् ॥ ४९ ॥

दर्शयति न भ्रश्यंति नाधः पतंतीत्य [illegible] ॥ ४६ ॥ आज्यानामाज्यसंबंधेन काष्ठसं योगात्तद्धेतुकः अग्नेरग्निसकाशात्प्रवर्तितः प्रवृत्तः धूमः प्रथमानां हेतुरिति शेषः ॥ ४७॥ ततस्तदनंतराणां तृतीयानामित्यर्थः । मघवच्छेदितैर्भूभृतां पक्षैः संभूतिरित्यनुषंगः बाह्लेयाः जीमूताः आवहस्थानगाः आवहसंज्ञकवायुस्कंधवर्तिन इत्यर्थः॥४८॥प्रवहस्कंधजाः द्वितीयतत्संज्ञकवायुस्कंधभवा इत्यर्थः । ततस्तदुपरिष्टाद्वर्तमानाः पुष्कराद्याः पुष्करादिसंज्ञकाः

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पक्षजाश्च जलदाः जलं वर्षतीत्यन्वयः ॥ ४९ ॥ मूकाः शब्दवर्जिताः सशब्दाः सगर्जिताः दुष्टा आशा येषां ते दुष्टाशाः प्रलयकरा इत्यर्थः । तैः पूर्वोक्तत्रिविधैस्तु यथाक्रमं कृत्यं वक्ष्यमाणकार्यं ज्ञेयमिति शेषः । वाक्जीमूतकृत्यं कथयति । दीर्घकालं क्षामवृष्टिकराः कृशधारावर्षकाः शीतसमीरोस्ति येषु ते शीतसमीरिणः ॥ ५० ॥ क्षीणाः क्षीणसामर्थ्याः जीवकाः श्वासजाः विद्युद्ध्वनिविवर्जिताः धरापृष्ठादितस्ततः आक्रोशमात्रे क्रोशमर्यादे देशे तिष्ठंतीत्यन्वयः॥५१॥ साध्यत्वात्संसिद्धत्वाद्विद्युतश्च गुणाः शब्दादयश्च तैः समन्विताः क्ष्मायां बहुतोयदाः मेघाः श्वासजाः धरापृष्ठाद्योजनमात्रं तिष्ठंतीत्यग्रिमस्यैरन्वयः॥५२॥ तेषांतेषां प्रथमद्वितीयानां वृष्टिसर्गं त्रेधा पूर्वोक्तत्रिप्रकारं कथितमित्यन्वयः॥ ५३॥ तृतीयवृष्टिसर्गं कथयति पक्षजा इत्यादिना॥५४॥५५॥धूमः आप्यायनो वृद्धिकर इत्यर्थः॥५६॥विद्युताःवैद्युद्विशिष्टाःपौंड्राः पुंड्रदेशीयाः सर्वा वृष्टयः शीते शीतविशिष्टे देशे सस्यं शीतसस्यं ददतीति शीतसस्यदाः स्युरिति शेषः।नागानां तोयदानाम्। "नागः पुन्नागमातंगक्रूराचारिषु तोयदे" इति विश्वः॥५७॥ गंगांबुसंभूताः अत एव गांगा वृष्टय इत्यनुषंगः।परावहैस्तत्संज्ञकवायुभिः नगानां पर्वतादीनां च पृथग्भूतं जलं पर्जन्येन समाकुलं यथा स्यात्तथा अगादगं पर्वतात्पर्वतं प्रकर्षेण आयाति तत्प्रायात् गच्छत् परावहो यः श्वसनः सः अंबिकागुरुं हिमालयमानयतीत्यग्रिमेणान्वयः॥५८॥५९॥ अपरांतविवृद्धये समुद्रमध्यदेशीयवृद्ध्यर्थमित्यर्थः ॥६०॥ अद्य वः तु सस्यद्वयस्य विवृद्धये द्विधा वृष्टयः संक्षेपात्कथिताः यथामति आदित्यस्वरूपमिति शेषः प्रब्रवीमीत्यन्वयः ॥ ६१ ॥ ६२ ॥

मूकाः सशब्ददुष्टाशास्त्वेतैः कृत्यं यथाक्रमम् ॥ क्षामवृष्टिप्रदा दीर्घकालं शीतसमीरिणः ॥ ५० ॥ जीवकाश्च तथा क्षीणा विद्युद्ध्वनिविवर्जिताः ॥ तिष्ठंत्याक्रोशमात्रे तु धरापृष्ठादितस्ततः ॥५१॥ अर्धक्रोशे तु सर्वे वै जीमूता गिरिवासिनः ॥ मेघा योजनमात्रं तु साध्यत्वाद्बहुतोयदाः ॥ ५२ ॥ धरापृष्ठाद्द्विजाः क्ष्मायां विद्युद्गुणसमन्विताः ॥ तेषां तेषां वृष्टिसर्गं त्रेधा कथितमत्र तु ॥५३॥ पक्षजाः कल्पजाः सर्वे पर्वतानां महत्तमाः॥ कल्पांते ते च वर्षंति रात्रौ नाशाय शारदाः ॥५४॥ पक्षजाः पुष्कराद्याश्च वर्षंति च यदा जलम् ॥ तदार्णवमभूत्सर्वं तत्र शेते निशीश्वरः ॥ ५५ ॥ आग्नेयानां श्वासजानां पक्षजानां द्विजर्षभाः ॥ जलदानां सदा धूमो ह्याप्यायन इति स्मृतः ॥५६॥ पौंड्रास्तु वृष्टयः सर्वा वैद्युताः शीतसस्यदाः ॥ पुंड्रदेशेषु पतिता नागानां शीकरा हिमाः ॥ ५७ ॥ गांगा गंगांबुसंभूता पर्जन्येन परावहैः ॥ नगानां च नदीनां च दिग्गजानां समाकुलम् ॥ ॥ ५८ ॥ मेघानां च पृथग्भूतं जलं प्रायादगादगम् ॥ परावहो यः श्वसनस्त्वानयत्यंबिकागुरुम् ॥ ५९ ॥ मेनापतिमतिक्रम्य वृष्टिशेषं द्विजाः परम् ॥ अभ्येति भारते वर्षे त्वपरांतविवृद्धये ॥ ६० ॥ वृष्टयः कथिता ह्यद्य द्विधा वस्तुविवृद्धये ॥ सस्यद्वयस्य संक्षेपात्प्रब्रवीमि यथा मति ॥ ६१ ॥ स्रष्टा भानुर्महातेजा वृष्टीनां विश्वदृग्विभुः ॥ सोपि साक्षाद्द्विजश्रेष्ठाश्चेशानः परमः शिवः ॥ ६२ ॥

"आदित्यो वै तेज ओजो बलम्" इति याजुषनारायणीयश्रुतेरनुवादरूपमादित्यस्वरूपं वर्णयति । स एवेत्यादिना ॥ ६३ ॥ ६४ ॥ साक्षात्प्रत्यक्षः । त्रिनेत्रः शिव इत्यर्थः । तथा च श्रुतिः "असौ योऽवसर्पति नीलग्रीवो विलोहितः' इति । अस्यार्थः अहोवलोक्तः असावादित्यबिंबस्थो महारुद्रोऽवसर्पति । अवसर्पति लोकानां पालनाय प्रवर्तते इति ॥ ६५ ॥ ६६ ॥ ६७ ॥ सूर्याद्ग्रहाद्वृष्टिरित्यनुषंगः निःसृत्य कृत्स्ने नक्षत्रमंडले चंद्रमंडल इत्यर्थः । अभ्येत्य निःस्रवतीति शेषः । चारस्यांते वृष्टिप्रचारसमाप्तौ ध्रुवेण समधिष्ठिता आक्षिप्ता अर्के विशतीत्यन्वयः ॥ ६८ ॥ "दुर्भिक्षदुःखशमनाय रविं त्रिनेत्रं वृष्टिप्रमोचनविनिग्रहहेतुमीड्यम् ॥ कांतार्धरूपवपुषं द्विजमात्रसेव्यं साक्षाच्छिवं तमहमष्टभुजं नमामि ॥ १॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥

स एव तेजस्त्वोजस्तु बलं विप्रा यशः स्वयम् ॥ चक्षुः श्रोत्रं मनो मृत्युरात्मा मन्युर्विदिग्दिशः ॥ ६३ ॥ सत्यं ऋतं तथा वायुरंबरं खचरश्च सः ॥ लोकपालो हरिर्ब्रह्मा रुद्रः साक्षान्महेश्वरः ॥ ६४ ॥ सहस्रकिरणः श्रीमानष्टहस्तः सुमंगलः ॥ अर्धनारीवपुः साक्षात्त्रिनेत्रस्त्रिदशाधिपः ॥ ६५ ॥ अस्यैवेह प्रसादात्तु वृष्टिर्नानाभवद्द्विजाः ॥ सहस्रगुणमुत्स्रष्टुमादत्ते किरणैर्जलम् ॥ ६६ ॥ जलस्य नाशो वृद्धिर्वा नास्त्येवास्य विचारतः ॥ ध्रुवेणाधिष्ठितो वायुर्वृष्टिं संहरते पुनः ॥ ६७ ॥ ग्रहान्निःसृत्य सूर्यात्तु कृत्स्ने नक्षत्रमंडले ॥ चारस्यांते विशत्यर्कं ध्रुवेण समधिष्ठिता ॥ ६८ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे ज्योतिश्चक्रे सूर्यगत्यादिकथनं नाम चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ सूत उवाच ॥ सौरं संक्षेपतो वक्ष्ये रथं शशिन एव च ॥ ग्रहाणामितरेषां च यथा गच्छति चांबुपः ॥ १ ॥ सौरस्तु ब्रह्मणा सृष्टो रथस्त्वर्थवशेन सः ॥ संवत्सरस्यावयवैः कल्पितश्च द्विजर्षभाः ॥ २ ॥ त्रिणाभिना तु चक्रेण पंचारेण समन्वितः ॥ सौवर्णः सर्वदेवानामावासो भास्करस्य तु ॥ ३ ॥ नवयोजनसाहस्रो विस्तारायामतः स्मृतः ॥ द्विगुणोपि रथोपस्थादीषादंडः प्रमाणतः ॥ ४ ॥ असंगैस्तु हयैर्युक्तो यतश्चक्रं ततः स्थितैः ॥ वाजिनस्तस्य वै सप्त छंदोभिर्निर्मितास्तु ते ॥ ५ ॥ चक्रपक्षे निबद्धास्तु ध्रुवे चाक्षः समर्पितः ॥ सहाश्वचक्रो भ्रमते सहाक्षो भ्रमते ध्रुवः ॥ ६ ॥ अक्षः सहैकचक्रेण भ्रमतेऽसौ ध्रुवेरितः ॥ प्रेरको ज्योतिषां धीमान् ध्रुवो वै वातरश्मिभिः ॥ ७ ॥ युगाक्षकोटिसंबद्धौ द्वौ रश्मी स्यंदनस्य तु ॥ ध्रुवेण भ्रमते रश्मिनिबद्धः स युगाक्षयोः ॥ ८ ॥ भ्रमतो मंडलानि स्युः खेचरस्य रथस्य तु ॥ युगाक्षकोटी ते तस्य दक्षिणे स्यंदनस्य हि ॥ ९ ॥

"पंचपंचाशकेऽध्याये सूर्यस्य भवरूपिणः ॥ मघ्वादिमासक्रमतो निरूप्यंते पृथग्गणाः ॥ १ ॥" सूतः सौरादिरथान् वक्तुं प्रतिजानीते सौरमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ असंगैरंतरिक्षगैरित्यर्थः । छंदोभिर्वेदैः वाजिनोऽश्वाः अश्वनामान्युक्तानि विष्णुपुराणे "गायत्री सबृहत्युष्णिग्जगती त्रिष्टुबेव च॥अनुष्टुप्पंक्तिरित्युक्ताश्छंदांसि हरयो रवेः" इति ॥५॥सहाश्वचक्रः अश्वचक्रयुतो रथ ॥६॥७॥ युगं रथधूः अक्षकोटिरक्षाग्रं तयोः संबद्धौ निबद्धावित्यर्थः । युगाक्षयोः रश्मिनिबद्धः स सौररथः ध्रुवेण भ्रमत इत्यन्वयः॥ ८॥ते रश्मिनिबद्धे युगाक्षकोटी तस्य सौरस्य स्यंदनस्य हि दक्षिणे दक्षिणभागे ध्रुवेण प्रगृहीते चक्रं च अश्वाश्चानयोः समाहारश्चक्राश्वं विः अरुणःविश्च चक्राश्वं च विचक्राश्वे रज्जुभिः सह तावुभौ रश्मी च भ्रमंतं ध्रुवमनुगच्छंतीत्यग्रिमेणान्वयः ॥९॥१०॥ वातोर्मिर्वायुलहरिरूपा स्यंदनस्य युगाक्षकोटिः कीले सक्ता यथा रज्जुस्तत्सदृशी सर्वतोदिशं भ्रमत इत्यन्वयः ॥ ११ ॥ उत्तरायणदक्षिणायनगतिर्विवर्णयति । भ्राम्यत इत्यादिना ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ग्रथितैरनेकविश्वपद्यादिरचनाविशिष्टैरित्यर्थः ॥ १९ ॥ २० ॥ वालखिल्यास्तत्संज्ञकऋषयः उदयादुदयकालमारभ्य रविं परिवार्य अस्तमस्ताचलं नयंति प्रापयंतीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ शैशिरो ऋतव इत्यन्वयः ॥ २४ ॥ २५ ॥ द्वादशादित्यानुक्त्वा ऋषीन् कथयति । पुलस्त्य इत्यादिना ॥ २६ ॥ सर्पान् कथयति वासुकिरित्यादिना ॥ २७ ॥ नागस्तत्संज्ञक इत्यर्थः ॥ २८ ॥

ध्रुवेण प्रगृहीते वै विचक्राश्वे च रज्जुभिः ॥ भ्रमंतमनुगच्छंति ध्रुवं रश्मी च तावुभौ ॥ १० ॥ युगाक्षकोटिस्त्वेतस्य वातोर्मिस्यंदनस्य तु ॥ कीले सक्ता यथा रज्जुर्भ्रमते सर्वतोदिशम् ॥ ११ ॥ भ्राम्यतस्तस्य रश्मी तु मंडलेषूत्तरायणे ॥ वर्धेते दक्षिणे चैव भ्रमता मंडलानि तु ॥ १२ ॥ आकृष्येते यदा ते वै ध्रुवेणाधिष्ठिते तदा ॥ आभ्यंतरस्थः सूर्योथ भ्रमते मंडलानि तु ॥ १३ ॥ अशीतिमंडलशतं काष्ठयोरंतरं द्वयोः ॥ ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ॥१४॥ तथैव बाह्यतः सूर्यो भ्रमते मंडलानि तु ॥ उद्वेष्टयन् स वेगेन मंडलानि तु गच्छति ॥ १५ ॥ देवाश्चैव तथा नित्यं मुनयश्च दिवानिशम् ॥ यजंति सततं देवं भास्करं भवमीश्वरम् ॥ १६ ॥ स रथोधिष्ठितो देवैरादित्यैर्मुनिभिस्तथा ॥ गंधर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ १७ ॥ एते वसंति वै सूर्ये द्वौद्वौ मासौ क्रमेण तु ॥ आप्याययंति चादित्यं तेजोभिर्भास्करं शिवम् ॥ १८ ॥ ग्रथितैः स्वैर्वचोभिस्तु स्तुवंति मुनयो रविम् ॥ गंधर्वाप्सरसश्चैव नृत्यगेयैरुपासते ॥ १९ ॥ ग्रामणीयक्षभूतानि कुर्वतेऽभीषुसंग्रहम् ॥ सर्पा वहंति वै सूर्यं यातुधानानुयांति च ॥ २० वालखिल्या नयंत्यस्तं परिवार्योदयाद्रविम् ॥ इत्येते वै वसंतीह द्वौद्वौ मासौ दिवाकरे ॥ २१ ॥ मधुश्च माधवश्चैव शुक्रश्च शुचिरेव च ॥ नभोनभस्यौ विप्रेंद्रा इषश्चोर्जस्तथैव च ॥ २२ ॥ सहःसहस्यौ च तथा तपस्यश्च तपः पुनः ॥ एते द्वादश मासास्तु वर्षं वै मानुषं द्विजाः ॥ २३ ॥ वासंतिकस्तथा ग्रैष्मः शुभो वै वार्षिकस्तथा ॥ शारदश्च हिमश्चैव शैशिरो ऋतवः स्मृताः ॥ २४ ॥ धाताऽर्यमाऽथ मित्रश्च वरुणश्चेंद्र एव च ॥ विवस्वांश्चैव पूषा च पर्जन्योंऽशुर्भगस्तथा ॥ २५ ॥ त्वष्टा विष्णुः पुलस्त्यश्च पुलहश्चात्रिरेव च ॥ वसिष्ठश्चांगिराश्चैव भृगुर्बुद्धिमतां वरः ॥ २६ ॥ भारद्वाजो गौतमश्च कश्यपश्च क्रतुस्तथा ॥ जमदग्निः कौशिकश्च वासुकिः कंकणीकरः ॥ २७ ॥ तक्षकश्च तथा नाग एलापत्रस्तथा द्विजाः ॥ शंखपालस्तथा चान्यस्त्वैरावत इति स्मृतः ॥ २८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ रक्षांसि वर्णयति हेतिरित्यादिना ॥ ३६ ॥ ३७ ॥ ३८ ॥ आप्याययंति वर्धयन्तीत्यनेन तेषां प्रधानता ज्ञेया ॥ ३९ ॥ ४० ॥

धनंजयो महापद्मस्तथा कर्कोटकः स्मृतः ॥ कंबलोऽश्वतरश्चैव तुंबरुर्नारदस्तथा ॥ २९ ॥ हाहा हूहूर्मुनिश्रेष्ठा विश्वावसुरनुत्तमः ॥ उग्रसेनोऽथ सुरुचिरन्यश्चैव परावसुः ॥ ३० ॥ चित्रसेनो महातेजाश्चोर्णायुश्चैव सुव्रताः ॥ धृतराष्ट्रः सूर्यवर्चा देवी साक्षात्कृतस्थला ॥ ३१ ॥ शुभानना शुभश्रोणिर्दिव्या वै पुंजिकस्थला ॥ मेनका सहजन्या च प्रम्लोचाऽथ शुचिस्मिता ॥ ३२ ॥ अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा ॥ पूर्वचित्तिरिति ख्याता देवी साक्षात्तिलोत्तमा ॥ ३३ ॥ रंभा चांभोजवदना रथकृद्ग्रामणीः शुभः ॥ रथौजा रथचित्रश्च सुबाहुर्वै रथस्वनः ॥ ३४ ॥ वरुणश्च तथैवान्यः सुषेणः सेनजिच्छुभः ॥ तार्क्ष्यश्चारिष्टनेमिश्च क्षतजित्सत्यजित्तथा ॥ ३५ ॥ रक्षो हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा ॥ सर्पो व्याघ्रः पुनश्चापो वातो विद्युद्दिवाकरः ॥३६॥ ब्रह्मोपेतश्च रक्षेंद्रो यज्ञोपेतस्तथैव च ॥ एते देवादयः सर्वे वसंत्यर्के क्रमेण तु ॥३७॥ स्थाना भिमानिनो ह्येते गणा द्वादश सप्तकाः ॥ धात्रादिविष्णुपर्यंता देवा द्वादश कीर्तिताः ॥ ३८ ॥ आदित्यं परमं भानुं भाभिराप्याययंति ते ॥ पुलस्त्याद्याः कौशिकांता मुनयो मुनिसत्तमाः ॥ ३९ ॥ द्वादशैव स्तवैर्भानुं स्तुवंति च यथाक्रमम् ॥ नागाश्चाश्वतरांतास्तु वासुकिप्रमुखाः शुभाः ॥ ४० ॥ द्वादशैव महादेवं वहंत्यर्कं यथाक्रमम् ॥ क्रमेण सूर्यवर्चांतास्तुंबरुप्रमुखांवुपम् ॥ ४१ ॥ गीतैरेनमुपासंते गंधर्वा द्वादशोत्तमाः ॥ कृतस्थलाद्या रंभांता दिव्याश्चाप्सरसो रविम् ॥ ४२ ॥ तांडवैः सरसैः सर्वाश्चोपासंते यथाक्रमम् ॥ दिव्याः सत्यजिदं ताश्च ग्रामण्यो रथकृन्मुखाः ॥ ४३ ॥ द्वादशास्य क्रमेणैव कुर्वंतेभीषुसंग्रहम् ॥ प्रयांति यज्ञोपेतांता रक्षोहेतिमुखाः सह ॥ ४४ ॥ सायुधा द्वादशैवेते राक्षसाश्च यथाक्रमम् ॥ धातार्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः ॥ ४५ ॥ उरगो वासुकिश्चैव कंकणीकश्च तावुभौ ॥ तुंबरुर्नारदश्चैव गंधर्वौ गायतां वरौ ॥४६॥ कृतस्थलाऽप्सराश्चैव तथा वै पुंजिकस्थला ॥ ग्रामणी रथकृच्चैव रथौजाश्चैव तावुभौ ॥४७॥ रक्षो हेतिः प्रहेतिश्च यातुधानावुदाहृतौ ॥ मधुमाधवयोरेष गणो वसति भास्करे ॥ ४८ ॥ वसंति ग्रैष्मिकौ मासौ मित्रश्च वरुणश्च ह ॥ ऋषिरत्रिर्वसिष्ठश्च तक्षको नाग एव च ॥ ४९ ॥ मेनका सहजन्या च गंधर्वौ च हहाहुहूः ॥ सुबाहुनामा ग्रामण्यौ रथचित्रश्च तावुभौ ॥ ५० ॥

प्रमुखांवुपमित्यत्र संधिश्छांदसो ज्ञेयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ अस्य सूर्यस्याभीषुसंग्रहं रथरश्मिसंग्रह-मित्यर्थः ॥ ४४ ॥ वसंतादिषड्ऋतुक्रमेण प्रत्येकगणांतर्गतौ द्वौद्वावधिकारिणौ कथयति । धातेत्यादिना ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

पौरुषेयो वधश्चैव यातुधानावुदाहृतौ ॥ एते वसंति वै सूर्ये मासयोः शुचिशुक्रयोः ॥ ५१ ॥ ततः सूर्ये पुनश्चान्या निवसंतीह देवताः ॥ इंद्रश्चैव विवस्वांश्च अंगिरा भृगुरेव च ॥ ५२ ॥ एलापत्रस्तथा सर्पः शंखपालश्च तावुभौ ॥ विश्वावसूग्रसेनौ च वरुणश्च रथस्वनः ॥ ५३ ॥ प्रम्लोचा चैव विख्याता अनुम्लोचा च ते उभे ॥ यातुधानास्तथा सर्पो व्याघ्रश्चैव तु तावुभौ ॥५४॥ नभोनभस्ययोरेष गणो वसति भास्करे ॥ पर्जन्यश्चैव पूषा च भरद्वाजोऽथ गौतमः ॥ ५५ ॥ धनंजय इरावांश्च सुरुचिः सपरावसुः ॥ घृताची चाप्सरःश्रेष्ठा विश्वाची चातिशोभना ॥ ५६ ॥ सेनजिच्च सुषेणश्च सेनानीर्ग्रामणीश्च तौ ॥ आपो वातश्च तावेतौ यातुधानावुभौ स्मृतौ ॥ ५७ ॥ वसंत्येते तु वै सूर्ये मास ऊर्जे इषे च ह ॥ हैमंतिकौ तु द्वौ मासौ वसंति च दिवाकरे ॥ ५८ ॥ अंशुर्भगश्च द्वावेतौ कश्यपश्च क्रतुः सह ॥ भुजंगश्च महापद्मः सर्पः कर्कोटकस्तथा ॥ ५९ ॥ चित्रसेनश्च गंधर्व ऊर्णायुश्चैव तावुभौ ॥ उर्वशी पूर्वचित्तिश्च तथैवाप्सरसावुभे ॥ ६० ॥ तार्क्ष्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ॥ विद्युद्दिवाकरश्चोभौ यातुधानावुदाहृतौ ॥ ६१ ॥ सहे चैव सहस्ये च वसंत्येते दिवाकरे ॥ ततः शैशिरयोश्चापि मासयोर्निवसंति वै ॥ ६२ ॥ त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥ काद्रवेयौ तथा नागौ कंबलाश्वतरावुभौ ॥ ६३ ॥ धृतराष्ट्रः सगंधर्वः सूर्यवर्चास्तथैव च ॥ तिलोत्तमाप्सराश्चैव देवी रंभा मनोहरा ॥ ६४ ॥ रथजित्सत्यजिच्चैव ग्रामण्यौ लोकविश्रुतौ ॥ ब्रह्मोपेतस्तथा रक्षो यज्ञोपेतश्च यः स्मृतः ॥ ६५ ॥ एते देवा वसंत्यर्के द्वौ द्वौ मासौ क्रमेण तु ॥ स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः ॥ ६६ ॥ सूर्यमाप्याययंत्येते तेजसा तेज उत्तमम् ॥ ग्रथितैः स्वैर्वचोभिस्तु स्तुवंति मुनयो रविम् ॥ ६७ ॥ गंधर्वाप्सरसश्चैव नृत्यगेयैरुपासते ॥ ग्रामणीयक्षभूतानि कुर्वतेभीषुसंग्रहम् ॥ ६८ ॥ सर्पा वहंति वै सूर्ये यातुधानानुयांति वै ॥ वालखिल्या नयंत्यस्तं परिवार्योदयाद्रविम् ॥ ६९ ॥ एतेषामेव देवानां यथा तेजो यथा तपः ॥ यथायोगं यथामंत्रं यथाधर्मं यथाबलम् ॥ ७० ॥ तथा तपत्यसौ सूर्यस्तेषामिद्धस्तु तेजसा ॥ इत्येते वै वसंतीह द्वौद्वौ मासौ दिवाकरे ॥ ७१ ॥ ऋषयो देवगंधर्वपन्नगाप्सरसां गणाः ॥ ग्रामण्यश्च तथा यक्षा यातुधानाश्च मुख्यतः ॥७२॥ एते तपंति वर्षंति भांति वांति सृजंति च ॥ भूतानामशुभं कर्म व्यपोहंतीह कीर्तिताः ॥ ७३ ॥ मानवानां शुभं ह्येते हरंति च दुरात्मनाम् ॥ दुरितं सुप्रचाराणां व्यपोहंति क्वचित्क्वचित् ॥ ७४ ॥

॥ ७१ ॥ ७२ ॥ ७३ ॥ सुप्रचाराणां क्वचित्क्वचिद्दुरितं चेदिति शेषः । व्यपोहंति नाशयंतीत्यर्थः ॥ ७४ ॥
॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ असौ सूर्यः एकचक्रेण रथेन सप्तभिः सप्तसंख्याकैरश्वैः दिवि भ्रमन् सप्त द्वीपानि समुद्राश्च यस्यां सा सप्तद्वीपसमुद्रा तां गां पृथिवीं सर्पते अतिक्रमत इत्यर्थः ॥८२॥ "आदित्यैर्ऋषिभिःसर्पैर्गंधर्वैरप्सरोगणैः॥ ग्रामणीराक्षसैर्भानुरन्वितः पातु नः शिवः ॥ १॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां पचपंचाशत्तमोऽध्यायः ॥५५॥ "षट्पंचाशत्तमेऽध्याये सोमस्य रथ उत्तमः ॥ ह्रासोऽमृतकलापानात्पोषः सूर्याच्च वर्ण्यते ॥ १ ॥" सूतः सोमं निरूपयति वीथ्येत्यादिना । वीथ्याश्रयाणि स्वमार्गंतानि नक्षत्राण्यश्विन्यादीनि निशाकरश्चंद्रः चरत्यनुक्रमेण गच्छतीत्यर्थः । उभयतः दक्षिणोत्तरभागे अश्वाः यस्य स उभयतोश्वः ॥ १ ॥ २ ॥ ३ ॥ शुक्लपक्षादौ

विमाने च स्थिता दिव्ये कामगे वातरंहसि ॥ एते सहैव सूर्येण भ्रमंति दिवसानुगाः ॥ ७५ ॥ वर्षंतश्च तपंतश्च ह्लादयंतश्च वै द्विजाः गोपायंतीह भूतानि सर्वाणि ह्यामनुक्षयात् ॥ ७६ ॥ स्थानाभिमानिनामेतत्स्थानं मन्वंतरेषु वै ॥ अतीतानागतानां वै वर्तते सांप्रतं च ये ॥ ७७ ॥ एते वसंति वै सूर्ये सप्तकास्ते चतुर्दश ॥ चतुर्दशसु सर्वेषु गणा मन्वंतरेष्विह ॥ ७८ ॥ संक्षेपाद्विस्तराच्चैव यथावृत्तं यथा श्रुतम् ॥ कथितं मुनिशार्दूला देवदेवस्य धीमतः ॥ ७९ ॥ एते देवा वसंत्यर्के द्वौद्वौ मासौ क्रमेण तु ॥ स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः ॥ ८० ॥ इत्येष एकचक्रेण सूर्यस्तूर्णं रथेन तु ॥ हरितैरक्षरैरश्वैः सर्पतेऽसौ दिवाकरः ॥ ८१ ॥ अहोरात्रं रथेनासावेकचक्रेण तु भ्रमन् ॥ सप्तद्वीपसमुद्रां गां सप्तभिः सर्पते दिवि ॥ ८२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सूर्यरथनिर्णयो नाम पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥

सूत उवाच ॥ वीथ्याश्रयाणि चरति नक्षत्राणि निशाकरः ॥ त्रिचक्रोभयतोश्वश्च विज्ञेयस्तस्य वै रथः ॥ १ ॥ शतारैश्च त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः ॥ दशभिस्त्वकृशैर्दिव्यैरसंगैस्तैर्मनोजवैः ॥ २ ॥ रथेनानेन देवैश्च पितृभिश्चैव गच्छति ॥ सोमो ह्यम्बुमयैर्गोभिः शुक्लैः शुक्लगभस्तिमान् ॥ ३ ॥ क्रमते शुक्लपक्षादौ भास्करात्परमास्थितः ॥ आपूर्यते परस्यांतः सततं दिवसक्रमात् ॥ ४ ॥ देवैः पीतं क्षये सोममाप्याययति नित्यशः ॥ पीतं पंचदशाहं तु रश्मिनैकेन भास्करः ॥ ५ ॥ आपूरयन्सुषुम्नेन भागं भागमनुक्रमात् ॥ इत्येषा सूर्यवीर्येण चंद्रस्याप्यायिता तनुः ॥ ६ ॥ स पौर्णमास्यां दृश्येत शुक्लः संपूर्णमंडलः ॥ एवमाप्यायितं सोमं शुक्लपक्षे दिनक्रमात् ॥ ७ ॥

प्रतिपदि भास्करात्परमप्रमार्गमास्थितः [illegible] आस इति शेषः । दिवसक्रमात्सततं परस्य शुक्लपक्षस्यांतः समाप्तौ आपूर्यते पूर्णो भवतीत्यर्थः ॥ ४ ॥ देवैः पञ्चदशाहं क्षये अमापर्यंतं नित्यशः पीतंपीतं सोमं सुषुम्नेन तत्संज्ञकेन एकेन रश्मिना भागं भागमनुक्रमादापूरयन्भास्करः आप्याययतीत्यन्वयः [illegible] द्विरुक्तिः । अत एव याजुषश्रुतावपि "सुषुम्नः सूर्यरश्मिश्चंद्रमा गंधर्वः" इत्युक्तम् ॥ ५ ॥ ६ ॥ ७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ततः कृष्णपक्षे द्वितीया प्रभृतिः आदिर्यस्मिन्कर्मणि यथा भवति तथा द्वितीयाप्रभृति प्रतिपदमारभ्येत्यर्थः। बहुलस्य कृष्णपक्षस्य चतुर्दशीं तत्पर्यंतं सौम्यं सोमसंबंधि मधु मधुरं सुधामृतमतिस्वच्छामृतमित्यर्थः। देवा इंद्रादयः पिबंतीत्यन्वयः ॥ ८ ॥ अमृतममृतरूपं सोमं पौर्णमास्यामेकरात्रिम् एकरात्र्यामेव सर्वे सुराः इंद्रादयः पितृभिः ऋषिभिः सह पानार्थमुपासते सेवंते इत्यग्रिमस्यैरन्वयः ॥ ९ ॥ १० ॥ त्रयस्त्रिंशद्वसुद्वादित्यवसुदस्त्ररूपाः। तथा त्रयस्त्रिंशच्छताः त्रयस्त्रिंशत्सहस्राणि च तत्पुत्रपौत्ररूपाः देवाः सोमं पिबंतीत्यग्रिमेणान्वयः ॥ ११ ॥ १२ ॥ सुरोत्तमाः अर्धमासं पीत्वा अमावास्याममावास्यायामित्यर्थः। गच्छंति पितरश्च अमावास्यां तस्यां निशाकरमुपतिष्ठंतीत्यन्वयः ॥ १३ ॥ द्विकलं

ततो द्वितीयाप्रभृति बहुलस्य चतुर्दशीम् ॥ पिबंत्यंबुमयं देवा मधु सौम्यं सुधामृतम् ॥८॥ संभृतं त्वर्धमासेन ह्यमृतं सूर्यतेजसा ॥ पानार्थममृतं सोमं पौर्णमास्यामुपासते ॥ ९ ॥ एकरात्रिं सुराः सर्वे पितृभिस्त्वृषिभिः सह ॥ सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य च ॥ १० ॥ प्रक्षीयंते परस्यांतः पीयमानाः कलाः क्रमात् ॥ त्रयस्त्रिंशच्छताश्चैव त्रयस्त्रिंशत्तथैव च ॥ ११ ॥ त्रयस्त्रिंशत्सहस्राणि देवाः सोमं पिबंति वै ॥ एवं दिनक्रमात्पीते विबुधैस्तु निशाकरे ॥ १२ ॥ पीत्वार्धमासं गच्छंति अमावास्यां सुरोत्तमाः ॥ पितरश्चोपतिष्ठंति अमावास्यां निशाकरम् ॥ १३ ॥ ततः पंचदशे भागे किंचिच्छिष्टे कलात्मके॥ अपराह्णे पितृगणा जघन्यं पर्युपासते॥१४॥पिबंति द्विकलं कालं शिष्टा तस्य कला तु या॥निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् ॥ १५ ॥ मासतृप्तिमवाप्याग्र्यां पीत्वा गच्छंति तेऽमृतम् ॥ पितृभिः पीयमानस्य पंचदश्यां कला तु या ॥ ॥ १६ ॥ यावत्तु क्षीयते तस्य भागः पंचदशस्तु सः ॥ अमावास्यां ततस्तस्या अंतरा पूर्यते पुनः ॥ १७ ॥ वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ ॥ एवं सूर्यनिमित्तैषा पक्षवृद्धिर्निशाकरे ॥ १८ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सोमवर्णनं नाम षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ सूत उवाच ॥ अष्टभिश्च हयैर्युक्तः सोमपुत्रस्य वै रथः॥वारितेजोमयश्चाथ पिशंगैश्चैव शोभनैः ॥१॥ दशभिश्चाकृशैरश्वैर्नानावर्णै रथः स्मृतः ॥ शुक्रस्य क्ष्मामयैर्युक्तो दैत्याचार्यस्य धीमतः ॥ २ ॥ अष्टाश्वश्चाथ भौमस्य रथो हैमः सुशोभनः ॥ जीवस्य हैमश्चाष्टाश्वो मंदस्यायसनिर्मितः ॥ ३ ॥ रथ आपोमयैरश्वैर्दशभिस्तु सितेतरैः ॥ स्वर्भानोर्भास्करारेश्च तथा चाष्टहयः स्मृतः ॥ ४ ॥

द्विघटिकात्मककालम् ॥ १४ ॥ १५ ॥ १६ ॥ तस्याः अमावस्यायाः अंतर्मध्ये पौर्णमास्यामित्यर्थः । आपूर्यते पूर्णो भवतीत्यर्थः ॥ १७ ॥ षोडश्यां प्रतिपदायाम् ॥ १८ ॥ "श्री सूर्यरूपेण भवेन शश्वदाप्यायमानो जगतां हिताय ॥ समो रयस्यः पितृभिश्च देवैर्निपीयमानोऽस्तु सदानुकूलः ॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ "सप्तपंचाशकेऽध्याये बुधादीनां रथाः पृथक्। ग्रहमंडलमानानि गतयश्चैव कीर्तिताः ॥१॥"सूतः बुधादिरथान् वर्णयति अष्टभिरित्यादिना ॥१॥२॥मंदस्य शनेरायसनिर्मितः आपोमयैः सितेतरैः कृष्णैर्दशभिरश्वैः युक्त इत्यनुषंगः रथ इत्यग्रिमस्यैरन्वयः ॥ ३ ॥ भास्करारेः स्वर्भानोः तथा शनिसदृशः अष्टहयः अष्टाश्वयुक्तो रथः स्मृत इत्यन्वयः ॥ ४ ॥ वातरूपैः रश्मिभिः वातरश्मिभिः ॥ ५ ॥ तावंतः तत्परिमाणाः रश्मयः सूर्यकिरणा इत्यर्थः ॥६ ॥ ७॥ उन्मुखाः ऊर्ध्वमुखाः अभिमुखाः प्राङ्मुखाः सर्वे चक्रभूताः चक्रावयवभूता इत्यर्थः॥ ८॥ ९ ॥ सवितुर्विष्कंभो मध्यभागः तस्य सवितुर्मंडलप्रमाणतो विस्तारः वर्तुलमानमित्यर्थः ॥१० ॥११॥१२॥१३॥ वक्रो भौमः सौरिः शनिः तौ बृहस्पतिर्यथा भार्गवात्पादहीनस्तथा बृहस्पतेरायामप्रमाणतः पादहीनावित्यन्वयः ॥ १४ ॥ इह वपुष्मंति यानि तारानक्षत्ररूपाणि चन्द्रयोगीनि अश्विन्यादीनि प्रायशः ऋक्षा

सर्वे ध्रुवनिबद्धा वै ग्रहास्ते वातरश्मिभिः ॥ एतेन भ्राम्यमाणाश्च यथायोगं व्रजंति वै ॥५॥ यावंत्यश्चैव ताराश्च तावंतश्चैव रश्मयः ॥ सर्वे ध्रुवनिबद्धाश्च भ्रमंतो भ्रामयंति तम् ॥ ६ ॥ अलातचक्रवद्यांति वातचक्रेरितानि तु ॥ यस्माद्वहति ज्योतींषि प्रवहस्तेन स स्मृतः ॥ ७ ॥ नक्षत्रसूर्याश्च तथा ग्रहतारागणैः सह ॥ उन्मुखाभिमुखाः सर्वे चक्रभूताः श्रिता दिवि ॥ ८ ॥ ध्रुवेणाधिष्ठिताश्चैव ध्रुवमेव प्रदक्षिणम् ॥ प्रयांति चेश्वरं द्रष्टुं मेढीभूतं ध्रुवं दिवि ॥ ९ ॥ नवयोजनसाहस्रो विष्कंभः सवितुः स्मृतः ॥ त्रिगुणस्तस्य विस्तारो मंडलस्य प्रमाणतः ॥१०॥ द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः ॥ तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात्प्रसर्पति ॥ ११ ॥ उद्धृत्य पृथिवीछायां निर्मितां मंडलाकृतिम् ॥ स्वर्भानोस्तु बृहत्स्थानं तृतीयं यत्तमोमयम् ॥१२॥ चंद्रस्य षोडशो भागो भार्गवस्य विधीयते ॥ विष्कंभान्मंडलाच्चैव योजनाच्च प्रमाणतः ॥१३॥ भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः ॥ पादहीनौ वक्रसौरी तथाऽयामप्रमाणतः ॥ १४ ॥ विस्तारान्मंडलाच्चैव पादहीनस्तयोर्बुधः ॥ तारानक्षत्ररूपाणि वपुष्मंतीह यानि वै ॥ १५ ॥ बुधेन तानि तुल्यानि विस्तारान्मंडलादपि ॥ प्रायशश्चंद्रयोगीनि विद्यादृक्षाणि तत्त्ववित् ॥ १६ ॥ तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ शतानि पंच चत्वारि त्रीणि द्वे चैव योजने ॥ १७ ॥ सर्वोपरि निकृष्टानि तारकामंडलानि तु ॥ योजनद्वयमात्राणि तेभ्योह्रस्वं न विद्यते ॥ १८ ॥ उपरिष्टात्त्रयस्तेषां ग्रहा ये दूरसर्पिणः ॥ सौरोंगिराश्च वक्रश्च ज्ञेया मंदविचारिणः ॥ १९ ॥ तेभ्योधस्तात्तु चत्वारः पुनरन्ये महाग्रहाः ॥ सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥ २० ॥ तावंत्यस्तारकाः कोट्यो यावंत्यृक्षाणि सर्वशः ॥ ध्रुवात्तु नियमाच्चैषामृक्षमार्गे व्यवस्थितिः ॥ २१ ॥ सप्ताश्वस्यैव सूर्यस्य नीचोच्चत्वमनुक्रमात् ॥ उत्तरायणमार्गस्थो यदा पर्वसु चंद्रमाः ॥ २२ ॥

णि च तानि बुधेन विस्तारान्मंडलादपि तुल्यानि तत्त्वविद्विद्यादित्यग्रिमेणान्वयः ॥ १५ ॥ १६ ॥ परस्परं परस्परतः हीनानि शतान्यसंख्यातानि तारानक्षत्ररूपणाणि पंच चत्वारि त्रीणि द्वे च योजने विद्यादित्यनुषंगः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ यावंति कोटयो ऋक्षाणि तावंत्यस्तारकाः सूक्ष्मतारा इत्यर्थः । एषां नक्षत्राणामृक्षमार्गे नियमाद्व्यवस्थितिः ध्रुवा निश्चलेत्यर्थः ॥ २१ ॥ सप्ताश्वस्य सूर्यस्यैव अनुक्रमाद्वक्ष्यमाणक्रमेण नीचोच्चमार्गवर्तित्वं ज्ञेयमिति शेषः । उत्तरायणमार्गस्थः यदा चन्द्रमाः तदा पर्वसु पौर्णमासीषु उच्चत्वाच्छीघ्रं दृश्यते इत्यग्रिमेणान्वयः ॥ २२ ॥ तदा दक्षिणायने दक्षिणमार्गस्थः नीचो वीथिषु पाश्रितः सूर्यः पौर्णमावास्ययोः भूमिरेखावृतः ददृशे शास्त्रादिनाऽवलोकितः शीघ्रमस्तम् उपैति नेत्यग्रिमेणान्वयः ॥ २३ ॥ २४ ॥ अमावास्याममावास्यायां उत्तरमार्गस्थः निशाकरः दृश्यते दक्षिणे मार्गे सूर्यस्य ज्योतिषां गतियोगेन तमसा वृतः नियमान्न दृश्यते चेत्यग्रिमस्यैरन्वयः ॥२५ ॥ समानकालेनास्तमयो येषां तौ समोदयौ सूर्यचंद्रौ विषुवत्सु विषुवसंक्रांत्यहस्सु भवत इति शेषः। तदुक्तं विष्णुपुराणे–"मेषादौ च तुलादौ च मैत्रेयविषुव

उच्चत्वाद्दृश्यते शीघ्रं नातिव्यक्तैर्गभस्तिभिः ॥ तदा दक्षिणमार्गस्थो नीचां वीथीमुपाश्रितः ॥ २३॥ भूमिरेखावृतः सूर्यः पौर्णिमावास्ययोस्तदा ॥ ददृशे च यथाकालं शीघ्रमस्तमुपैति च ॥२४॥ तस्मादुत्तरमार्गस्थो ह्यमावास्यां निशाकरः॥ददृशे दक्षिणे मार्गे नियमाद् दृश्यते न च ॥ २५ ॥ ज्योतिषां गतियोगेन सूर्यस्य तमसा वृतः ॥ समानकालास्तमयौ विषुवत्सु समोदयौ ॥ २६ ॥ उत्तरासु च वीथीषु व्यंतरास्तमनोदयौ ॥ पौर्णिमावास्ययोर्ज्ञेयौ ज्योतिश्चक्रानुवर्तिनौ ॥२७॥ दक्षिणायनमार्गस्थौ यदा चरति रश्मिवान् ॥ ग्रहाणां चैव सर्वेषां सूर्योधस्तात्प्रसर्पति ॥२८॥ विस्तीर्णं मंडलं कृत्वा तस्योर्ध्वं चरते शशी ॥ नक्षत्रमंडलं कृत्स्नं सोमादूर्ध्वं प्रसर्पति ॥ २९ ॥ नक्षत्रेभ्यो बुधश्चोर्ध्वं बुधादूर्ध्वं तु भार्गवः ॥ वक्रस्तु भार्गवादूर्ध्वं वक्रादूर्ध्वं बृहस्पतिः ॥ ३० ॥ तस्माच्छनैश्चरश्चोर्ध्वं तस्मात्सप्तर्षिमंडलम् ॥ ऋषीणां चैव सप्तानां ध्रुवस्योर्ध्वं व्यवस्थितिः ॥ ३१ ॥ तं विष्णुलोकं परमं ज्ञात्वा मुच्येत किल्बिषात् ॥ द्विगुणेषु सहस्रेषु योजनानां शतेषु च ॥ ३२ ॥ ग्रहनक्षत्रतारासु उपरिष्टाद्यथाक्रमम् ॥ ग्रहाश्च चंद्रसूर्यौ च युतौ दिव्येन तेजसा ॥ ३३ ॥ नित्यमृक्षेषु युज्यंते गच्छंतोहर्निशं क्रमात् ॥ ग्रहनक्षत्रसूर्यास्ते नीचोच्चऋजुसंस्थिताः ॥ ३४ ॥ समागमे च भेदे च पश्यंति युगपत्प्रजाः ॥ ऋतवः षट् स्मृताः सर्वे समागच्छंति पंचधा ॥ ३५ ॥ परस्परास्थिता ह्येते युज्यंते च परस्परम् ॥ असंकरेण विज्ञेयस्तेषां योगस्तु वै बुधैः ॥ ३६॥ एवं संक्षिप्य कथितं ग्रहाणां गमनं द्विजाः ॥ भास्करप्रमुखानां च यथादृष्टं यथाश्रुतम् ॥ ३७॥ ग्रहाधिपत्ये भगवान्ब्रह्मणा पद्मयोनिना ॥ अभिषिक्तः सहस्रांशू रुद्रेण तु यथा गुहः ॥ ३८ ॥

स्थितः ॥ तदा तुल्यमहोरात्रं करोति तिमिरापहः" इति ॥ २६ ॥ व्यंतरेण विषमकालेनास्तमनमुदयश्च ययोस्तौ पौर्णिमा च वास्या अमावास्या तयोर्ज्योतिश्चक्रानुवर्तिनौ ज्ञेयावित्यन्वयः । वास्येत्यत्र सत्यभामावत्पूर्वपदलोपो ज्ञेयः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ... सम्वत्सरादिभेदेन समागच्छंति परिवर्तंत इत्यर्थः ॥ ॥ ३५ ॥ एते ग्रहाद्याः ॥ ३६ ॥ ३७ ॥ ३८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यथाविधि चोद्यं विधिचोदनां दृष्टेति शेषः। सद्भिः आदित्यग्रहपीडायामादित्यादिग्रहपीडायां कार्यार्थसिद्धये अग्नौ ग्रहार्चना कार्येत्यन्वयः ॥ ३९ ॥ "श्रीसूर्यरूपेण महेश्वरेण ह्याप्यायिताः सर्वग्रहाः सहर्क्षाः ॥ प्रीत्या नुताः सुखदाः संभवंतु श्रीरौद्रसंस्था इव सर्वकालम् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ "अष्टपंचाशकेऽध्याये पृष्टः सूतो ह्यवर्णयत् ॥ शिवप्रसादाद्विधिना मुख्यत्वेनाभिषेचितान् ॥ १ ॥" ऋषयः शौनकादयः अभिषिक्तानपृच्छन् अभ्यषिंचदिति ॥१॥ सूतः केषामाधिपत्ये कोऽभिषिक्त इति कथयति ग्रहाधिपत्य इत्यादिना ॥ २ ॥ यक्षपुंगवं कुबेरम् ॥ ३ ॥ ४ ॥ गणनायकं शैलादिम् ॥ ५ ॥ ६ ॥ व्योमजं शिवपुत्रम् ॥ ७ ॥

तस्माद्ग्रहार्चना कार्या अग्नौ चोद्यं यथाविधि ॥ आदित्यग्रहपीडायां सद्भिः कार्यार्थसिद्धये ॥ ३९ ॥ इतिश्रीलिंगमहापुराणे पूर्वभागे ज्योतिश्चक्रे ग्रहचारकथनं नाम सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ऋषय ऊचुः ॥ अभ्यषिंचत्कथं ब्रह्मा चाधिपत्ये प्रजापतिः ॥ देवदैत्यमुखान्सर्वान्सर्वात्मा वद सांप्रतम् ॥ १ ॥ सूत उवाच ॥ ग्रहाधिपत्ये भगवानभ्यषिंचद्दिवाकरम् ॥ ऋक्षाणामोषधीनां च सोमं ब्रह्मा प्रजापतिः ॥ २ ॥ अपां च वरुणं देवं धनानां यक्षपुंगवम् ॥ आदित्यानां तथा विष्णुं वसूनां पावकं तथा ॥३॥ प्रजापतीनां दक्षं च मरुतां शक्रमेव च ॥ दैत्यानां दानवानां च प्रह्लादं दैत्यपुंगवम् ॥ ४ ॥ धर्मं पितृणामधिपं निर्ऋतिं पिशिताशिनाम् ॥ रुद्रं पशूनां भूतानां नंदिनं गणनायकम् ॥ ५ ॥ वीराणां वीरभद्रं च पिशाचानां भयंकरम् ॥ मातृणां चैव चामुंडां सर्वदेवनमस्कृताम् ॥६॥ रुद्राणां देवदेवेशं नीललोहितमीश्वरम् ॥ विघ्नानां व्योमजं देवं गजास्यं तु विनायकम् ॥ ७ ॥ स्त्रीणां देवीमुमादेवीं वचसां च सरस्वतीम् ॥ विष्णुं मायाविनां चैव स्वात्मानं जगतां तथा ॥ ८ ॥ हिमवंतं गिरीणां तु नदीनां चैव जाह्नवीम् ॥ समुद्राणां च सर्वेषामधिपं पयसां निधिम् ॥ ९ ॥ वृक्षाणां चैव चाश्वत्थं प्लक्षं च प्रपितामहः ॥ १० ॥ गंधर्वविद्याधरकिन्नराणामीशं पुनश्चित्ररथं चकार ॥ नागाधिपं वासुकिमुग्रवीर्यं सर्पाधिपं तक्षकमुग्रवीर्यम् ॥११॥ दिग्वारणानामधिपं चकार गजेंद्रमैरावतमुग्रवीर्यम् ॥ सुपर्णमीशं पततामथाश्वराजानमुच्चैःश्रवसं चकार ॥ १२॥ सिंहं मृगाणां वृषभं गवां च मृगाधिपानां शरभं चकार ॥ सेनाधिपानां गुहमप्रमेयं श्रुतिस्मृतीनां लकुलीशमीशम् ॥ १३ ॥ अभ्यषिंचत्सुधर्माणं तथा शंखपदं दिशाम् ॥ केतुमंतं क्रमेणैव हेमरोमाणमेव च ॥ १४ ॥

स्वात्मानं ब्रह्माणमित्यर्थः ॥ ८ ॥ ९ ॥ अश्वत्थं पिप्पलं प्लक्षं वटमित्यर्थः। अयं द्विपाठ ॥ १० ॥ ११ ॥ १२ ॥ मृगाधिपानां सिंहानामित्यर्थः। गुहं स्कंदम् ईशं लकुलीशं तत्संज्ञकशिवावतारम् ॥ १३ ॥ दिशां क्रमेण पूर्वादिक्रमेण सुधर्माणं शंखपदं केतुमंतं हेमरोमाणं चाभ्यषिंचदित्यन्वयः। तदुक्तं विष्णुपुराणे–"सुधर्मा शंखपालश्च कर्दमस्यात्मजो द्विज ॥ हिरण्यरोमा चैवान्यश्चतुर्थः केतुमानपि ॥ निर्द्वंद्वा निरभिमाना विस्रस्ता निष्परिग्रहाः ॥ लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम्" इति ॥१४॥ सर्वेषां सर्वपदवाच्ययावद्वस्तूनां महेश्वरं शिवं चतुर्मूर्तिषु विश्वमाजतैजसतुरीयरूपासु शंकरं सुखकारकं सर्वज्ञं सर्वविषयकज्ञानविशिष्टं परमात्मानं वृषभो धर्मः ध्वजो यस्य स वृषभध्वजस्तं परमशिवमित्यर्थः ॥ १५ ॥ १६ ॥ एते विशिष्टाः श्रेष्ठाः विश्वयोनिना ब्रह्मणाऽभिषिक्ता इत्यन्वयः ॥ १७ ॥ "शंभोः प्रसादात्तव पद्मयोनिर्यथाभ्यषिंचत्सकलान्वरिष्ठान् ॥ तथाभिषेकं पदपांसुभिः सदा त्वत्सेवकानामहमर्थयामि ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

पृथिव्यां पृथुमीशानं सर्वेषां तु महेश्वरम् ॥ चतुर्मूर्तिषु सर्वज्ञं शंकरं वृषभध्वजम् ॥१५॥ प्रसादाद्भगवच्छंभोश्चाभ्यषिंचद्यथाक्रमम् ॥ पुराभिषिच्य पुण्यात्मा रराज भुवनेश्वरः ॥ १६ ॥ एतद्वो विस्तरेणैव कथितं मुनिपुंगवाः ॥ अभिषिक्तास्ततस्त्वेते विशिष्टा विश्वयोनिना ॥ १७ ॥ इति श्रीलिंगमहापुराणे सूर्याद्यभिषेककथनं नामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ सूत उवाच ॥ एतच्छ्रुत्वा तु मुनयः पुनस्तं संशयान्विताः ॥ पप्रच्छुरुत्तरं भूयस्तदा ते रोमहर्षणम् ॥ १ ॥ ऋषय ऊचुः ॥ यदेतदुक्तं भवता सूतेह वदतां वर ॥ एतद्विस्तरतो ब्रूहि ज्योतिषां च विनिर्णयम् ॥ २ ॥ श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः ॥ उवाच परमं वाक्यं तेषां संशयनिर्णये ॥ ३ ॥ अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं शांतबुद्धिभिः ॥ एतद्वोऽहं प्रवक्ष्यामि सूर्यचंद्रमसोर्गतिम् ॥४॥ यथा देवगृहाणीह सूर्यचंद्रादयो ग्रहाः ॥ अतः परं तु त्रिविधमग्नेर्वक्ष्ये समुद्भवम् ॥५॥ दिव्यस्य भौतिकस्याग्ने स्थोऽग्नेः पार्थिवस्य च ॥ व्युष्टायां तु रजन्यां च ब्रह्मणोऽव्यक्तजन्मनः ॥ ६ ॥ अव्याकृतमिदं त्वासीन्नैशेन तमसा वृतम् ॥ चतुर्भागावशिष्टेऽस्मिन् लोके नष्टे विशेषतः ॥ ७ ॥ स्वयंभूर्भगवांस्तत्र लोकसर्वार्थसाधकः ॥ खद्योतवत्स व्यचरदाविर्भावचिकीर्षया ॥ ८ ॥ सोऽग्निं सृष्ट्वाथ लोकादौ पृथिवीजलसंश्रितः ॥ संहृत्य तत्प्रकाशार्थं त्रिधा व्यभजदीश्वरः ॥ ९ ॥ पवनो यस्तु लोकेऽस्मिन्पार्थिवो वह्निरुच्यते ॥ यश्चासौ तपते सूर्ये शुचिरग्निस्तु स स्मृतः ॥१०॥ वैद्युतोऽब्जस्तु विज्ञेयस्तेषां वक्ष्ये तु लक्षणम् ॥ वैद्युतो जाठरः सौरो वारिगर्भास्त्रयोऽग्नयः ॥ ११ ॥ तस्मादपः पिबन्सूर्यो गोभिर्दीप्यत्यसौ विभुः ॥ जले चाब्जः समाविष्टो नाद्भिरग्निः प्रशाम्यति ॥ १२ ॥

"नवपंचाशकेऽध्याये त्रिविधो वह्निरुच्यते ॥ सूर्यरश्मिसहस्रस्य कार्यं संख्या च भागतः ॥ १ ॥" सूतः पूर्वकल्पीयऋषिसूतसंवादेन विस्तरतो ज्योतिर्विनिर्णयं कथयति एतदित्यादिना ॥ १ ॥ २ ॥ ३ ॥ महाप्राज्ञैः व्यासादिभिरित्यर्थः ॥ ४ ॥ सूर्यचन्द्रादयो ग्रहाः यथा येन प्रकारेण देवगृहाणि देवस्थानानीत्यर्थः ॥ ५ ॥ व्युष्टायां गतप्रायायाम् ॥ ६ ॥ इदं ब्रह्मांडमव्याकृतमस्पष्टमित्यर्थः ॥ ७ ॥ आविर्भावचिकीर्षया जगत्सर्जनेच्छया ॥ ८ ॥ तत्पृथिवीजलं संहृत्य त्रिधा त्रिप्रकारमग्निं व्यभजदित्यन्वयः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पवनः पार्थिवः ॥ १३ ॥ निर्गतः ऊष्मा दाहकत्वं यस्मादसौ निरूष्मा ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ताम्राः किंचिदरुणवर्णाः ॥ १८ ॥ १९ ॥ अहश्च रात्रिश्चानयोः समाहारः अहोरात्रम् अपः विशतीत्यन्वयः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ रेशा मेघाश्च वात्स्याश्च ह्रादिन्यः सर्वाः हिमसर्जनाः नामतश्चन्द्रभा इत्यग्रिमेणान्वयः ॥२६॥२७॥

मानवानां च कुक्षिस्थो नाद्भिः शाम्यति पावकः ॥ अर्चिष्मान्पवनः सोऽग्निर्निष्प्रभो जाठरः स्मृतः ॥ १३ ॥ यश्चायं मंडली शुक्ली निरूष्मा संप्रजायते ॥ प्रभा सौरी तु पादेन ह्यस्तं याते दिवाकरे ॥ १४ ॥ अग्निमाविशते रात्रौ तस्माद्दूरात्प्रकाशते ॥ उद्यंतं च पुनः सूर्यमौष्ण्यमग्नेः समाविशेत् ॥ १५ ॥ पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ ॥ प्रकाशोष्णस्वरूपे च सौराग्नेये तु तेजसी ॥ १६ ॥ परस्परानुप्रवेशादाप्यायेते परस्परम् ॥ उत्तरे चैव भूम्यर्धे तथा ह्यग्निश्च दक्षिणे ॥ १७ ॥ उत्तिष्ठति पुनः सूर्यः पुनर्वै प्रविशत्यपः ॥ तस्मात्ताम्रा भवंत्यापो दिवारात्रिप्रवेशनात् ॥ १८ ॥ अस्तं याति पुनः सूर्यो अहर्वै प्रविशत्यपः ॥ तस्मान्नक्तं पुनः शुक्ला आपो दृश्यंति भास्वराः ॥ १९ ॥ एतेन क्रमयोगेन भूम्यर्धे दक्षिणोत्तरे ॥ उदयास्तमने नित्यमहोरात्रं विशत्यपः ॥ २० ॥ यश्चासौ तपते सूर्यः पिबन्नंभो गभस्तिभिः ॥ पार्थिवाग्निविमिश्रोऽसौ दिव्यः शुचिरितिस्मृतः ॥ २१ ॥ सहस्रपादसौ वह्निर्वृत्तकुंभनिभः स्मृतः ॥ आदत्ते स तु नाडीनां सहस्रेण समंततः ॥ २२ ॥ नादेयीश्चैव सामुद्रीः कूपाश्चैव तथा घनाः ॥ स्थावरा जंगमाश्चैव वापीकुल्यादिका अपः ॥ २३ ॥ तस्य रश्मिसहस्रं तच्छीतवर्षोष्णनिःस्रवम् ॥ तासां चतुःशता नाड्यो वर्षंते चित्रमूर्तयः ॥ २४ ॥ भजनाश्चैव माल्याश्च केतनाः पतनास्तथा ॥ अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः ॥ २५ ॥ हिमोद्वहाश्च ता नाड्यो रश्मयस्त्रिशताः पुनः ॥ रेशा मेघाश्च वात्स्याश्च ह्रादिन्यो हिमसर्जनाः ॥ २६ ॥ चंद्रभा नामतः सर्वाः पीताभाश्च गभस्तयः ॥ शुक्लाश्च ककुभाश्चैव गावो विश्वभृतस्तथा ॥ २७ ॥ शुक्लास्ता नामतः सर्वास्त्रिशतीर्घर्मसर्जनाः ॥ सोमो बिभर्ति ताभिस्तु मनुष्यपितृदेवताः ॥ २८ ॥ मनुष्यानौषधेनेह स्वधया च पितॄनपि ॥ अमृतेन सुरान्सर्वांस्तिसृभिस्तर्पयत्यसौ ॥ २९॥ वसंते चैव ग्रीष्मे च शतैः स तपते त्रिभिः ॥ वर्षास्वथो शरदि च चतुर्भिः संप्रवर्षति ॥ ३० ॥

ताभिः पूर्वोक्तत्रिप्रकाराभिः सोमसूर्यसंज्ञकैः मनुष्यपितृदेवताः बिभर्ति पोषयतीत्यर्थः। तदुक्तं विष्णुपुराणे–"पितृदेवमनुष्यादीन्स सदाप्याययन्प्रभुः ॥ परिवर्तत्यहोरात्रं कारणं सविता द्विज" इति ॥ २८ ॥ २९ ॥ ३० ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ३१ ॥ माघादिमासक्रमेण द्वादशादित्यांस्तद्धर्मांश्च कथयति वरुण इत्यादिना ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ऋतुभेदाद्वविवर्णा न्कथयति वसंत इत्यादिना ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सोमश्चन्द्रः ईशितुः शिवस्य ॥ ४४ ॥ यतः शिवनयनत्वाच्चेषां देवपितृमनुष्यादीनां जनानां नयनं चक्षुरिंद्रियं नयते प्रापयतीत्यर्थः ॥ ४५ ॥ "यो रश्मिभिर्जलहिमोष्णवहैः सहस्रैराप्यायते पितृमनुष्यगणान्सुरान्सः ॥ यस्यास्ति दक्षनयनं सकलोडुपानां राजा च वामन

हेमंते शिशिरे चैव हिममुत्सृजते त्रिभिः ॥ इंद्रो धाता भगः पूषा मित्रोथ वरुणोर्यमा ॥३१॥ अंशुर्विवस्वांस्त्वष्टा च पर्जन्यो विष्णुरेव च ॥ वरुणो माघमासे तु सूर्य एव तु फाल्गुने ॥३२॥ चैत्रे मासि भवेदंशुर्धाता वैशाखतापनः॥ ज्येष्ठे मासि भवेदिंद्र आषाढे चार्यमारविः ॥ ३३ ॥ विवस्वान् श्रावणे मासिप्रोष्ठपादे भगः स्मृतः॥पर्जन्या श्वयुजे मासि त्वष्टा वै कार्तिके रविः ॥३४॥ मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः॥पंचरश्मिसहस्राणि वरुणस्यार्ककर्मणि॥३५॥षड्भिः सहस्रैः पूषा तु देवोंशुः सप्तभिस्तथा॥धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः॥३६॥विवस्वान् दशभिर्याति यात्येकादशभिर्भगः॥सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिः स्मृतः॥३७॥अर्यमा दशभिर्याति पर्जन्यो नवभिस्तथा॥षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति मेदिनीम्॥३८॥वसंते कपिलः सूर्यो ग्रीष्मे कांचनसप्रभः ॥ श्वेतो वर्षासु वर्णेन पांडुः शरदि भास्करः ॥३९॥ हेमंते ताम्रवर्णस्तु शिशिरे लोहितोरविः ॥ इति वर्णाः समाख्याता मया सूर्यसमुद्भवाः॥४०॥ओषधीषु बलं धत्ते स्वधया च पितृष्वपि ॥ सूर्योऽमरेष्वप्यमृतं त्रयं त्रिषु नियच्छति ॥ ४१ ॥ एवं रश्मिसहस्रं तत्सौरं लोकार्थसाधकम् ॥ भिद्यते लोकमासाद्य जलशीतोष्णनिःस्रवम् ॥ ४२ ॥ इत्येतन्मंडलं शुक्लं भास्करं सूर्यसंज्ञितम् ॥ नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च ॥ ४३ ॥ चंद्रऋक्षग्रहाः सर्वे विज्ञेयाः सूर्यसंभवाः ॥ नक्षत्राधिपतिः सोमो नयनं वाममीशितुः ॥४४॥ नयनं चैवमीशस्य दक्षिणं भास्करः स्वयम् ॥ तेषां जनानां लोकेऽस्मिन्नयनं नयते यतः ॥ ४५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सूर्यरश्मिस्वरूपकथनं नामैकोनषष्टितमोध्यायः ॥ ५९ ॥ सूत उवाच ॥ शेषाः पंच ग्रहा ज्ञेया ईश्वराः कामचारिणः ॥ पठ्यते चाग्निरादित्य उदकं चंद्रमाः स्मृतः ॥ १ ॥ शेषाणां प्रकृतिं सम्यग्वक्ष्यमाणां निबोधत ॥ सुरसेनापतिः स्कंदः पठ्यतेंगारको ग्रहः ॥ २ ॥

यनं स विलोकयेन्माम् ॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां एकोनषष्टितमोऽध्यायः ॥५९॥ "लैंगे षष्टितमाध्याये ग्रहप्रकृतयः स्फुटाः ॥ प्रोक्ताश्च सूर्यमहिमा मुख्या वै सप्तरश्मयः॥१॥" सूतः ग्रहस्वरूपं वर्णयति शेषा इत्यादिनाः शेषाः पूर्वोक्तसूर्यचन्द्राभ्यामन्ये पंच ग्रहाः भौमादयः अग्निरादित्यः पठ्यते तथा च श्रुतिः-"अयं वै स्व र्ग्योग्निः पारायिष्णुरमृतात्संभूतः" इति चन्द्रमाः उदक स्मृतः कथित इत्यर्थः ॥ १ ॥ शेषाणां प्रकृतिं स्वरूपमित्यर्थः । अंगारको भौमः ॥ २ ॥
॥ ३ ॥ ४ ॥ प्रजापतिसुतौ भृग्वंगिरापुत्रावित्यर्थः । आदित्यमहिमानं कथयति आदित्य इत्यादिना ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

नारायणं बुधं प्राहुर्देवं ज्ञानविदो जनाः ॥ सर्वलोकप्रभुः साक्षाद्यमो लोकप्रभुः स्वयम् ॥३॥ महाग्रहो द्विजश्रेष्ठा मंदगामी शनैश्चरः । देवासुरगुरू द्वौ तु भानुमंतौ महाग्रहौ ॥ ४ ॥ प्रजापतिसुतावुक्तौ ततः शुक्रबृहस्पती ॥ आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः ॥५॥ भवत्यस्माज्जगत्कृत्स्नं सदेवासुरमानुषम् ॥ रुद्रेंद्रोपेंद्रचंद्राणां विप्रेंद्राग्निदिवौकसाम् ॥ ६ ॥ द्युतिर्द्युतिमतां कृत्स्नं यत्तेजः सार्वलौकिकम् ॥ सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः ॥ ७ ॥ सूर्य एव त्रिलोकेशो मूलं परमदैवतम् ॥ ततः संजायते सर्वं तत्रैव प्रविलीयते ॥ ८ ॥ भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा ॥ अविज्ञेयो ग्रहो विप्रा दीप्तिमान्सुप्रभो रविः ॥९॥ अत्र गच्छंति निधनं जायंते च पुनः पुनः॥ क्षणा मुहूर्ता दिवसा निशाः पक्षाश्च कृत्स्नशः ॥ १० ॥ मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च ॥ तदादित्यादृते ह्येषा कालसंख्या न विद्यते ॥ ११ ॥ कालादृते न नियमो न दीक्षा नाह्निकक्रमः ॥ ऋतूनां च विभागश्च पुष्पं मूलं फलं कुतः ॥ १२ ॥ कुतः सस्यविनिष्पत्तिस्तृणौषधिगणोपि च ॥ अभावो व्यवहाराणां जंतूनां दिवि चेह च ॥ १३ ॥ जगत्प्रतापनमृते भास्करं रुद्ररूपिणम् ॥ स एष कालश्चाग्निश्च द्वादशात्मा प्रजापतिः ॥ १४ ॥ तपत्येष द्विजश्रेष्ठास्त्रैलोक्यं सचराचरम् ॥ स एष तेजसां राशिः समस्तः सार्वलौकिकः ॥ १५ ॥ उत्तमं मार्गमास्थाय राज्यहोभिरिदं जगत् ॥ पार्श्वतोर्ध्वमधश्चैव तापयत्येष सर्वशः ॥ १६ ॥ यथा प्रभाकरो दीपो गृहमध्येवलंबितः ॥ पार्श्वतोर्ध्वमधश्चैव तमो नाशयते समम् ॥ १७ ॥ तद्वत्सहस्रकिरणो ग्रहराजो जगत्प्रभुः ॥ सूर्यो गोभिर्जगत्सर्वमादीपयति सर्वतः ॥ १८ ॥ रवे रश्मिसहस्रं यत्प्राङ्मया समुदाहृतम् ॥ तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥ १९ ॥ सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च ॥ विश्वव्यचाः पुनश्चाद्यः सन्नद्धश्च ततः परः ॥२०॥ सर्वावसुः पुनश्चान्यः स्वराडन्यः प्रकीर्तितः ॥ सुषुम्नः सूर्यरश्मिस्तु दक्षिणां राशिमैधयत् ॥२१॥ न्यगूर्ध्वाधः प्रचारोऽस्य सुषुम्नः परिकीर्तितः ॥ हरिकेशः पुरस्ताद्यो ऋक्षयोनिः प्रकीर्त्यते ॥ २२ ॥

॥१६ ॥ १७ ॥ १८ ॥ यज्जलहिमोष्णनिःस्रवं प्राक्पूर्वाध्याये समुदाहृतं विभागेन कथितमित्यर्थः ॥ १९ ॥ मुख्यसप्तरश्मिनामानि कथयति सुषुम्न इत्यादिना ॥ २० ॥ दक्षिणां राशिं चन्द्ररूपामित्यर्थः ॥ २१ ॥ ऋक्षयोनिः नक्षत्रप्रकाशक इत्यर्थः ॥ २२ ॥
॥ २३ ॥ २४ ॥ सूर्यप्रभावेन सूर्यतेजसेत्यर्थः ॥ २५ ॥ नक्षत्रव्युत्पत्तिं दर्शयति न क्षीयंत इति ॥ २६ ॥ "यस्य सर्वजनैर्दृश्यं साक्षात्सूर्यात्मकं वपुः ॥ जगतां कारणं मुख्यं तं रुद्रं प्रणमाम्यहम् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां षष्टितमोऽध्यायः ॥ ६० ॥ "एकषष्टितमे प्रोक्ता ग्रहस्थानाभिमानिनः ॥ स्थानानां रश्मिरूपाणि ग्रहर्क्षाण्यादयश्च वै ॥१॥" सूतः ग्रहस्वरूपं निरूपयति क्षेत्राणीत्यादिना।एतानि रात्रौ दृश्यमानानि क्षेत्राणि स्थानानि गभस्तिभिः सूर्यकिरणैः आतपंति चकासंतीत्यर्थः । इह भरतखंडे चीर्णेन आचरितेन सुकृतेन तेषां पुण्यकृतां क्षेत्राणि स्थानानि भवंतीति शेषः । अथ सुकृतांते ग्रहाश्रया ग्रहवर्तिनः नक्षत्रतारकाः सूर्य

दक्षिणे विश्वकर्मा च रश्मिर्वर्धयते बुधम् ॥ विश्वव्यचास्तु यः पश्चाच्छुक्रयोनिः स्मृतो बुधैः ॥ २३ ॥ सन्नद्धश्च तु यो रश्मिः स योनिर्लोहितस्य तु ॥ षष्ठः सर्वावसू रश्मिः स योनिस्तु बृहस्पतेः ॥ २४ ॥ शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट् ॥ एवं सूर्यप्रभावेन नक्षत्रग्रहतारकाः ॥२५॥ दृश्यंते दिवि ताः सर्वा विश्वं चेदं पुनर्जगत् ॥ न क्षीयंते यतस्तानि तस्मान्नक्षत्रता स्मृता ॥ २६ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे षष्टितमोध्यायः ॥ ६० ॥ सूत उवाच ॥ क्षेत्राण्येतानि सर्वाणि आतपंति गभस्तिभिः ॥ तेषां क्षेत्राण्यथादत्ते सूर्यो नक्षत्रतारकाः ॥ १ ॥ चीर्णेन सुकृतेनेह सुकृतांते ग्रहाश्रयाः॥तारणात्तारका ह्येताः शुक्लत्वाच्चैव तारकाः॥२॥दिव्यानां पार्थिवानां च नैशानां चैव सर्वशः ॥ आदानान्नित्यमादित्यस्तेजसां तमसामपि ॥ ३ ॥ सवने स्यंदनेऽर्थे च धातुरेष विभाव्यते ॥ सवनात्तेजसोऽपां च तेनासौ सविता मतः ॥ ४ ॥ बहुलश्चंद्र इत्येष ह्लादने धातुरुच्यते ॥ शुक्लत्वे चामृतत्वे च शीतत्वे च विभाव्यते ॥ ५ ॥ सूर्याचंद्रमसोर्दिव्ये मंडले भास्वरे खगे ॥ जलतेजोमये शुक्ले वृत्तकुंभनिभे शुभे ॥ ६ ॥ घनतोयात्मकं तत्र मंडलं शशिनः स्मृतम् ॥ घनतेजोमयं शुक्लं मंडलं भास्करस्य तु ॥ ७ ॥ वसंति सर्वदेवाश्च स्थानान्येतानि सर्वशः ॥ मन्वंतरेषु सर्वेषु ऋक्षसूर्यग्रहाश्रयाः ॥ ८ ॥ तेन ग्रहा गृहाण्येव तदाख्यास्ते भवंति च ॥ सौरं सूर्योऽविशत्स्थानं सौम्यं सोमस्तथैव च ॥ ९ ॥ शौक्रं शुक्रोऽविशत्स्थानं षोडशार्चिः प्रतापवान् ॥ बृहद्बृहस्पतिश्चैव लोहितश्चैव लोहितम् ॥ १० ॥

आदत्ते गृह्णातीत्यग्रिमस्थैरन्वयः ॥ १ ॥ तारकाशब्दव्युत्पत्तिं कथयति तारणादिति ॥ २ ॥ आदित्यशब्दव्युत्पत्तिं दर्शयति दिव्यानामिति ॥ ३ ॥ एषधातुः सवने स्यंदनेऽर्थे च विभाव्यते पठ्यत इत्यर्थः ॥ ४ ॥ चन्द्र इति चन्द्रशब्दप्रकृतिभूतः एष चदिधातुर्ह्लादने बहुलः बह्वर्थप्रतिपादकः उच्यते अत इति शेषः । शुक्लत्वादौ विभाव्यत इत्यन्वयः ॥ ५ ॥
॥ ६ ॥ ७ ॥ ऋक्षसूर्यग्रहाश्रयाः सर्वे देवाः सर्वशः स्वायंभुवादिषु मन्वंतरेषु एतानि स्थानानि वसंति [illegible] ॥ ८ ॥ [illegible] कारणेन ते सूर्यादयो ग्रहाख्याः भवंतीत्यन्वयः ॥ ९ ॥ १० ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अस्मिन्वर्तमाने वैवस्वतेंतरे वैमानिकाः विमानचारिणः ग्रहाः स्मृताः अदितेर्देवमातुः पुत्रः विवस्वान् रश्मिवान् 'विवो रश्मिः' इत्यनरव्याख्यायामुक्त सूर्य इत्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥ विरूपो विकृतस्वरूपः संज्ञापुत्रः छायासुतः लोहितार्चिषः रुद्रसकाशाद्विकेश्यां तत्संज्ञरुद्रपत्न्याम् अग्निः जज्ञे

शनैश्चरं तथा स्थानं देवश्चापि शनैश्चरः ॥ चौधं बुधस्तु स्वर्भानुः स्वर्भानुस्थानमाश्रितः ॥ ११ ॥ नक्षत्राणि च सर्वाणि नक्षत्राणि विशंति च ॥ गृहाण्येतानि सर्वाणि ज्योतींषि सुकृतात्मनाम् ॥ १२ ॥ कल्पादौ संप्रवृत्तानि निर्मितानि स्वयंभुवा ॥ स्थानान्येतानि तिष्ठंति यावदाभूतसंप्लवम् ॥ १३ ॥ मन्वंतरेषु सर्वेषु देवस्थानानि तानि वै ॥ अभिमानिनोऽवतिष्ठंते देवाः स्थानं पुनःपुनः ॥ १४ ॥ अतीतैस्तु सहैतानि भाव्याभाव्यैः सुरैः सह ॥ वर्तते वर्तमानैश्च स्थानिभिस्तैः सुरैः सह ॥ १५ ॥ अस्मिन्मन्वंतरे चैव ग्रहा वैमानिकाः स्मृताः ॥ विवस्वानदितेः पुत्रः सूर्यो वैवस्वतेंतरे ॥ १६ ॥ द्युतिमानृषिपुत्रस्तु सोमो देवो वसुः स्मृतः ॥ शुक्रो देवस्तु विज्ञेयो भार्गवोऽसुरयाजकः ॥ १७ ॥ बृहत्तेजाः स्मृतो देवो देवाचार्योंगिरःसुतः ॥ बुधो मनोहरश्चैव ऋषिपुत्रस्तु स स्मृतः॥१८॥ शनैश्चरो विरूपस्तु संज्ञापुत्रो विवस्वतः॥ अग्निर्विकेश्यां जज्ञे तु युवाऽसौ लोहितार्चिषः ॥ १९ ॥ नक्षत्रऋक्षनामिन्यो दाक्षायण्यस्तु ताः स्मृताः ॥ स्वर्भानुः सिंहिकापुत्रो भूतसंतापनोऽसुरः ॥ २० ॥ सोमर्क्षग्रहसूर्येषु कीर्तितास्त्वभिमानिनः ॥ स्थानान्येतान्यथोक्तानि स्थानिन्यश्चैव देवताः ॥ २१ ॥ सौरमग्निमयं स्थानं सहस्रांशोर्विवस्वतः ॥ हिमांशोस्तु स्मृतं स्थानमम्मयं शुक्लमेव च ॥ २२ ॥ आप्यं श्यामं मनोज्ञं च बुधरश्मिगृहं स्मृतम् ॥ शुक्रस्याप्यम्मयं शुक्लं पदं षोडशरश्मिवत् ॥ २३ ॥ नवरश्मि तु भौमस्य लोहितं स्थानमुत्तमम् ॥ हरिद्राभं बृहच्चापि षोडशार्चिर्बृहस्पतेः ॥ २४ ॥ अष्टरश्मिगृहं चापि प्रोक्तं कृष्णं शनैश्चरे ॥ स्वर्भानोस्तामसं स्थानं भूतसंतापनालयम् ॥ २५ ॥ विज्ञेयास्तारकाः सर्वास्त्वृषयस्त्वेकरश्मयः ॥ आश्रयाः पुण्यकीर्तीनां शुक्लाश्चापि स्ववर्णतः ॥ २६ ॥ घनतोयात्मिका ज्ञेयाः कल्पादावेव निर्मिताः ॥ आदित्यरश्मिसंयोगात्संप्रकाशात्मिकाः स्मृताः ॥ २७ ॥ नवयोजनसाहस्रो विष्कंभः सवितुः स्मृतः ॥ त्रिगुणस्तस्य विस्तारो मंडलस्य प्रमाणतः ॥ २८ ॥

उत्पन्नः असौ युवा कुमारो भौम इत्यर्थः । अष्टमूर्तिरुद्रपत्न्य उक्ता विष्णुपुराणे-"स्वर्वर्चला तथैवोमा विकेशी चापरा शिवा ॥ स्वाहा दिशस्तथा दीक्षा रोहिणी च यथाक्रमम्" इति । अत एव भौमस्याग्निरूपत्वादग्निर्मूर्धेति मंत्रस्य तत्र विनियोग उक्तः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ आदित्यविष्कंभादिदाढर्यार्थ पुनरपि वर्णयति नवयोजन इत्यादिना ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अर्धमात्राण्यर्धयोजनपरिमितानि ॥ ३८ ॥ ३९ ॥ ग्रहनक्षत्रोत्पत्ति

द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः॥ तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात्प्रसर्पति ॥२९॥ उद्धृत्य पृथिवीछायां निर्मितां मंडलाकृतिम् ॥ स्वर्भानोस्तु बृहत्स्थानं तृतीयं यत्तमोमयम् ॥३०॥ आदित्यात्तच्च निष्क्रम्य समं गच्छति पर्वसु॥ आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु॥३१॥ स्वर्भानुं नुदते यस्मात्तस्मात्स्वर्भानुरुच्यते ॥ चंद्रस्य षोडशो भागो भार्गवस्य विधीयते ॥ ३२ ॥ विष्कंभान्मंडलाच्चैव योजनाग्रात्प्रमाणतः ॥ भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः ॥ ३३ ॥ बृहस्पतेः पादहीनौ वक्रसौरी उभौ स्मृतौ ॥ विस्तारान्मंडलाच्चैव पादहीनस्तयोर्बुधः ॥ ३४ ॥ तारानक्षत्ररूपाणि वपुष्मंतीह यानि वै ॥ बुधेन तानि तुल्यानि विस्तारान्मंडलाच्च वै ॥ ३५ ॥ प्रायशश्चंद्रयोगीनि विद्यादृक्षाणि तत्त्ववित ॥ तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ ३६ ॥ शतानि पंच चत्वारि त्रीणि द्वे चैव योजने ॥ सर्वोपरि निकृष्टानि तारकामंडलानि तु ॥ ३७ ॥ योजनान्यर्धमात्राणिं तेभ्यो ह्रस्वं न विद्यते ॥ उपरिष्टात्त्रयस्तेषां ग्रहास्ते दूरसर्पिणः ॥ ३८ ॥ सौरोंगिराश्च वक्रश्च ज्ञेया मंदविचारिणः॥ पूर्वमेव समाख्याता गतिस्तेषां यथाक्रमम् ॥३९॥ एतेष्वेव ग्रहाः सर्वे नक्षत्रेषु समुत्थिताः ॥ विवस्वानदितेः पुत्रः सूर्यो वै मुनिसत्तमाः ॥ ४० ॥ विशाखासु समुत्पन्नो ग्रहाणां प्रथमो ग्रहः ॥ त्विषिमान् धर्मपुत्रस्तु सोमो देवो वसुस्तु सः ॥ ४१ ॥ शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः ॥ षोडशार्चिर्भृगोः पुत्रः शुक्रः सूर्यादनंतरम् ॥ ४२ ॥ ताराग्रहाणां प्रवरस्तिष्ये क्षेत्रे समुत्थितः ॥ ग्रहश्चांगिरसः पुत्रो द्वादशार्चिर्बृहस्पतिः ॥ ४३ ॥ फाल्गुनीषु समुत्पन्नः पूर्वाख्यासु जगद्गुरुः ॥ नवार्चिर्लोहितांगश्च प्रजापतिसुतो ग्रहः ॥ ४४ ॥ आषाढास्विह पूर्वासु समुत्पन्न इति स्मृतः ॥ रेवतीष्वेव सप्तार्चिः स्थाने सौरिः शनैश्चरः ॥ ४५ ॥ सौम्यो बुधो धनिष्ठासु पंचार्चिरुदितो ग्रहः ॥ तमोमयो मृत्युसुतः प्रजाक्षयकरः शिखी ॥ ४६ ॥ आश्लेषासु समुत्पन्नः सर्वहारी महाग्रहः ॥ तथा स्वनामधेयेषु दाक्षायण्यः समुत्थिताः ॥ ४७ ॥ तमोवीर्यमयो राहुः प्रकृत्या कृष्णमंडलः ॥ भरणीषु समुत्पन्नो ग्रहश्चंद्रार्कमर्दनः ॥ ४८ ॥ एते तारा ग्रहाश्चापि बोद्धव्या भार्गवादयः ॥ जन्मनक्षत्रपीडासु यांति वैगुण्यतां यतः ॥ ४९ ॥

ऋक्षाणि कथयति एतेष्वित्यादिना ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ जन्मनक्षत्रपीडासु स्वस्वजन्मर्क्षोत्पन्नपीडासु यतः यस्मात्कारणाद्वैगुण्यताम् अनिष्टस्थानवर्तितां यांति प्राप्नुवंतीत्यन्वयः ॥ ४९ ॥ ततः पूर्वोक्तकारणाच्चद्ग्रहभक्तितः अनिष्टस्थानस्थग्रहसेवनेन तेन तद्ग्रहकृतदोषेण मुच्यते मुक्तो भवतीत्यर्थः । ग्रहादिनामादीन् कथयति सर्व इत्यादिना ॥५०॥५१॥ श्रविष्ठा धनिष्ठेत्यर्थः ॥५२॥५३॥५४॥ श्रवणांतं श्रवणचरमं धनिष्ठादि तत्प्रभृति पंचपंचानां षष्ठयर्थे प्रथमा। युगं युग्मं वार्षिकं गर्भग्रहणकालत्वा दृष्ट्याद्यमित्यर्थः ॥ ५५ ॥ भानोर्गतिविशेषेण अहोरात्रमिति शेषः । चक्रवत्परिवर्तत इत्यन्वयः। तस्मात्कारणाद्विभुः सूर्यः दिवाकरः स्मृतः कथित इत्यर्थः॥५६॥ तस्य सूर्यस्यापि साक्षाद्देवो रुद्रः प्रवर्तक इत्यन्वयः। 'भीषोदेति सूर्यः' इति श्रुतेः ॥ ५७॥५८॥ ५९ ॥ एकरूपमद्वितीयं यत्प्रधानं तस्यायमद्भुतः अनिर्वाच्यः परिणामो विकार इत्यर्थः। एषः ज्योति

ध्रुवः ॥ सर्वग्रहाणामेतेषामादिरादित्य उच्यते ॥ ५० ॥ ताराग्रहाणां शुक्रस्तु केतूनां चापि धूमवान् ॥ ध्रुवः किलग्रहाणां तु विभक्तानां चतुर्दिशम् ॥ ५१ ॥ नक्षत्राणां श्रविष्ठा स्यादयनानां तथोत्तरम् ॥ वर्षाणां चैव पंचानामाद्यः संवत्सरः स्मृतः ॥५२॥ ऋतूनां शिशिरश्चापि मासानां माघ उच्यते ॥ पक्षाणां शुक्लपक्षस्तु तिथीनां प्रतिपत्तथा ॥ ५३ ॥ अहोरात्रविभागानामहश्चादिः प्रकीर्तितम् ॥ मुहूर्तानां तथैवादिर्मुहूर्तो रुद्रदैवतः ॥ ५४ ॥ क्षणश्चापि निमेषादिः कालः कालविदां वराः ॥ श्रवणांतं धनिष्ठादि युगं स्यात्पंचवार्षिकम् ॥ ५५ ॥ भानोर्गतिविशेषेण चक्रवत्परिवर्तते ॥ दिवाकरः स्मृतस्तस्मात्कालकृद्विभुरीश्वरः ॥ ५६ ॥ चतुर्विधानां भूतानां प्रवर्तकनिवर्तकः ॥ तस्यापि भगवान् रुद्रः साक्षाद्देवः प्रवर्तकः ॥ ५७ ॥ इत्येष ज्योतिषामेवं सन्निवेशोऽर्थनिश्चयः ॥ लोकसंव्यवहारार्थं महादेवेन निर्मितः ॥ ५८ ॥ बुद्धिपूर्वं भगवता कल्पादौ संप्रवर्तितः ॥ स आश्रयोभिमानी च सर्वस्य ज्योतिरात्मकः ॥ ५९ ॥ एकरूपप्रधानस्य परिणामोयमद्भुतः ॥ नैष शक्यः प्रसंख्यातुं याथातथ्येन केनचित् ॥ ६० ॥ गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा ॥ आगमादनुमानाच्च प्रत्यक्षादुदपत्तितः ॥ ६१ ॥ परीक्ष्य निपुणं बुद्ध्या श्रद्धातव्यं विपश्चिता ॥ चक्षुः शास्त्रं जलं लेख्यं गणितं मुनिसत्तमाः ॥ ६२ ॥ पंचैते हेतवो ज्ञेया ज्योतिर्गणविनिर्णये ॥ ६३ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे ग्रहसंख्यावर्णनं नामैकषष्टितमोध्यायः ॥ ६१ ॥ ऋषय ऊचुः ॥ कथं विष्णोः प्रसादाद्वै ध्रुवो बुद्धिमतां वरः ॥ मेढीभूतो ग्रहाणां वै वक्तुमर्हसि सांप्रतम् ॥ १ ॥

गणः याथातथ्येन प्रत्यक्षेण केनचिदसंख्यातुं गणितुं न शक्यत इत्यन्वयः ॥ ६० ॥ मांसचक्षुषा मनुष्येण विपश्चिता ज्योतिषां ग्रहादीनां गतागतं समवक्रादिगमनमागमादिना निपुणं बुद्ध्या परीक्ष्य श्रद्धातव्यमित्यग्रिमेणान्वयः ॥ ६१ ॥ ६२ ॥ ज्योतिषां ज्ञाननिर्णये चक्षुरादय एते पंच हेतवो ज्ञेया इत्यग्रिमेणान्वयः ॥ ६३ ॥ "सर्वग्रहाणां प्रथमो हि सूर्य स्तस्यापि रुद्रः किल सर्वहेतुः ॥ तत्सेवनात्सर्वग्रहाः सहर्क्षाः सदानुकूलाः प्रभवंतु चास्मिन् ॥ १ ॥ इति श्रीलिंगपुराणे पूर्वभागे शिवतोषिण्यां टीकायामेकषष्टितमोध्यायः ॥६१॥ "द्वयधिकेस्मिन् षष्टितमे चरितं वर्ण्यते त्विदम् ॥ केशवं तपसाराध्य ध्रुवः प्राप परं पदम् ॥१॥" ऋषयो ध्रुवस्य सकलग्रहाधारभूतपदप्राप्तिचरितमपृच्छन्कथमिति ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सूतः मार्कंडेयसंवादेन ध्रुवचरितं कथयति एतमित्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ मानिता उत्पन्नगर्वा ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ हे पुत्र त्वं स्वस्थः सन् स्वशक्त्या ध्रुवं स्थानं समाप्नुयाः प्राप्तुं यतस्वेत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ केशवं विष्णुं शंभोर्दक्षिणांगभवमपसव्यशरीरभवमित्यर्थः ॥ "वामं शरीरं सव्यं स्यादप

सूत उवाच ॥ एतमर्थं मया पृष्टो नानाशास्त्रविशारदः ॥ मार्कंडेयः पुरा प्राह मह्यं शुश्रूषवे द्विजाः ॥ २ ॥ मार्कंडेय उवाच ॥ सार्वभौमो महातेजाः सर्वशस्त्रभृतां वरः ॥ उत्तानपादो राजा वै पालयामास मेदिनीम् ॥ ३ ॥ तस्य भार्याद्वयमभूत्सुनीतिः सुरुचिस्तथा ॥ अग्रजायाम भूत्पुत्रः सुनीत्यां तु महायशाः ॥ ४ ॥ ध्रुवो नाम महाप्राज्ञः कुलदीपो महामतिः ॥ कदाचित्सप्तवर्षोपि पितुरंकमुपाविशत् ॥ ५ ॥ सुरुचिस्तं विनिर्धूय स्वपुत्रं प्रीतिमानसा ॥ न्यवेशयत्तं विप्रेंद्रा ह्यंकं रूपेण मानिता ॥ ६ ॥ अलब्ध्वा स पितुर्धीमानंकं दुःखितमानसः ॥ मातुः समीपमागम्य रुरोद स पुनः पुनः ॥ ७ ॥ रुदंतं पुत्रमाहेदं माता शोकपरिप्लुता ॥ सुरुचिर्दयिता भर्तुः तस्याः पुत्रोपि तादृशः ॥ ८ ॥ मम त्वं मंदभाग्याया जातः पुत्रोप्यभाग्यवान् ॥ किं शोचसि किमर्थं त्वं रोदमानः पुनःपुनः ॥ ९ ॥ संतप्तहृदयो भूत्वा मम शोकं करिप्यसि ॥ स्वस्थस्थानं ध्रुवं पुत्र स्वशक्त्या त्वं समाप्नुयाः ॥ १० ॥ इत्युक्तः स तु मात्रा वै निर्जगाम तदा वनम् ॥ विश्वामित्रं ततो दृष्ट्वा प्रणिपत्य यथाविधि ॥ ११ ॥ उवाच प्रांजलिर्भूत्वा भगवन् वक्तुमर्हसि ॥ सर्वेषामुपरिस्थानं केन प्राप्स्यामि सत्तम ॥ १२ ॥ पितुरंके समासीनं माता मां सुरुचिर्मुने ॥ व्यधूनयत्स तां राजा पिता नोवाच किंचन ॥ १३ ॥ एतस्मात्कारणाद्ब्रह्मंस्त्रस्तोहं मातरं गतः ॥ सुनीतिराह मे माता माकृथाः शोकमुत्तमम् ॥ १४ ॥ स्वकर्मणा परं स्थानं प्राप्तुमर्हसि पुत्रक ॥ तस्या हि वचनं श्रुत्वा स्थानं तव महामुने ॥ १५ ॥ प्राप्तो वनमिदं ब्रह्मन्य त्वां दृष्टवान्प्रभो ॥ तव प्रसादात्प्राप्स्येहं स्थानमद्भुतमुत्तमम् ॥ १६ ॥ इत्युक्तः स मुनिः श्रीमान्प्रहसन्निदमब्रवीत् ॥ राजपुत्र शृणुष्वेदं स्थानमुत्तममाप्स्यसि ॥ १७ ॥ आराध्य जगतामीशं केशवं क्लेशनाशनम् ॥ दक्षिणांगभवं शंभोर्महादेवस्य धीमतः ॥ १८ ॥ जप नित्यं महाप्राज्ञ सर्वपापविनाशनम् ॥ इष्टदं परमं शुद्धं पवित्रममलं परम् ॥ १९ ॥ ब्रूहि मंत्रमिमं दिव्यं प्रणवेन समन्वितम् ॥ नमोस्तु वासुदेवाय इत्येवं नियतेंद्रियः ॥ २० ॥ ध्यायन्सनातनं विष्णुं जपहोमपरायणः ॥ इत्युक्तः प्रणिपत्यैनं विश्वामित्रं महायशाः ॥ २१ ॥

सव्यं तु दक्षिणम्" इत्यमरः । एतदेवोक्तमष्टात्रिंशे विष्णुना—"अहं वामांगजो ब्रह्मन्शंकरस्य महात्मनः" इति ॥ १८ ॥ १९ ॥ इममग्रोपदिष्टं नमोस्तु वासुदेवायेत्येवं नमो भगवते वासुदेवाय इत्याकारकं प्रणवेन समन्वितं मंत्रं गुप्तसंभापणीयं ब्रूहि उच्चारयेत्यर्थः ॥ तदुक्तं चत्वारिंशच्छ्लोके—"एवं ध्रुवो महातेजा द्वादशाक्षरविद्यया" इति ॥ २० ॥ २१ ॥ ॥ २२ ॥ अजस्रं निरंतरमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ततः शंखस्पर्शात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ततो विष्णुवरदानानं

प्राङ्मुखो नियतो भूत्वा जजाप प्रीतमानसः ॥ शाकमूलफलाहारः संवत्सरमतंद्रितः ॥ २२ ॥ जजाप मंत्रमनिशमजस्रं स पुनःपुनः ॥ वेताला राक्षसा घोराः सिंहाद्याश्च महामृगाः ॥ २३ ॥ तमभ्ययुर्महात्मानं बुद्धिमोहाय भीषणाः ॥ जपन् स वासुदेवेति न किंचित्प्रत्यपद्यत ॥ २४ ॥ सुनीतिरस्य या माता तस्या रूपेण संवृता ॥ पिशाची समनुप्राप्ता रुरोद भृशदुःखिता ॥ २५ ॥ मम त्वमेकः पुत्रोसि किमर्थं क्लिश्यते भवान् ॥ मामनाथामपहाय तप आस्थितवानसि ॥ २६ ॥ एवमादीनि वाक्यानि भाषमाणां महातपाः ॥ अनिरीक्ष्यैव हृद्यात्मा हरेर्नाम जजाप सः ॥ २७ ॥ ततः प्रशेमुः सर्वत्र विघ्नरूपाणि तत्र वै ॥ ततो गरुडमारुह्य कालमेघसमद्युतिः ॥ २८ ॥ सर्वदेवैः परिवृतः स्तूयमानो महर्षिभिः ॥ आययौ भगवान्विष्णुः ध्रुवांतिकमरातिहा ॥ २९ ॥ समागतं विलोक्याथ कोसावित्येव चिंतयन् ॥ पिबन्निव हृषीकेशं नयनाभ्यां जगत्पतिम् ॥ ३० ॥ जपन् स वासुदेवेति ध्रुवस्तस्थौ महाद्युतिः ॥ शंखप्रांतेन गोविंदः पस्पर्शास्यं हि तस्य वै ॥ ३१ ॥ ततः स परमं ज्ञानमवाप्य पुरुषोत्तमम् ॥ तुष्टाव प्रांजलिर्भूत्वा सर्वलोकेश्वरं हरिम् ॥ ३२ ॥ प्रसीद देवदेवेश शंखचक्रगदाधर ॥ लोकात्मन् वेदगुह्यात्मन्त्वां प्रपन्नोस्मि केशव ॥ ३३ ॥ न विदुस्त्वां महात्मानं सनकाद्या महर्षयः ॥ तत्कथं त्वामहं विद्यां नमस्ते भुवनेश्वर ॥ ३४ ॥ तमाह प्रहसन्विष्णुरेहि वत्स ध्रुवो भवान् ॥ स्थानं ध्रुवं समासाद्य ज्योतिषामग्रभुग्भव ॥ ३५ ॥ मात्रा त्वं सहितस्तत्र ज्योतिषां स्थानमाप्नुहि ॥ मत्स्थानमेतत्परमं ध्रुवं नित्यं सुशोभनम् ॥ ३६ ॥ तपसाराध्य देवेशं पुरा लब्धं हि शंकरात् ॥ वासुदेवेति यो नित्यं प्रणवेन समन्वितम् ॥ ३७ ॥ नमस्कारसमायुक्तं भगवच्छब्दसंयुतम् ॥ जपेदेवं हि यो विद्वान्ध्रुवं स्थानं प्रपद्यते ॥ ३८ ॥ ततो देवाः सगंधर्वाः सिद्धाश्च परमर्षयः ॥ मात्रा सह ध्रुवं सर्वे तस्मिन्स्थाने न्यवेशयन् ॥ ३९ ॥ विष्णोराज्ञां पुरस्कृत्य ज्योतिषां स्थानमाप्तवान् ॥ एवं ध्रुवो महातेजा द्वादशाक्षरविद्यया ॥ ४० ॥ अवाप महतीं सिद्धिमेतत्ते कथितं मया ॥ ४१ ॥ सूत उवाच ॥ तस्माद्यो वासुदेवाय प्रणामं कुरुते नरः ॥ स याति ध्रुवसालोक्यं ध्रुवत्वं तस्य तत्तथा ॥ ४२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे भुवनकोशे ध्रुवसंस्थानवर्णनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

तरम् ॥ ३९ ॥ ४० ॥ अवापेत्ययं द्विपाच्छ्लोकः ॥ ४१ ॥ तस्योत्तानपादपुत्रस्य तद्द्वादशाक्षरमंत्रजपात्तया पूर्वोक्तप्रकारेण ध्रुवत्वं निश्चलस्थानवर्तित्वमित्यर्थः ॥ ४२ ॥ "बालोपि यं समाराध्य ध्रुव आप परं पदम् ॥ तमीशवामांगभवं विष्णुमीडे जगत्पतिम् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

"अथाधिकेस्मिन्षष्टितमे सृष्टिर्दक्षसमुद्भवा ॥ देवादीनां क्रमेणैव वासिष्ठांता निगद्यते ॥ १ ॥" ऋषयः सृष्टिक्रममपृच्छन्देवानामित्यादिना ॥ १ ॥ पूर्वेषां ब्रह्मादीनां मैथुनसंभवा स्त्रीपुरुषसंयोगजन्येत्यर्थः ॥ २ ॥ ३ ॥ सूत्यां तत्संज्ञकस्त्रियामित्यर्थः ॥ ४ ॥ भुवः संसारक्षेत्रभूतलिंगशरीरस्य प्रमाणं विस्तारमूर्ध्वमवसानमधः मूलं सर्वं ज्ञात्वा ततः सृष्टिं कुरुध्वमित्यग्रिमेणान्वयः ।

ऋषय ऊचुः ॥ देवानां दानवानां च गंधर्वोरगरक्षसाम् ॥ उत्पत्तिं ब्रूहि सूताद्य यथाक्रममनुत्तम् ॥ १ ॥ सूत उवाच ॥ संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ॥ दक्षात्प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसंभवा ॥ २ ॥ यदा तु सृजतस्तस्य देवर्षिगणपन्नगान् ॥ न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः ॥ ३ ॥ दक्षः पुत्रसहस्राणि पंच सूत्यामजीजनत् ॥ तांस्तु दृष्ट्वा महाभागान्सिसृक्षुर्विविधाः प्रजाः ॥ ४ ॥ नारदः प्राह हर्यश्वान्दक्षपुत्रान्समागतान् ॥ भुवः प्रमाणं सर्वं तु ज्ञात्वोर्ध्वमध एव च ॥ ५ ॥ ततः सृष्टिं विशेषेण कुरुध्वं मुनिसत्तमाः ॥ ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् ॥ ६ ॥ अद्यापि न निवर्तंते समुद्रादिव सिंधवः ॥ हर्यश्वेषु च नष्टेषु पुनर्दक्षः प्रजापतिः ॥ ७ ॥ सूत्यामेव च पुत्राणां सहस्रमसृजत्प्रभुः ॥ शबला नाम ते विप्राः समेताः सृष्टिहेतवः ॥ ८ ॥ नारदोनुगतान्प्राह पुनस्तान्सूर्यवर्चसः ॥ भुवः प्रमाणं सर्वं तु ज्ञात्वा भ्रातॄन्पुनः पुनः ॥ ९ ॥ आगत्य वाथ सृष्टिं वै करिष्यथ विशेषतः ॥ तेपि तेनैव मार्गेण जग्मुर्भ्रातृगतिं तथा ॥ १० ॥ ततस्तेष्वपि नष्टेषु षष्टिकन्याः प्रजापतिः ॥ वैरिण्यां जनयामास दक्षः प्राचेतसस्तदा ॥ ११ ॥ प्रादात्स दशकं धर्मे कश्यपाय त्रयोदश ॥ विंशत्सप्त च सोमाय चतस्रो रिष्टनेमये ॥ १२ ॥ द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते ॥ द्वे चैवांगिरसे तद्वत्तासां नामानि विस्तरात् ॥ १३ ॥ शृणुध्वं देवमातॄणां प्रजाविस्तारमादितः ॥ मरुत्वती वसुर्यामिर्लंबा भानुररुंधती ॥ १४ ॥ संकल्पा च मुहूर्ता च साध्या विश्वा च भामिनी ॥ धर्मपत्न्यः समाख्यातास्तासां पुत्रान्वदामि वः ॥ १५ ॥ विश्वेदेवास्तु विश्वायाः साध्या साध्यानजीजनत् ॥ मरुत्वत्यां मरुत्वंतो वसोस्तु वसवस्तथा ॥ १६ ॥ भानोस्तु भानवः प्रोक्ता मुहूर्तायां मुहूर्तकाः ॥ लंबाया घोषनामानो नागवीथिस्तु यामिजः ॥ १७ ॥ संकल्पायास्तु संकल्पो वसुसर्गं वदामि वः ॥ ज्योतिष्मंतस्तु ये देवा व्यापकाः सर्वतोदिशम् ॥ १८ ॥ वसवस्ते समाख्याताः सर्वभूतहितैषिणः ॥ आपो ध्रुवश्च सोमश्च धरश्चैवानिलोनलः ॥ १९ ॥ प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥ अजैकपादहिर्बुध्न्यो विरूपाक्षः सभैरवः ॥ २० ॥ हरश्च बहुरूपश्च त्र्यंबकश्च सुरेश्वरः ॥ सावित्रश्च जयंतश्च पिनाकी चापराजितः ॥ २१ ॥

"तदुक्तं भागवते "भूः क्षेत्रं जीवसंज्ञं [illegible] अहह्वा तस्य निर्वाणं किमसत्कर्माभिभवेत्" इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ धर्मपत्नीनामानि कथयति मरुत्वतीत्यादिना ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ वसुनामानि कथयति आप इत्यादिना ॥ १९ ॥ रुद्रनामानि कथयति अजैकपादित्यादिना ॥ २० ॥ २१ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्रपौत्रकम् ॥ २२ ॥ अदितिश्च दितिश्चैव अरिष्टा सुरसा मुनिः ॥ सुरभिर्विनता ताम्रा तद्वत् क्रोधवशा इला ॥ २३ ॥ कद्रूस्त्विपा दनुस्तद्वत्तासां पुत्रान्वदामि वः ॥ तुषिता नाम ये देवाश्चाक्षुषस्यांतरे मनोः ॥२४॥ वैवस्वतांतरे ते वै आदित्या द्वादश स्मृताः ॥ इंद्रो धाता भगस्त्वष्टा मित्रोथ वरुणोर्यमा ॥ २५ ॥ विवस्वान्सविता पूषा अंशुमान्विष्णुरेव च ॥ एते सहस्रकिरणा आदित्या द्वादश स्मृताः ॥ २६ ॥ दितिः पुत्रद्वयं लेभे कश्यपादिति नः श्रुतम् ॥ हिरण्यकशिपुं चैव हिरण्याक्षं तथैव च ॥ ॥ २७ ॥ दनुः पुत्रशतं लेभे कश्यपाद्बलदर्पितम् ॥ विप्रचित्तिः प्रधानोभूत्तेषां मध्ये द्विजोत्तमाः ॥ २८ ॥ ताम्रा च जनयामास षट् कन्या द्विज पुंगवाः ॥ शुकीं श्येनीं च भासीं च सुग्रीवीं गृध्रिकां शुचिम् ॥ २९ ॥ शुकी शुकानुलूकांश्च जनयामास धर्मतः ॥ श्येनी श्येनांस्तथा भासी कुरं गांश्च व्यजीजनत् ॥ ३० ॥ गृध्री गृध्रान्कपोतांश्च पारावतविहंगमान् ॥ हंससारसकारंडप्लवान्शुचिरजीजनत् ॥३१॥ अजाश्वमेषोष्ट्रखरान्सुग्रीवी चाप्यजीजनत् ॥ विनता जनयामास गरुडं चारुणं शुभा ॥ ३२ ॥ सौदामिनीं तथा कन्यां सर्वलोकभयंकरीम् ॥ सुरसायाः सहस्रं तु सर्पाणा मभवत्पुरा ॥ ३३ ॥ कद्रूः सहस्रशिरसां सहस्रं प्राप सुव्रता ॥ प्रधानास्तेषु विख्याताः षड्विंशतिरनुत्तमाः ॥ ३४ ॥ शेषवासुकिकर्कोटशंखैरावत कंबलाः ॥ धनंजयमहानीलपद्माश्वतरतक्षकाः ॥ ३५ ॥ एलापत्रमहापद्मधृतराष्ट्रबलाहकाः ॥ शंखपालमहाशंखपुष्पदंष्ट्रशुभाननाः ॥ ३६ ॥ शंखलोमा च नहुषो वामनः फणितस्तथा ॥ कपिलो दुर्मुखश्चापि पतंजलिरिति स्मृतः ॥ ३७ ॥ रक्षोगणं क्रोधवशा महामायं व्यजीजनत् ॥ रुद्राणां च गणं तद्वद्गोमहिष्यौ वरांगना ॥ ३८ ॥ सुरभिर्जनयामास कश्यपादिति नः श्रुतम् ॥ मुनिर्मुनीनां च गणं गणमप्सरसां तथा ॥ ३९ ॥ तथा किंनरगंधर्वानरिष्टा जनयद्बहून् ॥ तृणवृक्षलतागुल्ममिला सर्वमजीजनत् ॥ ४० ॥ त्विषा तु यक्षरक्षांसि जनयामास कोटिशः ॥ एते तु काश्यपेयाश्च संक्षेपात्परिकीर्तिताः ॥ ४१ ॥ एतेषां पुत्रपौत्रादिवंशाश्च बहवः स्मृताः ॥ एवं प्रजासु सृष्टासु कश्यपेन महात्मना ॥ ४२ ॥ प्रति ष्ठितासु सर्वासु चरासु स्थावरासु च ॥ अभिषिच्याधिपत्येषु तेषां मुख्यान्प्रजापतिः ॥ ४३ ॥ ततो मनुष्याधिपतिं चक्रे वैवस्वतं मनुम् ॥ स्वायं भुवेंतरे पूर्वं ब्रह्मणा येभिषेचिताः ॥ ४४ ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता ॥ यथोपदेशमद्यापि धर्मेण प्रतिपाल्यते ॥ ४५ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥४५॥ ॥ ४६ ॥ एतेषु स्वायंभुवादिषु अतीतेषु मन्वंतरेषु पार्थिवाः पृथिवीश्वराः गता अतिक्रांताः एवं प्राप्ते मन्वंतरेऽन्येभिषिच्यंत इत्यन्वयः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ पुलस्त्यस्य प्रकृतयः प्रजाः अदेवाः राक्षसाः नव वः वदामि कथयामीत्यर्थः ॥ ५५ ॥ तस्मिन्नेत्रेतायुग इत्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥५९॥ ६० ॥ ६१ ॥

॥ ४६ ॥ मन्वंतरेष्वतीतेषु गता ह्येतेषु पार्थिवाः ॥ एवमन्ये स्वायंभुवेंतरे पूर्वे ब्रह्मणा येभिषेचिताः ॥ ते ह्येते चाभिषिच्यंते मनवश्च भवन्ति ते ॥ ४६ ॥ मन्वंतरेष्वतीतेषु गता ह्येतेषु पार्थिवाः ॥ एवमन्ये भिषिच्यंते प्राप्ते मन्वंतरे ततः ॥४७॥ अतीतानागताः सर्वे नृपा मन्वंतरे स्मृताः ॥ एतानुत्पाद्य पुत्रांस्तु प्रजासंतानकारणात् ॥ ४८ ॥ कश्यपो गोत्रकामस्तु चचार स पुनस्तपः ॥ पुत्रो गोत्रकरो मह्यं भवतादिति चिंतयन् ॥ ४९ ॥ तस्यैवं ध्यायमानस्य कश्यपस्य महात्मनः ॥ ब्रह्मयो गात्सुतौ पश्चात्प्रादुर्भूतौ महौजसौ ॥ ५० ॥ वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ॥ वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः ॥ ५१ ॥ रैभ्यस्य रैभ्या विज्ञेया नैध्रुवस्य वदामि वः ॥ च्यवनस्य तु कन्यायां सुमेधाः समपद्यत ॥५२॥ नैध्रुवस्य तु सा पत्नी माता वै कुंडपायिनाम् ॥ असितस्य कपर्णायां ब्रह्मिष्टः समपद्यत ॥ ५३ ॥ शांडिल्यानां वरः श्रीमान्देवलः सुमहातपाः ॥ शांडिल्या नैध्रुवा रैभ्यास्त्रयः पक्षास्तु काश्यपाः ॥ ५४ ॥ नवप्रकृतयो देवाः पुलस्त्यस्य वदामि वः ॥ चतुर्युगे ह्यतिक्रांते मनोरेकादशे प्रभोः ॥ ५५ ॥ अर्धावशिष्टे तस्मिंस्तु द्वापरे संप्रवर्तिते ॥ मानवस्य नरिष्यंतः पुत्र आसीद्दमः किल ॥ ५६ ॥ दमस्य तस्य दायादस्तृणबिंदुरिति स्मृतः ॥ त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥ ५७ ॥ तस्य कन्या त्विलविला रूपेणाप्रतिमाभवत् ॥ पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥ ५८ ॥ ऋषिरैरविलो यस्यां विश्रवाः समप द्यत ॥ तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धनाः ॥ ५९ ॥ बृहस्पतेः शुभा कन्या नाम्ना वै देववर्णिनी ॥ पुष्पोत्कटा बलाका च सुते मा ल्यवतः स्मृते ॥ ६० ॥ कैकसी मालिनः कन्या तासां वै शृणुत प्रजाः ॥ ज्येष्ठं वैश्रवणं तस्मात्सुषुवे देववर्णिनी ॥ ६१ ॥ कैकसी चाप्यजन यद्रावणं राक्षसाधिपम् ॥ कुंभकर्णं शूर्पनखां धीमंतं च विभीषणम् ॥ ६२ ॥ पुष्पोत्कटा ह्यजनयत्पुत्रांस्तस्माद्द्विजोत्तमाः ॥ महोदरं प्रहस्तं च महापार्श्वं खरं तथा ॥ ६३ ॥ कुंभीनसीं तथा कन्यां बलायाः शृणुत प्रजाः ॥ त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः ॥ ६४ ॥ कन्या वै मालिका चापि बलायाः प्रसवः स्मृतः ॥ इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा नव ॥ ६५ ॥ विभीषणोतिशुद्धात्मा धर्मज्ञः परिकीर्तितः ॥ पुलस्त्यस्य मृगाः पुत्राः सर्वे व्याघ्राश्च दंष्ट्रिणः ॥ ६६ ॥ भूताः पिशाचाः सर्पाश्च सूकरा हस्तिनस्तथा ॥ वानराः किंनराश्चैव ये च किंपु रुषास्तथा ॥ ६७ ॥ अनपत्यः क्रतुस्तस्मिन्स्मृतो वैवस्वतेंतरे ॥ अत्रेः पत्न्यो दशैवासन्सुंदर्यश्च पतिव्रताः ॥ ६८ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ भद्राश्वस्य राजर्षेः घृताच्यामप्सरसि दशसूनवः पुत्र्यः सुंदर्यश्च पतिव्रताः अत्रेः पत्न्यो दशैव दशापि आसन्नित्यग्रिमेणा न्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ आत्रेयवंशस्य प्रभवाः उत्पादका इत्यर्थः । तासां भद्रादीनां भर्ता प्रभाकरः अत्रिः ॥७१॥७२॥ अत्रेः प्रभाकरसंज्ञाकारणं कथयति ब्रह्मर्षेरित्यादिना ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥७७॥ कश्यपादयः एते चत्वारः मानसाः ब्रह्मणो मनोभवाः जज्ञिरे इत्यग्रिमेणान्वयः ॥ ७८ ॥ अरुंधत्याः वसिष्ठपत्न्याः सर्गमिति शेषः । निबोधते

भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥ भद्राभद्रा च जलदा मंदा नंदा तथैव च ॥ ६९ ॥ बलाबला च विप्रेंद्रा या च गोपाबला स्मृता ॥ तथा तामरसा चैव वरक्रीडा च वै दश ॥ ७० ॥ आत्रेयवंशप्रभवास्तासां भर्ता प्रभाकरः ॥ स्वर्भानुपिहिते सूर्ये पतितेस्मिन्दिवो महीम् ॥ ७१ ॥ तमोऽभिभूते लोकेस्मिन्प्रभा येन प्रवर्तिता ॥ स्वस्त्यस्तु हि तवेत्युक्ते पतन्निह दिवाकरः ॥ ७२ ॥ ब्रह्मर्षेर्वचनात्तस्य पपात न विभुर्दिवः ॥ ततः प्रभाकरेत्युक्तः प्रभुरत्रिर्महर्षिभिः ॥७३॥ भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ॥ स तासु जनयामास पुनः पुत्रांस्तपोधनः ॥७४॥ स्वस्त्या त्रेया इतिख्याता ऋषयो वेदपारगाः ॥ तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ च महौजसौ ॥ ७५ ॥ दत्तो ह्यत्रिवरो ज्येष्ठो दुर्वासास्तस्य चानुजः ॥ यवीयसी स्वसा तेषाममला ब्रह्मवादिनी ॥ ७६ ॥ तस्य गोत्रद्वये जाताश्चत्वारः प्रथिता भुवि ॥ श्यावश्च प्रत्वसश्चैव ववल्गुश्चाथ गह्वरः ॥ ७७ ॥ आत्रेयाणां च चत्वारः स्मृताः पक्षा महात्मनाम् ॥ काश्यपो नारदश्चैव पर्वतोरुंधतस्तथा ॥ ७८ ॥ जज्ञिरे मानसा ह्येते अरुंधत्या निबोधत ॥ नारदस्तु वसिष्ठायारुंधतीं प्रत्यपादयत् ॥ ७९ ॥ ऊर्ध्वरेता महातेजा दक्षशापात्तु नारदः ॥ पुरा देवासुरे युद्धे घोरे वै तारकामये ॥ ८० ॥ अना वृष्ट्या हते लोके ह्युग्रे लोकेश्वरैः सह ॥ वसिष्ठस्तपसा धीमान्धारयामास वै प्रजाः ॥८१॥ अन्नोदकं मूलफलं ओषधीश्च प्रवर्तयन् ॥ताननेताञ्जी वयामास कारुण्यादौषधेन च ॥८२॥ अरुंधत्यां वसिष्ठस्तु सुतानुत्पादयच्छतम् ॥ ज्यायसो जनयच्छक्तेरदृश्यंती पराशरम् ॥८३॥ रक्षसा भक्षिते शक्तौ रुधिरेण तु वै तदा ॥ काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम् ॥ ८४ ॥ द्वैपायनो ह्यरण्यां वै शुकमुत्पादयत्सुतम् ॥ उपमन्युं च पीवर्यां विद्धीमे शुकसूनवः ॥ ८५ ॥ भूरिश्रवाः प्रभुः शंभुः कृष्णो गौरस्तु पंचमः ॥ कन्या कीर्तिमती चैव योगमाता धृतव्रता ॥ ८६ ॥ जननी ब्रह्मदत्त स्य पत्नी सा त्वनुहस्य च ॥ श्वेतः कृष्णश्च गौरश्च श्यामो धूम्रस्तथारुणः ॥ ८७ ॥ नीलो बादरिकश्चैव सर्वे चैते पराशराः ॥ पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ॥ ८८ ॥ अत ऊर्ध्वं निबोधध्वमिंद्रप्रमितिसंभवम् ॥ वसिष्ठस्य कपिंजल्यो घृताच्यामुदपद्यत ॥ ८९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

[illegible] ज्यायसः श्रेष्ठस्य शक्तेः । अदृश्यंती पराशरमजनयदित्यन्वयः ॥ ८३ ॥ ८४ ॥ द्वैपायनो व्यासः अरण्यां शुकमुपमन्युं च सुतमुत्पादयदित्यन्वयः ॥ ८५॥८६॥८७॥८८॥ वसिष्ठस्य वसिष्ठादित्यर्थः घृताच्यां तन्नामकाप्सरसि कपिंजल्यः [illegible] त्यनेन तस्या अपि श्रैष्ठ्यं सूचितम् ॥ ७९ ॥ दक्षशापात्तु प्रव्राजनकथनं [illegible]

आत्मत्रयं विश्वप्राज्ञतैजसरूपं तस्मिन्नु पविशति तुरीयरूपेण तिष्ठतीति तस्मै विद्यानां तत्त्वं मुख्यकारणं 'ईशानः सर्वविद्यानाम्' इति श्रुतेः ॥ २३ ॥ शिवाय शिवशब्दार्थं उक्तो ऽहोबलरुद्रभाष्ये–'शिवो निष्कल्मषो यद्वा सच्चिदानंदलक्षणः॥यद्वा निर्ममको यद्वा कल्याणात्मेति मन्महे' इति।अघोराष्टकं भैरवाष्टकं तस्य तत्त्वं कारणं द्वादशात्मा सूर्यः स्वरूपम स्यास्ति तस्मै॥२४॥अष्टसु पृथिव्यादिषु काशते तदष्टकाशम्॥२५॥अंबिका ब्रह्मविद्यारूपा उमा अर्धशरीरं यस्यास्तीति तस्मै धवलश्यामरक्तानां रुद्रविष्णुब्रह्मणाम् ॥ २६॥ २७ ॥ मध्ये हृत्पुंडरीकमध्ये गगनवदवृत्तिरूपं यस्य अष्टक्षेत्रेषु अर्कादिस्थानेषु अष्टौ रुद्रादिरूपाणि यस्य अष्टतत्त्वाय पृथिव्यादिकारणायेत्यर्थः॥२८॥चतुर्धा चतुर्वेदरूपेण चतुर्धा चतुराश्रम रूपेण चतुर्धा चतुर्व्यूहरूपेण च संस्थितोऽवस्थित इत्यर्थः। पंचधा गगनादिपंचभूतप्रकारेण पंचधा सद्योजातादिरूपेण संस्थितायेत्यनुषंगः पंचमंत्रात्मकं सद्योजातादिरूपं शरीरं

शिवाय शिवतत्त्वाय अघोराय नमोनमः ॥ अघोराष्टकतत्त्वाय द्वादशात्मस्वरूपिणे ॥ २४ ॥ विद्युत्कोटिप्रतीकाशमष्टकाशं सुशोभनम् ॥ रूपमास्थाय लोकेऽस्मिन् संस्थिताय शिवात्मने ॥२५॥ अग्निवर्णाय रौद्राय अंबिकार्धशरीरिणे ॥ धवलश्यामरक्तानां मुक्तिदायामराय च ॥२६॥ ज्येष्ठाय रुद्ररूपाय सोमाय वरदाय च ॥ त्रिलोकाय त्रिदेवाय वषट्काराय वै नमः ॥ २७ ॥ मध्ये गगनरूपाय गगनस्थाय ते नमः ॥ अष्टक्षेत्राष्टरूपाय अष्टतत्त्वाय ते नमः ॥ २८ ॥ चतुर्धा च चतुर्धा च चतुर्धा संस्थिताय च ॥ पंचधा पंचधा चैव पंचमंत्रशरीरिणे ॥ २९ ॥ चतुः षष्टिप्रकाराय अकाराय नमोनमः ॥ द्वात्रिंशत्तत्त्वरूपाय उकाराय नमोनमः ॥ ३० ॥ षोडशात्मस्वरूपाय मकाराय नमोनमः ॥ अष्टधात्म स्वरूपाय अर्धमात्रात्मने नमः ॥ ३१ ॥ ओंकाराय नमस्तुभ्यं चतुर्धा संस्थिताय च ॥ गगनेशाय देवाय स्वर्गेशाय नमोनमः ॥ ३२ ॥ सप्तलो काय पातालनरकेशाय वै नमः ॥ अष्टक्षेत्राष्टरूपाय परात्परतराय च ॥ ३३ ॥ सहस्रशिरसे तुभ्यं सहस्राय च ते नमः ॥ सहस्रपादयुक्ताय शर्वाय परमेष्ठिने ॥ ३४ ॥ नवात्मतत्त्वरूपाय नवाष्टात्मात्मशक्तये ॥ पुनरष्टप्रकाशाय तथाष्टाष्टकमूर्तये ॥ ३५ ॥

यस्यास्तीति पंचमंत्रशरीरी ॥२९ ॥ चतुःषष्टिप्रकाराय तत्संख्याकशिक्षोक्तवर्णरूपाय अकाराय अकाररूपायेत्यर्थः। द्वात्रिंशत्तत्त्वरूपाय तत्संख्याकमातृकारूपाय उकाराय उकारस्व रूपायेत्यर्थः ॥ ३० ॥ षोडशं षोडशाऽऽत्मरूपं वा षोडशतत्त्वरूपं यदात्मरूपं तस्मै मकाराय मकारस्वरूपायेत्यर्थः ॥ ३१ ॥ चतुर्धा पूर्वोक्तअकारोकारमकारार्धमात्रात्मकनादरूपचतुः प्रकारेण संस्थिताय ॐकाराय प्रणवरूपायेत्यर्थः॥३२॥अष्टक्षेत्राणि पृथिव्यादीनि अष्टरूपाणि स्वरूपाणि यस्य तस्मै परात्परतरः सर्वोत्कृष्टस्तदुक्तं भगवद्गीतायां–"इंद्रियाणि पराण्या हुरिंद्रियेभ्यः परं मनः ॥ मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः" इति ॥ ३३ ॥ ३४ ॥ नव तत्संख्याकानि यान्यात्मतत्त्वानि तद्रूपस्तस्मै तदुक्तं भागवते–"पुरुषः प्रकृतिर्व्यक्त महंकारो नभोऽनिलः ॥ ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि ते नव" इति। नवाष्टमतदशतत्त्वरूपाः आत्मशक्तयो यस्य तस्मै अष्टसु उरःप्रभृतिस्थानेषु प्रकाशयति वर्णानभिव्यंजय तीति अष्टप्रकाशस्तस्मै अष्टाष्टकाश्चतुःषष्टिवर्णरूपाः मूर्तयो यस्य तस्मै ॥ ३५ ॥ चतुःषष्टिस्तत्संख्याकयोगिनीनामात्मतत्त्वः प्राणतत्त्वरूपस्तस्मै अष्टविधाय भवाद्यष्टसंज्ञकायेत्यर्थः। गुणाष्टकेन वृतो युक्तस्तदुक्तं न्यायमुक्तावल्यां–"संख्यादिकाः पंच बुद्धिरिच्छायत्नोऽपि चेश्वरः" इति। गुणी सर्गादिकाले गुणत्रयविशिष्टस्तस्मै निर्गताः गुणाः यस्मादसौ निर्गुणः गुणकारणं वा वस्तुतो गुणशून्यः ॥ ३६ ॥ मूले मूलाधारचक्रे तिष्ठतीति मूलस्थः शाश्वतस्थानं तदुपरि मेंढ्रस्थानं तत्र वसति तच्छीलस्तस्मै हृदि निःस्वनं प्राणवायुस्वनं करोति

चतुःषष्ट्यात्मतत्त्वाय पुनरष्टविधाय ते ॥ गुणाष्टकवृतायैव गुणिने निर्गुणाय ते ॥ ३६ ॥ मूलस्थाय नमस्तुभ्यं शाश्वतस्थानवासिने ॥ नाभिमं डलसंस्थाय हृदि निःस्वनकारिणे ॥ ३७ ॥ कंधरे च स्थितायैव तालुरंध्रस्थिताय च ॥ भ्रूमध्ये संस्थितायैव नादमध्ये स्थिताय च ॥ ३८ ॥ चंद्रबिंबस्थितायैव शिवाय शिवरूपिणे ॥ वह्निसोमार्करूपाय षट्त्रिंशच्छक्तिरूपिणे ॥ ३९ ॥ त्रिधा संवृत्य लोकान्वै प्रसुप्तभुजगात्मने ॥ त्रिप्रकारं स्थितायैव त्रेताग्निमयरूपिणे ॥ ४० ॥ सदाशिवाय शांताय महेशाय पिनाकिने ॥ सर्वज्ञाय शरण्याय सद्योजाताय वै नमः ॥ ४१ ॥ अघोराय नमस्तुभ्यं वामदेवाय ते नमः ॥ तत्पुरुषाय नमोस्तु ईशानाय नमोनमः ॥४२॥ नमस्त्रिंशत्प्रकाशाय शांतातीताय वै नमः ॥ अनंते शाय सूक्ष्माय उत्तमाय नमोस्तु ते ॥ ४३ ॥ एकाक्षाय नमस्तुभ्यमेकरुद्राय ते नमः ॥ नमस्त्रिमूर्तये तुभ्यं श्रीकंठाय शिखंडिने ॥ ४४ ॥ अनं तासनसंस्थाय अनंतायांतकारिणे ॥ विमलाय विशालाय विमलांगाय ते नमः ॥ ४५ ॥ विमलासनसंस्थाय विमलार्थार्थरूपिणे ॥ योगपी ठांतरस्थाय योगिने योगदायिने ॥४६॥ योगिनां हृदि संस्थाय सदा नीवारशूकवत् ॥ प्रत्याहाराय ते नित्यं प्रत्याहाररताय ते ॥ ४७ ॥ प्रत्या हाररतानां च प्रतिस्थानास्थिताय च ॥ धारणायै नमस्तुभ्यं धारणाभिरताय ते ॥ ४८ ॥ धारणाभ्यासयुक्तानां पुरस्तात्संस्थिताय च ॥ ध्यानाय ध्यानरूपाय ध्यानगम्याय ते नमः ॥ ४९ ॥ ध्येयाय ध्येयगम्याय ध्येयध्यानाय ते नमः ॥ ध्येयानामपि ध्येयाय नमो ध्येयतमाय ते ॥५०॥

तच्छीलः ॥ ३७ ॥ कंधरे ग्रीवायाम् इत्यर्थः ॥ ३८ ॥ ३९ ॥ त्रिधा त्रिप्रकारकसत्त्वादिगुणैर्लोकान्वै संवृत्य संवेष्ट्य प्रसुप्तभुजगात्मने कुंडलिनीरूपायेत्यर्थः। त्रिप्रकारं गार्हप त्याहवनीयदक्षिणाग्निरूपेण स्थितायात एव त्रेताग्निमयरूप यस्यास्तीति तस्मै ॥४० ॥ ४१ ॥ ४२ ॥ त्रिंशत्तत्संख्याकऋतुष्वपि प्रकाशो यस्य स त्रिंशत्प्रकाशः सर्वदा प्रकाशमान इत्यर्थः ॥ ४३ ॥ एकं ज्ञानरूपमक्षं ज्ञानसाधनं यस्य स एकाक्षः एकोऽद्वितीयः रुद्रो नीललोहितरूपस्तस्मै ॥ ४४ ॥ ४५ ॥ ४६ ॥ नीवारशूकवदरण्यशालिसूक्ष्माग्रवदतिसूक्ष्म रूपेण योगिनां हृदि संस्थाय प्रकाशमानायेत्यर्थः। तथा च श्रुतिः–"नीवारशूकवत्तन्वी" इति ॥४७॥४८॥४९॥ ध्येयं ध्यातुमर्हं ध्यानं यस्य स ध्येयध्यानः ध्येयानां ब्रह्मविष्ण्वादी नामपि ध्येयो ध्यातुं योग्यः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ विभो हे व्यापक पुरत्रयं जगत्त्रयं चैव निरीक्षणादेव दग्धुं समर्थ इति शेषः। असि च परमेविकया देव्या सह लीलालसेन निरीक्षणादेव पुरत्रयमस्याप्यनुषंगः क्षणेन दग्धं किल अथ सोमादिप्रार्थनानंतरं तदा दाहकाले इषुश्च मुक्त इत्यन्वयः ॥ ५४ ॥ ५५ ॥ अतोऽप्यं सर्वैरपि तोषयितुम शक्यं कथं तोष्ये "यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति श्रुतेः ॥ ५६ ॥ त्वमनंतपादः अनंतबाहुः अनंतमूर्धा अंतकरः संहारकारकश्चेदृशं हि पुनः अनंतमूर्तिरनंतशरीरः शिवः सुखरूप ईदृशमतोऽप्यं तोषयितुमशक्यं त्वां कथंकथं स्तोष्ये केनकेनापि प्रकारेण तोषयितुमसमर्थ इत्यर्थः ॥ ५७ ॥ सुसूक्ष्मसूक्ष्मसूक्ष्माय निरवधिकसूक्ष्मरूपायेत्यर्थः।

समाधानाभिगम्याय समाधानाय ते नमः ॥ समाधानरतानां तु निर्विकल्पार्थरूपिणे ॥ ५१ ॥ दग्ध्वोद्धृतं सर्वमिदं त्वयाद्य जगत्त्र यं रुद्र पुरत्रयं हि ॥ कस्तोतुमिच्छेत्कथमीदृशं त्वां स्तोष्येह तुष्टाय शिवाय तुभ्यम् ॥५२॥ भक्त्या च तुष्टयाद्भुतदर्शनाच्च मर्त्या अमर्त्या अपि देवदेव ॥एते गणाः सिद्धगणैः प्रणामं कुर्वंति देवेश गणेश तुभ्यम्॥५३॥निरीक्षणादेव विभोसिदग्धुं पुरत्रयं चैव जगत्त्रयं च॥लीलालसेनांविकया क्षणेन दग्धं किलेषुश्च तदाथ मुक्तः॥५४॥कृतो रथश्चेषुवरश्च शुभ्रं शरासनं ते त्रिपुरक्षयाय॥अनेकयत्नैश्च मयाथ तुभ्यं फलं न दृष्टं सुरसिद्धसंघैः ॥५५॥ रथो रथी देववरो हरिश्च रुद्रः स्वयं शक्रपितामहो चा॥त्वमेव सर्वं भगवन् कथं तु स्तोष्ये ह्यतोऽप्यं प्रणिपत्य मूर्ध्ना॥५६॥अनंतपादस्त्वमनं तबाहुरनंतमूर्धांतकरः शिवश्च ॥ अनंतमूर्तिः कथमीदृशं त्वां तोष्ये ह्यतोऽप्यं कथमीदृशं त्वाम् ॥ ५७ ॥ नमोनमः सर्वविदे शिवाय रुद्रा य शर्वाय भवाय तुभ्यम्॥स्थूलाय सूक्ष्माय सुसूक्ष्मसूक्ष्मसूक्ष्माय सूक्ष्मार्थविदे विधात्रे ॥५८॥ स्रष्ट्रे नमः सर्वसुरासुराणां भर्त्रे च हर्त्रे जगतां वि धात्रे ॥ नेत्रे सुराणामसुरेश्वराणां दात्रे प्रशास्त्रे मम सर्वशास्त्रे ॥ ५९ ॥ वेदांतवेद्याय सुनिर्मलाय वेदार्थविद्भिः सततं स्तुताय ॥ वेदात्म रूपाय भवाय तुभ्यमंताय मध्याय सुमध्यमाय ॥ ६० आद्यंतशून्याय च संस्थिताय तथा त्वशून्याय च लिंगिने च ॥ अलिंगिने लिंग मयाय तुभ्यं लिंगाय वेदादिमयाय साक्षात् ॥ ६१ ॥ रुद्राय मूर्धानिकृंतनाय ममादिदेवस्य च यज्ञमूर्तेः ॥ विध्वांतभंगं मम कर्तुमीशः दृष्ट्वैव भूमौ करजाग्रकोट्या ॥ ६२ ॥

तदुक्तं शिवगीतायाम्–"वालाग्रशतभागस्य शतधाकल्पितस्य च ॥ भागो जीवः स विज्ञेयः स चानंत्याय कल्पते" इति ॥ ५८ ॥ ५९ ॥ ६० ॥ तथा त्वशून्याय शून्यत्वशून्याय सत्यरूपायेत्यर्थः लिंगिने चित्ररूपविशिष्टायेत्यर्थः। अलिंगिने चिह्नशून्याय लिंगमयाय लिंगरूपाय साक्षाद्वेदादिमयाय प्रणवरूपायेत्यर्थः ॥ ६१ ॥ मम आदि देवस्य कारणस्य यज्ञमूर्तेर्विष्णोर्मम ब्रह्मणश्च विध्वांतभंगं निविडाज्ञानभंगं कर्तुं भूमौ अपराधस्थाने दृष्ट्वैव करजाग्रकोट्या हस्तनखाग्रभागेन मूर्धानिकृंतनाय मस्तकच्छेदकाय

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

न्यर्थः । तत्र यज्ञमस्तकच्छेदनं दक्षयज्ञे ब्रह्मशिरःकृंतनं कालभैरवरूपेण काशीखंडे उक्तम् ॥ ६२ ॥ निर्गुणरूपं तत्त्व मुख्यं यस्य तत्संबुद्धौ निर्गुणरूपतत्त्व ॥ ६३ ॥ अष्टमूर्तिरूपेण स्तौति एकमिति । अत्र ब्रह्मांडे ते तत्त्वम एकं स्थूलं पृथिवीरूपं एकं सूक्ष्मं जलरूपं सुसूक्ष्मं वह्निरूपं तस्य ब्रह्मांडादावपि प्रवेशात् मूर्तत्वममहत्परिमाणवत्त्वममूर्तत्वं महत्परिमाणवत्त्वमेतदुभयाश्रयं मूर्तामूर्तं क्षयवृद्धयाश्रयत्वात्सोमरूपम् । एकं मूर्तं सूर्यरूपम् अमूर्तं वायुरूपं तस्य व्यापकत्वान्महत्परिमाणं ज्ञेयम् एकं वाङ्मयं दृष्टं शब्दगुणेनैव ज्ञातं गगनरूप

अहो विचित्रं तव देवदेव विचेष्टितं सर्वसुरासुरेश॥देहीव देवैः सह देवकार्यं करिष्यसे निर्गुणरूपतत्त्व॥६३॥एकं स्थूलं सूक्ष्ममेकं सुसूक्ष्मं मूर्तामूर्तं मूर्तमेकं ह्यमूर्तम्॥एकं दृष्टं वाङ्मयं चैकमीशं ध्येयं चकं तत्त्वमत्राद्भुतं ते॥६४॥स्वप्ने दृष्टं यत्पदार्थं ह्यलक्षं दृष्टं नूनं भाति मन्येन चापि॥मूर्तिर्नो वै देवमीशानदेवैर्लक्ष्या यत्नैरप्यलक्ष्यं कथं तु ॥ ६५ ॥ दिव्यः क्व देवेश भवत्प्रभावो वयं क्व भक्तिः क्व च ते स्तुतिश्च ॥ तथापि भक्त्या विलपं तमीश पितामहं मांभगवन्क्षमस्व ॥ ६६ ॥ सूत उवाच ॥ य इमं शृणुयाद्द्विजोत्तमा भुवि देवं प्रणिपत्य वा पठेत् ॥ स च मुंचति पापबंधनं भवभक्त्या पुरशासितुस्तवम् ॥ ६७ ॥ श्रुत्वा च भक्त्या चतुराननेन स्तुतो हसन्शैलसुतां निरीक्ष्य ॥ स्तवं तदा प्राह महानुभावं महाभुजो मंदरशृंगवासी ॥ ६८ ॥ शिव उवाच ॥ स्तवेनानेन तुष्टोऽस्मि तव भक्त्या च पद्मज ॥ वरान् वरय भद्रं ते देवानां च यथेप्सितान् ॥ ६९ ॥ सूत उवाच ॥ ततः प्रणम्य देवेशं भगवान्पद्मसंभवः ॥ कृतांजलिपुटो भूत्वा प्राहेदं प्रीतमानसः ॥ ७० ॥ श्रीपितामह उवाच ॥ भगवन्देवदेवेश त्रिपुरांतक शंकर ॥ त्वयि भक्ति परां मेद्य प्रसीद परमेश्वर ॥ ७१ ॥ देवानां चैव सर्वेषां त्वयि सर्वार्थदेश्वर ॥ प्रसीद भक्तियोगेन सारथ्येन च सर्वदा ॥ ७२ ॥ जनार्दनोपि भगवान्नमस्कृत्य महेश्वरम् ॥ कृतांजलिपुटो भूत्वा प्राह सांबं त्रियंबकम् ॥ ७३ ॥ वाहनत्वं तवेशान नित्यमीहे प्रसीद मे ॥ त्वयि भक्तिं च देवेश देवदेव नमोस्तु ते ॥ ७४ ॥ सामर्थ्यं च सदा मह्यं भवंतं वोढुमीश्वरम् ॥ सर्वज्ञत्वं च वरद सर्वगत्वं च शंकर ॥ ७५ ॥ सूत उवाच ॥ तयोः श्रुत्वा महादेवो विज्ञप्तिं परमेश्वरः ॥ सारथ्ये वाहनत्वे च कल्पयामास वै भवः ॥ ७६ ॥ दत्त्वा तस्मै ब्रह्मणे विष्णवे च दग्ध्वा दैत्यान्देवदेवो महात्मा ॥ सार्धं देव्या नंदिना भूतसंघैरंतर्धानं कारयामास शर्वः ॥ ७७ ॥ ततस्तदा महेश्वरे गते रणाद्गणैः सह ॥ सुरेश्वराः सुविस्मिता भवं प्रणम्य पार्वतीम् ॥ ७८ ॥ ययुश्च दुःखवर्जिताः स्ववाहनैर्दिवं ततः ॥ सुरेश्वरा मुनीश्वरा गणेश्वराश्च भास्कराः ॥ ७९ ॥ त्रिपुरारेरिमं पुण्यं निर्मितं ब्रह्मणा पुरा ॥ यः पठेच्छ्राद्धकाले वा दैवे कर्मणि च द्विजाः ॥ १८० ॥

मित्यर्थः । एकं ध्येयं तव ध्यानसमर्थमीशम् । आत्मरूपमद्भुतं चिद्रूपत्वात्सर्वश्रेष्ठमित्यर्थः ॥ ६४ ॥ अदृष्टं श्रुतं दृष्टं च पदार्थं पदार्थजातं स्वप्नेपि नूनं भाति ह्यलक्ष्यमदृष्टाश्रुतं च न मन्ये ईशान हे सांब ते मूर्तिः देवैर्यत्नैर्नोलक्ष्या वै ह्यलक्ष्यं देवं निर्गुणरूपं तु कथं कथमपि नेत्यर्थः ॥ ६५ ॥ स्तुतिं समापयति–दिव्यमिति ॥ ६६ ॥ सूतो ब्रह्मस्तुतिफलं कथयति य इति ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ तव वाहनत्वं वृषभादिरूपेण वाहकत्वं नित्यमीहे सततमिच्छामीत्यर्थः ॥७४॥७५॥७६॥७७॥७८॥७९॥ एतदध्यायफलं कथयति त्रिपुरारेरिममित्यादिना ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ लभेत् प्राप्नुयादित्यर्थः ॥ १८४ ॥ "दृष्ट्वैव दाहात्रिपुरस्य शंभो संस्थापिता देवगणा हि नाके ॥ तथैव कामादिपुरत्रयं त्वं दग्ध्वा विभो मां कुरु पार्श्वसंस्थम् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां त्रिपुरदाहे ब्रह्मस्तवो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ त्रिसप्ततितमेऽध्याये देवेभ्यो ब्रह्मणोदितः ॥ लिंगार्चनविधिः सम्यक् सफलश्च निरूप्यते ॥ १ ॥" सूतस्त्रिपुरदाहानंतरकथां वर्णयति गत इत्यादिना ॥ १ ॥ २ ॥

श्रावयेद्वा द्विजान् भक्त्या ब्रह्मलोकं स गच्छति ॥ मानसैर्वाचिकैः पापैस्तथा वै कायिकैः पुनः ॥ ८१ ॥ स्थूलैः सूक्ष्मैः सुसूक्ष्मैश्च महापातकसंभवैः ॥ पातकैश्च द्विजश्रेष्ठा उपपातकसंभवैः ॥ ८२ ॥ पापैश्च मुच्यते जंतुः श्रुत्वाऽध्यायमिमं शुभम् ॥ शत्रवो नाशमायांति संग्रामे विजयी भवेत् ॥ ८३ ॥ सर्वरोगैर्न बाध्येत आपदो न स्पृशंति तम् ॥ धनमायुर्यशो विद्यां प्रभावमतुलं लभेत् ॥१८४॥ इति श्रीलिंगमहापुराणे पूर्वभागे त्रिपुरदाहे ब्रह्मस्तवो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ सूत उवाच ॥ गते महेश्वरे देवे दग्ध्वा च त्रिपुरं क्षणात् ॥ सदस्याह सुरेंद्राणां भगवान्पद्मसंभवः ॥ १ ॥ पितामह उवाच ॥ संत्यज्य देवदेवेशं लिंगमूर्तिं महेश्वरम् ॥ तारपौत्रो महातेजास्तारकस्य सुतो बली ॥ २ ॥ तारकाक्षोपि दितिजः कमलाक्षश्च वीर्यवान् ॥ विद्युन्माली च दैत्येशः अन्ये चापि सबांधवाः ॥ ३ ॥ त्यक्त्वा देवं महादेवं मायया च हरेः प्रभोः ॥ सर्वे विनष्टाः प्रध्वस्ताः स्वपुरैः पुरसंभवैः ॥ ४ ॥ तस्मात्सदा पूजनीयो लिंगमूर्तिः सदाशिवः ॥ यावत्पूजा सुरेशानां तावदेव स्थितिर्यतः ॥ ५ ॥ पूजनीयः शिवो नित्यं श्रद्धया देवपुंगवैः ॥ सर्वलिंगमयो लोकः सर्वं लिंगे प्रतिष्ठितम् ॥ ६ ॥ तस्मात्संपूजयेल्लिंगं य इच्छेत्सिद्धिमात्मनः ॥ सर्वे लिंगार्चनादेव देवा दैत्याश्च दानवाः ॥७॥ यक्षा विद्याधराः सिद्धा राक्षसाः पिशिताशनाः ॥ पितरो मुनयश्चापि पिशाचाः किन्नरादयः ॥ ८ ॥ अर्चयित्वा लिंगमूर्तिं संसिद्धा नात्र संशयः ॥ तस्माल्लिंगं यजेन्नित्यं येन केनापि वा सुराः ॥ ९ ॥ पशवश्च वयं तस्य देवदेवस्य धीमतः ॥ पशुत्वं च परित्यज्य कृत्वा पाशुपतं ततः ॥१०॥ पूजनीयो महादेवो लिंगमूर्तिः सनातनः ॥ विशोध्य चैव भूतानि पंचभिः प्रणवैः समम् ॥११॥ प्राणायामैः समायुक्तः पंचभिः सुरपुंगवाः ॥ चतुर्भिः प्रणवैश्चैव प्राणायामपरायणैः ॥ १२ ॥ त्रिभिश्च प्रणवैर्देवाः प्राणायामैस्तथाविधैः ॥ द्विधा न्यस्य तथोंकारं प्राणायामपरायणः ॥ १३ ॥ ततश्चोंकारमुच्चार्य प्राणापानौ नियम्य च ॥ ज्ञानामृतेन सर्वांगान्यापूर्य प्रणवेन च ॥ १४ ॥

दैत्येशः अन्य इत्यत्र पूर्वरूपाभावश्छांदसः ॥ ३ ॥ ४ ॥ ५ ॥ सर्वस्य शिवस्य लिंगमयः लिंगप्रचुरः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ पाशुपतं पशुपतिप्रोक्तं व्रतं कृत्वा ततो व्रतप्रभावात्पशुत्वं परित्यज्य महादेवः पूजनीय इत्यग्रिमेणान्वयः ॥ १० ॥ व्रतप्रकारं कथयति विशोध्येत्यादिना । पंचभूतानि गगनादीनि पंचभिः प्रणवैः समं समायुक्तैः प्राणायामैर्विशोध्येत्यग्रिमश्लोकैरन्वयः ॥ ११ ॥ प्राणायामः परमयनं स्थानं येषां ते प्राणायामपरायणास्तैश्चतुर्भिः प्रणवैरित्यन्वयः ॥ १२ ॥ त्रिभिः प्रणवैस्तथाविधैः प्राणायामैः प्रणवयुक्तैरित्यर्थः । प्राणायामपरायणस्तत्परः तथा प्राणायामेनोंकारं द्विधा न्यस्येत्यन्वयः ॥ १३ ॥ ततः पूर्वोक्तप्राणायामानंतरं प्राणापानौ नियम्योंकारमुच्चार्य ज्ञानामृतेन प्रणवेन च सर्वांगान्यापूरयेदित्यन्वयः ॥ १४ ॥ चतुर्धा मनोबुद्ध्यहंकारचित्तरूपचतुःप्रकारेणाख्यायते स चतुर्धाख्यस्तम् ॥ १५ ॥ पुरुषं विश्वं युगलं तैजसप्राज्ञद्वयमित्यर्थः । चिदात्मानं तनुं कृत्वा चैतन्यरूपां तनुं भावयित्वा अग्निरित्यादिमंत्रैर्भस्म संस्पृशेदित्यन्वयः ॥ १६ ॥ त्रियायुषं जमदग्नेरित्यादिमंत्रैः ॥ १७ ॥ भवेन पाशमोक्षार्थं त्विदं पाशुपतं व्रतं कथितमित्यन्वयः ॥ १८ ॥ एवं पूर्वोक्तप्रकारं पाशुपतं पशुपतिप्रोक्तं व्रतं कृत्वा मया ब्रह्मणा महात्मना विष्णुना च पुरा प्रथमतः दृष्टे लिंगे लिंगाकृतौ परमेश्वरं शिवं संपूज्य वर्षमात्रेण पशवो नैव जायंत इत्यग्रिमेणान्वयः ॥ १९ ॥ अस्माभिः ब्रह्मविष्णुरुद्रैः सह बाह्ये चाभ्यंतरे चैव ईश्वरं शिवमभ्यर्च्य सर्वकार्याणां कर्तव्यं कर्तुयोग्यतेत्यर्थः । मन्य इत्यग्रिमेणान्वयः

गुणत्रयं चतुर्धाख्यमहंकारं च सुव्रताः ॥ तन्मात्राणि च भूतानि तथा बुद्धींद्रियाणि च ॥ १५ ॥ कर्मेंद्रियाणि संशोध्य पुरुषं युगुलं तथा ॥ चिदात्मानं तनुं कृत्वा चाग्निर्भस्मेति संस्पृशेत्॥१६॥वायुर्भस्मेति च व्योम तथांभो पृथिवी तथा ॥ त्रियायुषं त्रिसंध्यं च धूलयेद्भसितेन यः॥१७॥ स योगी सर्वतत्त्वज्ञो व्रतं पाशुपतं त्विदम् ॥ भवेन पाशमोक्षार्थं कथितं देवसत्तमाः ॥ १८ ॥ एवं पाशुपतं कृत्वा संपूज्य परमेश्वरम् ॥ लिंगे पुरा मया दृष्टे विष्णुना च महात्मना ॥ १९ ॥ पशवो नैव जायंते वर्षमात्रेण देवताः ॥ अस्माभिः सर्वकार्याणां देवमभ्यर्च्य यत्नतः ॥ २० ॥ बाह्ये चास्यांतरे चैव मन्ये कर्तव्यमीश्वरम् ॥ प्रतिज्ञा मम विष्णोश्च दिव्यैषा सुरसत्तमाः ॥ २१ ॥ मुनीनां च न संदेहस्तस्मात्संपूजयेच्छिवम् ॥ सा हानिस्तन्महच्छिद्रं स मोहः सा च मूकता ॥ २२ ॥ यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिंतयेत् ॥ भवभक्तिपरा ये च भवप्रणतचेतसः ॥ २३ ॥ भवसंस्मरणोद्युक्ता न ते दुःखस्य भाजनम् ॥ भवनानि मनोज्ञानि दिव्यमाभरणं स्त्रियः ॥ २४ ॥ धनं वा तुष्टिपर्यंतं शिवपूजाविधेः फलम् ॥ ये वांछंति महाभोगान् राज्यं च त्रिदशालये ॥ तेऽर्चयंतु सदा कालं लिंगमूर्तिं महेश्वरम्॥२५॥हत्वा भित्त्वा च भूतानि दग्ध्वा सर्वमिदं जगत् ॥ २६ ॥ यजेदेकं विरूपाक्षं न पापैः स प्रलिप्यते ॥ शैलं लिंगं मदीयं हि सर्वदेवनमस्कृतम् ॥ २७ ॥ इत्युक्त्वा पूर्वमभ्यर्च्य रुद्रं त्रिभुवनेश्वरम् ॥ तुष्टाव वाग्भिरिष्टाभिर्देवदेवं त्रियंबकम् ॥ २८ ॥ तदाप्रभृति शक्राद्याः पूजयामासुरीश्वरम् ॥ साक्षात्पाशुपतं कृत्वा भस्मोद्धूलितविग्रहाः ॥ २९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे ब्रह्मप्रोक्तलिंगार्चनविधिर्नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

॥ २० ॥ एषा पूर्वोक्ता मम विष्णोर्मुनीनां च दिव्या प्रतिज्ञा संदेहो न तस्माच्छिवं संपूजयेदित्यग्रिमेणान्वयः ॥ २१ ॥ शिवचिंतनरहितक्षणादिदोषान्कथयति सा हानिरिति ॥ २२ ॥ शिवभक्त्यादिमाहात्म्यं कथयति भव इत्यादिना ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ शैलं शिलामयमित्यर्थः ॥ २७ ॥ २८ ॥ तदाप्रभृति ब्रह्मोपदेशमारभ्येत्यर्थः ॥ २९ ॥ "श्रीब्रह्मप्रोक्ता वै सम्यग्विधिना महेश ते सांब ॥ पाशुपतव्रतयुक्ता लिंगार्चा मे सदा भूयात् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां ब्रह्मप्रोक्तलिंगार्चनविधिर्नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

"चतुःसप्ततिकेऽध्याये देवलिंगानि च पृथक् ॥ लिंगभेदा निरूप्यंते लिंगसंस्थापनात्फलम् ॥ १ ॥" सूतः देवानां पृथग्लिंगानि कथयति लिंगानीत्यादिना ॥ १ ॥ २ ॥ कांतिकं रंगमयं वा चंद्रकांतमयमित्यर्थः । आरकूटमयं पैत्तलम् ॥ ३ ॥ ४ ॥ ५ ॥ त्रैलोहिकं त्रिविधलोहमयम् ॥ ६ ॥ ७ ॥ लक्ष्मीवृक्षमयं बिल्ववृक्षमयमित्यर्थः ॥ ८ ॥ गंधलिंगं सुगंधद्रव्य

सूत उवाच ॥ लिंगानि कल्पयित्वैवं स्वाधिकारानुरूपतः ॥ विश्वकर्मा ददौ तेषां नियोगाद्ब्रह्मणः प्रभोः ॥ १ ॥ इंद्रनीलमयं लिंगं विष्णुना पूजितं सदा ॥ पद्मरागमयं शक्रो हैमं विश्रवसः सुतः ॥ २ ॥ विश्वेदेवास्तथा रौप्यं वसवः कांतिकं शुभम् ॥ आरकूटमयं वायुरश्विनौ पार्थिवं सदा ॥ ३ ॥ स्फाटिकं वरुणो राजा आदित्यास्ताम्रनिर्मितम् ॥ मौक्तिकं सोमराट् धीमांस्तथा लिंगमनुत्तमम् ॥ ४ ॥ अनंताद्या महानागाः प्रवालकमयं शुभम् ॥ दैत्या ह्ययोमयं लिंगं राक्षसाश्च महात्मनः ॥ ५ ॥ त्रैलोहिकं गुह्यकाश्च सर्वलोहमयं गणाः ॥ चामुंडा सैकतं साक्षान्मातरश्च द्विजोत्तमाः ॥ ६ ॥ दारुजं नैर्ऋतिर्भक्त्या यमो मारकतं शुभम् ॥ नीलाद्याश्च तथा रुद्राः शुद्धं भस्ममयं शुभम् ॥ ७ ॥ लक्ष्मीवृक्षमयं लक्ष्मीर्गुहो वै गोमयात्मकम् ॥ मुनयो मुनिशार्दूलाः कुशाग्रमयमुत्तमम् ॥ ८ ॥ वामाद्याः पुष्पलिंगं तु गंधलिंगं मनोन्मनी ॥ सरस्वती च रत्नेन कृतं रुद्रस्य वाग्भवा ॥ ९ ॥ दुर्गा हैमं महादेवं सवेदिकमनुत्तमम् ॥ उग्रा पिष्टमयं सर्वे मंत्रा ह्याज्यमयं शुभम् ॥ १० ॥ वेदाः सर्वे दधिमयं पिशाचाः सीसनिर्मितम् ॥ लेभिरे च यथायोग्यं प्रसादाद्ब्रह्मणः पदम् ॥ ११ ॥ बहुनात्र किमुक्तेन चराचरमिदं जगत् ॥ शिवलिंगं समभ्यर्च्य स्थितमत्र न संशयः ॥ १२ ॥ षड्विधं लिंगमित्याहुर्द्रव्याणां च प्रभेदतः ॥ तेषां भेदाश्चतुर्युक्तचत्वारिंशदिति स्मृताः ॥ १३ ॥ शैलजं प्रथमं प्रोक्तं तद्धि साक्षाच्चतुर्विधम् ॥ द्वितीयं रत्नजं तच्च सप्तधा मुनिसत्तमाः ॥ १४ ॥ तृतीयं धातुजं लिंगमष्टधा परमेष्ठिनः ॥ तुरीयं दारुजं लिंगं तत्तु षोडशधोच्यते ॥ १५ ॥ मृन्मयं पंचमं लिंगं द्विधा भिन्नं द्विजोत्तमाः ॥ षष्ठं तु क्षणिकं लिंगं सप्तधा परिकीर्तितम् ॥ १६ ॥ श्रीप्रदं रत्नजं लिंगं शैलजं सर्वसिद्धिदम् ॥ धातुजं धनदं साक्षाद्दारुजं भोगसिद्धिदम् ॥ १७ ॥ मृन्मयं चैव विप्रेंद्राः सर्वसिद्धिकरं शुभम् ॥ शैलजं चोत्तमं प्रोक्तं मध्यमं चैव धातुजम् ॥ १८ ॥ बहुधा लिंगभेदाश्च नव चैव समासतः ॥ मूले ब्रह्मा तथा मध्ये विष्णुस्त्रिभुवनेश्वरः ॥ १९ ॥ रुद्रोपरि महादेवः प्रणवाख्यः सदाशिवः ॥ लिंगवेदी महादेवी त्रिगुणा त्रिमयांबिका ॥ २० ॥ तया च पूजयेद्यस्तु देवी देवश्च पूजितौ ॥ शैलजं रत्नजं वापि धातुजं वापि दारुजम् ॥ २१ ॥

लिंगमित्यर्थः ॥ ९ ॥ १० ॥ सर्वे विष्ण्वादयः ब्रह्मप्रसादाद्ब्रह्मणोक्तलिंगार्चनाद्यथायोग्यं पदं लेभिरे इत्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ क्षणिकं रंगवल्यादिनिर्मितम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ रुद्रोपरीति संधिरार्षः त्रिमया ब्रह्मविष्णुरुद्रमया ॥ २० ॥ तया वेद्येत्यर्थः ॥ २१ ॥

भक्त्या आस्थाप्य संपूज्य शुभं फलं भवतीति शेषः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ मृन्मयं क्षणिकमेव त्यक्त्वा सकलं चंद्रकलादिचिह्नयुक्तं वपुः बाणलिंगादि स्थापयेत्सः सुरेंद्रा देवेंद्रः भक्त्या आस्थाप्य संपूज्य शुभं फलं भवतीति शेषः ॥ अंभोजगर्भो ब्रह्मा तदाद्यैःस्तूयमानो देवदुंदुभिनिस्वनैः सह क्रमात्स्वेन तेजसा भूरादिलोकान् समाक्रम्य स्वापत्ताभिना स्वाधीनखड्गेन ब्रह्मांडमुद्भिद्य निःशंकया निर्गच्छेदिति पूर्वं स्यैरन्वयः ॥ २६ ॥ लिंगस्थापकस्योर्ध्वगतिमुक्त्वा जीवतोपि माहात्म्यं कथयति विधिनेत्यादिना ॥ २७ ॥ २८ ॥ २९ ॥ सर्वेषां योगिभिन्नमर्त्यानां विभोः शिवस्य सकलं सगुणं वपुरेव भावनायोग्यं निष्कलं निर्गुणं योगिनां चित्तवृत्तिनिरोधवतामेवेत्यन्वयः ॥ ३० ॥ "महेशलिंगपूजने तथैव सन्निवेशने ॥ सदास्तु सक्तमानसं ममानिशं जगत्पते ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां शिवलिंगभेदसंस्थापनादिवर्णनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ "पंचसप्ततिकेऽध्याये वास्तवो निर्गुणः शिवः ॥ उपा

मृन्मयं क्षणिकं वापि भक्त्या स्थाप्य फलं शुभम् ॥ सुरेंद्रांभोजगर्भाग्नियमांबुपधनेश्वरैः ॥ २२ ॥ सिद्धविद्याधराहींद्रैर्यक्षदानवकिंनरैः ॥ स्तूयमानः सुपुण्यात्मा देवदुंदुभिनिःस्वनैः ॥ २३ ॥ भूर्भुवःस्वर्महर्लोकान्क्रमाद्वै जनतः परम् ॥ तपः सत्यं पराक्रम्य भासयन्स्वेन तेजसा ॥ २४ ॥ लिंगस्थापनसन्मार्गनिहितस्वायतासिना ॥ आशु ब्रह्मांडमुद्भिद्य निर्गच्छेन्निर्विशंकया ॥ २५ ॥ शैलजं रत्नजं वापि धातुजं वापि दारुजम् ॥ मृन्मयं क्षणिकं त्यक्त्वा स्थापयेत्सकलं वपुः ॥ २६ ॥ विधिना चैव कृत्वा तु स्कंदोमासहितं शुभम् ॥ कुंदगोक्षीरसंकाशं लिंगं यः स्थापयेन्नरः ॥ २७ ॥ दर्शनात्स्पर्शनात्तस्य लभंते निर्वृतिं नराः ॥ २८ ॥ तस्य पुण्यं मया वक्तुं सम्यग्युगशतैरपि ॥ शक्यते नैव विप्रेंद्रास्तस्माद्वै स्थापयेत्तथा ॥ २९ ॥ सर्वेषामेव मर्त्यानां विभोर्दिव्यं वपुः शुभम् ॥ सकलं भावनायोग्यं योगिनामेव निष्कलम् ॥ ३० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवलिंगभेदसंस्थापनादिवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ऋषय ऊचुः ॥ निष्कलो निर्मलो नित्यः सकलत्वं कथं गतः ॥ वक्तुमर्हसि चास्माकं यथापूर्वं यथाश्रुतम् ॥ १ ॥ सूत उवाच ॥ परमार्थविदः केचिदूचुः प्रणवरूपिणम् ॥ विज्ञानमिति विप्रेंद्राः श्रुत्वा श्रुतिशिरस्यजम् ॥ २ ॥ शब्दादिविषयं ज्ञानं ज्ञानमित्यभिधीयते ॥ तज्ज्ञानं भ्रांतिरहितमित्यन्ये नेति चापरे ॥ ३ ॥

युतो योगगम्यः षडस्रादौ निरूप्यते ॥ १ ॥" ऋषयः शौनकादयः सूतमपृच्छन्निष्कलेति । नित्योऽक्षरः निर्मलो मायाविकारशून्यः निष्कलो निर्गुणः शिवः सकलत्वं सगुणरूपत्वं कथं गतस्त्वयेति शेषः । पूर्वं यथा श्रुतं तथास्माकं वक्तुमर्हसीत्यन्वयः ॥ १ ॥ सूतः प्रथमतोन्यमतानि प्रदर्श्य गुरुप्रकाशकमित्यनेन व्याससमतमग्रे वक्ष्यन्नाह—परमार्थेत्यादिना । प्रणवरूपिणमोंकाररूपमित्यर्थः । श्रुतिशिरस्सुपनिषद्भागे अजं श्रुत्वा विज्ञानं शास्त्रोपज्ञानरूपमूचुरित्यन्वयः ॥ २ ॥ अन्ये शब्दादिविषयं ज्ञानं ज्ञानमेव ज्ञानमित्यभिधीयते अपरे तत्र भ्रांतिरहितं प्रमात्मकं ज्ञानमूचुरित्यनुषंगः ॥ ३ ॥

व्याससमतं कथयति यदिति । गुरुर्ब्रह्मविदा शिव एव प्रकाशको यस्य तद्गुरुप्रकाशकमित्यर्थः ॥ ४ ॥ उभाभ्यां ज्ञानप्रसादाभ्यां योगी मुच्यते तत्र मुक्तौ आनंदमयः आनंदरूपो भवेदित्यन्वयः । तथा च सूत्रं "आनंदमयोऽभ्यासात्" इति ॥ ५ ॥ ईशेनेति शेषः । स्वेच्छयैव कल्पनाकल्पितं मायाविरचितं रूपं हृदि संहृत्य विचार्य कर्मणा विधिनोदितनिष्काम कर्मणा तस्य ज्ञानस्य संगतिं प्राप्ति केचिन्मुनयो वदंतीत्यन्वयः ॥ ६ ॥ पूर्वोक्तरूपं कथयति द्यौर्मूर्धेत्यादिना । द्यौः स्वर्गः खं क्षेत्ररूपो भूलोकः "खमिंद्रिये सुखे स्वर्गे शून्ये बिंदौ

यज्ज्ञानं निर्मलं शुद्धं निर्विकल्पं निराश्रयम् ॥ गुरुप्रकाशकं ज्ञानमित्यन्ये मुनयो द्विजाः ॥ ४ ॥ ज्ञानेनैव भवेन्मुक्तिः प्रसादो ज्ञानसिद्धये ॥ उभाभ्यां मुच्यते योगी तत्रानंदमयो भवेत् ॥ ५ ॥ वदंति मुनयः केचित्कर्मणा तस्य संगतिम् ॥ कल्पनाकल्पितं रूपं संहृत्य स्वेच्छयैव हि ॥ ६ ॥ द्यौर्मूर्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः ॥ सोमसूर्याग्नयो नेत्रं दिशः श्रोत्रं महात्मनः ॥ ७ ॥ चरणौ चैव पातालं समुद्रस्तस्य चांबरम् ॥ देवास्तस्य भुजाः सर्वे नक्षत्राणि च भूषणम् ॥ ८ ॥ प्रकृतिस्तस्य पत्नी च पुरुषो लिंगमुच्यते ॥ वक्त्राद्वै ब्राह्मणाः सर्वे ब्रह्मा च भगवान्प्रभुः ॥ ९ ॥ इंद्रोपेंद्रौ भुजाभ्यां तु क्षत्रियाश्च महात्मनः ॥ वैश्याश्चोरुप्रदेशात्तु शूद्राः पादात्पिनाकिनः ॥ १० ॥ पुष्करावर्तकाद्यास्तु केशास्तस्य प्रकीर्तिताः ॥ वायवो प्राणजास्तस्य गतिः श्रौतं स्मृतिस्तथा ॥ ११ ॥ अथानेनैव कर्मात्मा प्रकृतेस्तु प्रवर्तकः ॥ पुंसां तु पुरुषः श्रीमान् ज्ञानगम्यो न चान्यथा ॥ १२ ॥ कर्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते ॥ तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते ॥ १३ ॥ जपयज्ञसहस्रेभ्यो ध्यानयज्ञो विशिष्यते ॥ ध्यानयज्ञात्परो नास्ति ध्यानं ज्ञानस्य साधनम् ॥ १४ ॥ यदा समरसे निष्ठो योगी ध्यानेन पश्यति ॥ ध्यानयज्ञरतस्यास्य तदा सन्निहितः शिवः ॥ १५ ॥ नास्ति विज्ञानिनां शौचं प्रायश्चित्तादिचोदना ॥ विशुद्धा विद्यया सर्वे ब्रह्मविद्याविदो जनाः ॥ १६ ॥ नास्ति क्रिया च लोकेषु सुखं दुःखं विचारतः ॥ धर्माधर्मौ जपो होमो ध्यानिनां सन्निधिः सदा ॥ १७ ॥ परानंदात्मकं लिंगं विशुद्धं शिवमक्षरम् ॥ निष्कलं सर्वगं ज्ञेयं योगिनां हृदि संस्थितम् ॥ १८ ॥

विहायसि । पुरे संगे दिने क्षेत्रे' इति विश्वः ॥ ७ ॥ ८ ॥ लिंगं प्रजननमित्यर्थः ॥ ९ ॥ १० ॥ पुष्करावर्तकास्तत्संज्ञकमेघाः श्रौतं श्रुत्युक्तं कर्म स्मृतिः स्मृत्युदितं कर्म ॥ ११ ॥ अथ सर्गादिकाले अनेन पूर्वोक्तेनैव कर्मात्मा कर्मप्रवर्तकः [illegible] इंद्रियप्रत्यक्षाविषय इत्यर्थः ॥ १२ ॥ ॥ १३ ॥ १४ ॥ सन्निहितः प्रत्यक्ष इत्यर्थः ॥ १५ ॥ १६ ॥ ध्यानिनां सदा सन्निधिः शिवसान्निध्यमेव मुख्यमिति शेषः । क्रियादिविचारतः नास्तीत्यन्वयः ॥ १७ ॥ १८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ असतामज्ञानिनां भावनार्थाय स्थूलविग्रहः पार्थिवादिलिंगरूपमन्यथा विचारतो नेत्यन्वयः । निष्कलः सकलश्चेति सर्वं शिवमयं ततः अर्थो मोक्षा स्योपि विचारतः नास्तीत्यन्वयः । तदुक्तं भागवतैकादशस्कंधे "बंधस्य मायामूलत्वान्न मे मोक्षो न बंधनम्" इति ॥ २३ ॥ एकमपि व्योम शरावं प्रति दृष्टं भिन्नं भाति तथा शंकरस्य पृथक्त्वं चापृथक्त्वम् अपरे ऊचुरित्यनुषंगः ॥ २४ ॥ पूर्वोक्तान्यदृष्टांतौ कथयति प्रत्ययार्थमित्यादिना ॥ २५ ॥२६ ॥ २७॥ २८ ॥ एवं स्वप्नवत् बंधमोक्षावप्यन्ये वेदार्थ

लिंगं तु द्विविधं प्राहुर्बाह्यमाभ्यंतरं द्विजाः ॥ बाह्यं स्थूलं मुनिश्रेष्ठाः सूक्ष्ममाभ्यंतरं द्विजाः ॥ १९ ॥ कर्मयज्ञरताः स्थूलाः स्थूललिंगार्चने रताः ॥ असतां भावनार्थाय नान्यथा स्थूलविग्रहः ॥ २० ॥ आध्यात्मिकं च यल्लिंगं प्रत्यक्षं यस्य नो भवेत् ॥ असौ मूढो बहिः सर्वं कल्पयित्वैव नान्यथा ॥ २१ ॥ ज्ञानिनां सूक्ष्मममलं भवेत्प्रत्यक्षमव्ययम् ॥ यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् ॥ २२ ॥ अर्थो विचारतो नास्तीत्यन्ये तत्त्वार्थवेदिनः ॥ निष्कलः सकलश्चेति सर्वं शिवमयं ततः ॥ २३ ॥ व्योमैकमपि दृष्टं हि शरावं प्रति सुव्रताः ॥ पृथक्त्वंचापृथक्त्वं च शंकरस्येति चापरे ॥ २४ ॥ प्रत्ययार्थं हि जगतामेकस्थोपि दिवाकरः ॥ एकोपि बहुधा दृष्टो जलाधारेषु सुव्रताः ॥ २५ ॥ जंतवो दिवि भूमौ च सर्वे वै पांचभौतिकाः ॥ तथापि बहुला दृष्टा जातिव्यक्तिविभेदतः ॥ २६ ॥ दृश्यते श्रूयते यद्यत्तत्तद्विद्धि शिवात्मकम् ॥ भेदो जनानां लोकेस्मिन्प्रतिभासो विचारतः ॥२७॥ स्वप्ने च विपुलान् भोगान् भुक्त्वा मर्त्यः सुखी भवेत् ॥ दुःखी च भोगं दुःखं च नानुभूतं विचारतः ॥२८॥ एवमाहुस्तथान्ये च सर्वे वेदार्थतत्त्वगाः ॥ हृदि संसारिणां साक्षात्सकलः परमेश्वरः ॥ २९ ॥ योगिनां निष्कलो देवो ज्ञानिनां च जगन्मयः ॥ त्रिविधं परमेशस्य वपुर्लोके प्रशस्यते ॥ ३० ॥ निष्कलं प्रथमं चैकं ततः सकलनिष्कलम् ॥ तृतीयं सकलं चैव नान्यथेति द्विजोत्तमाः ॥ ३१ ॥ अर्चयंति मुहुः केचित्सदा सकलनिष्कलम् ॥सर्वज्ञं हृदये केचिच्छिवलिंगे विभावसौ ॥३२॥ सकलं मुनयः केचित्सदा संसारवर्तिनः॥ एवमभ्यर्चयंत्येव सदाराः ससुता नराः॥ ३३ ॥ यथा शिवस्तथा देवी यथा देवी तथा शिवः ॥ तस्मादभेदबुद्ध्यैव सप्तविंश त्प्रभेदतः॥ ३४ ॥

तत्त्वगा आहुरित्यन्वयः सकलः सगुण इत्यर्थः ॥ २९ ॥ निष्कलः निर्गुणो जगन्मयो विश्वरूपः प्रशस्यते पूज्यत इत्यर्थः ॥ ३० ॥३१॥ केचिज्ज्ञानिनः सदा सर्वकालं सकलनिष्कलं उग्रभेदात्सगुणनिर्गुणरूपं मुहुर्निरंतरं केचिद्योगिनः हृदये सर्वज्ञं निष्कलं केचित्संसारवर्तिनो मुनयः सदा सर्वकालं सकलं सगुणं शिवलिंगे विभावसौ अर्चयंतीत्यग्रिमस्थैरन्वयः ॥ ३२ ॥ सदाराः ससुता नराः गृहस्थाः एवं सगुणरूपमेव अर्चयंति पूजयंतीत्यर्थः ॥ ३३ ॥ शिवदेव्योरभेदं कथयति यथेति ॥ ३४ ॥
देहे स्वशरीरे बाह्ये मंडलादौ चतुष्कोणादिषट्स्थानेषु यजंति पूजयंतीत्यर्थः । अजपाजपविधाने एतत्स्थानान्युक्तानि तत्र चतुष्कोणं मूलाधारे षड्दलं स्वाधिष्ठाने दशारं मूर्ध्नि तदेव सहस्रारमुच्यते द्वादशारं हृदये षोडशारं कंठे त्रिरस्रं भ्रमध्ये ज्ञेयानि ॥ ३५ ॥ निर्गुणः शिवः कथं केन हेतुना सकलत्वं गत इति ऋषिप्रश्नोत्तरं कथयति । स इति । सदसद्व्यक्तिवर्जितः निर्गुणः स शिवः संतारणार्थं लोकोद्धारार्थं प्रभुर्निग्रहानुग्रहसमर्थः स्वेच्छया स्वकीयेच्छारूपया देव्या सार्धं साक्षाद्विग्रहमास्थाय स्थित इत्यन्वयः ॥ ३६॥ एकमद्वितीयं तं धृतस्वेच्छाविग्रहं शिवं द्विगुणं प्रकृतिपुरुषरूपं केचिदन्ये त्रिगुणं ब्रह्मविष्णुरुद्ररूपमूचुः वेदविदः संसारिणं जगज्जनकं वदंतीत्यन्वयः ॥ ३७ ॥ धर्मरताः विशिष्टा विप्राः भक्त्या शुभेन योगेन च भगवंतं शिवमेव षडस्रमध्ये यजंतीत्यनेन विप्राणां शिवाराधनमेव मुख्यं बोधितम् ॥ ३८ ॥ तत्र भ्रूमध्यस्थाने त्रिरस्रे देव्या सह शिवं ये पश्यंति ते एनं यांति

यजंति देहे बाह्ये च चतुष्कोणे षडस्रके ॥ दशारे द्वादशारे च षोडशारे त्रिरस्रके॥३५॥स स्वेच्छया शिवः साक्षाद्देव्या सार्धं स्थितः प्रभुः॥ संतारणार्थं च शिवः सदसद्व्यक्तिवर्जितः ॥ ३६ ॥ तमेकमाहुर्द्विगुणं च केचित्केचित्तमाहुस्त्रिगुणात्मकं च ॥ ऊचुस्तथा तं च शिवं तथान्ये संसारिणं वेदविदो वदंति ॥ ३७ ॥ भक्त्या च योगेन शुभेन युक्ता विप्राः सदा धर्मरता विशिष्टाः ॥ यजंति योगेशमशेषमूर्तिं षडस्रमध्ये भगवंतमेव ॥ ३८ ॥ ये तत्र पश्यंति शिवं त्रिरस्रे त्रितत्त्वमध्ये त्रिगुणं त्रियक्षम् ॥ ते यांति चैनं न च योगिनोऽन्ये तया च देव्या पुरुषं पुराणम् ॥३९॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवाद्वैतकथनं नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ सूत उवाच ॥ अतः परं प्रवक्ष्यामि स्वेच्छाविग्रहसंभवम् ॥ प्रतिष्ठायाः फलं सर्वं सर्वलोकहिताय वै ॥ १ ॥ स्कंदोमासहितं देवमासीनं परमासने ॥ कृत्वा भक्त्या प्रतिष्ठाप्य सर्वान्कामानवाप्नुयात् ॥ २ ॥ स्कंदोमासहितं देवं संपूज्य विधिना सकृत् ॥ यत्फलं लभते मर्त्यस्तद्वदामि यथाश्रुतम् ॥ ३ ॥ सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ रुद्रकन्यासमाकीर्णैर्गेयनाट्यसमन्वितैः ॥ ४ ॥ शिववत्क्रीडते योगी यावदाभूतसंप्लवम् ॥ तत्र भुक्त्वा महाभोगान् विमानैः सार्वकामिकैः ॥ ५ ॥ औमं कौमारमैशानं वैष्णवं ब्राह्ममेव च ॥ प्राजापत्यं महातेजा जनलोकं महस्तथा ॥ ६ ॥ ऐंद्रमासाद्य चैंद्रत्वं कृत्वा वर्षायुतं पुनः ॥ भुक्त्वा चैव भुवर्लोके भोगान् दिव्यान् सुशोभनान् ॥ ७ ॥ मेरुमासाद्य देवानां भवनेषु प्रमोदते ॥ एकपादं चतुर्बाहुं त्रिनेत्रं शूलसंयुतम् ॥ ८ ॥

सायुज्यं प्राप्नुवंति अन्ये योगिनो न यांति न मुच्यंतीत्यर्थः ॥ ३९ ॥ "श्रीशंकर तव रूपं योगिध्येयं विमोचकं साक्षात् ॥ दर्शय शिवया युक्तं त्रिरस्रमध्ये ममाखिलस्वामिन् ॥ १ ॥" इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां शिवाद्वैतकथनं नाम पंचसप्ततितमोऽध्यायः ॥७५ ॥ "लैंगे षट्सप्ततितमे ह्यनेकान्छिवविग्रहान् ॥ लीलाधृतान्प्रतिष्ठाप्य फलं सम्यङ्निरूप्यते ॥ १ ॥" सूतः शिवलीलाविग्रहप्रतिष्ठाफलं कथयति अत इत्यादिना ॥ १ ॥२ ॥ स्कंदोमासहितशिवस्थापनफलमुक्त्वा प्रतिष्ठापनोत्तरमहापूजाफलं कथयति स्कंदोमेत्यादिना । यथाश्रुतं व्यासकथितमित्यर्थः ॥३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
॥ ९ ॥ पंचविंशतिकं पुरुषं जीवमित्यर्थः । बुद्धिदेशतः हृदयादित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ आत्मानं रुद्रमित्यर्थः ॥ १३ ॥ १४ ॥ यज्ञेशमग्निरूपमित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सहस्रबाहुं शैलजासहितं नृत्यंतं देवेशं वा चतुर्बाहुं शैलजासहितं प्रतिष्ठाप्य समफलत्वादग्रे एकफलकथनं बोध्यम् ॥ २२ ॥ २३ ॥

मूर्ध्ना स्थितं हरिं वामे दक्षिणे चतुराननम् ॥ अष्टाविंशतिरुद्राणां कोटीः सर्वांगसुप्रभम् ॥९॥ पंचविंशतिकं साक्षात्पुरुषं हृदयात्तथा ॥ प्रकृतिं वामतश्चैव बुद्धिं वै बुद्धिदेशतः ॥ १० ॥ अहंकारमहंकारात्तन्मात्राणि तु तत्र वै ॥ इंद्रियाणींद्रियादेव लीलया परमेश्वरम् ॥११॥ पृथिवीं पादमूलात्तु गुह्यदेशाज्जलं तथा ॥ नाभिदेशात्तथा वह्निं हृदयाद्भास्करं तथा ॥ १२ ॥ कंठात्सोमं तथात्मानं भ्रूमध्यान्मस्तकाद्दिवम् ॥ मूर्ध्नैवं संस्थितं साक्षाज्जगत्सर्वं चराचरम् ॥ १३ ॥ सर्वज्ञं सर्वगं देवं कृत्वा विद्याविधानतः ॥ प्रतिष्ठाप्य यथान्यायं शिवसायुज्यमाप्नुयात् ॥१४॥ त्रिपादं सप्तहस्तं च चतुःशृंगं द्विशीर्षकम् ॥ कृत्वा यज्ञेशमीशानं विष्णुलोके महीयते ॥ १५॥ तत्र भुक्त्वा महाभोगान्कल्पलक्षं सुखी नरः ॥ क्रमादागत्य लोकेऽस्मिन्सर्वयज्ञांतगो भवेत् ॥ १६ ॥ वृषारूढं तु यः कुर्यात्सोमं सोमार्धभूषणम् ॥ हयमेधायुतं कृत्वा यत्पुण्यं तदवाप्य सः ॥ १७ ॥ कांचनेन विमानेन किंकिणीजालमालिना ॥ गत्वा शिवपुरं दिव्यं तत्रैव स विमुच्यते ॥ १८ ॥ नंदिना सहितं देवं सांबं सर्वगणैर्वृतम् ॥ कृत्वा यत्फलमाप्नोति वक्ष्ये तद्वै यथाश्रुतम् ॥ १९ ॥ सूर्यमंडलसंकाशैर्विमानैर्वृषसंयुतैः ॥ अप्सरोगणसंकीर्णैर्देवदानवदुर्लभैः ॥ २० ॥ नृत्यद्भिरप्सरःसंघैः सर्वतः सर्वशोभितः ॥ गत्वा शिवपुरं दिव्यं गाणपत्यमवाप्नुयात् ॥ २१ ॥ नत्यंतं देवदेवेशं शैलजासहितं प्रभुम् ॥ सहस्रबाहुं सर्वज्ञं चतुर्बाहुमथापि वा ॥ २२ ॥ भृग्वाद्यैर्भूतसंघैश्च संवृतं परमेश्वरम् ॥ शैलजासहितं साक्षाद्वृषभध्वजमीश्वरम् ॥ २३ ॥ ब्रह्मेंद्रविष्णुसोमाद्यैः सदा सर्वैर्नमस्कृतम् ॥ मातृभिर्मुनिभिश्चैव संवृतं परमेश्वरम् ॥ २४ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य यत्फलं तद्वदाम्यहम् ॥ सर्वयज्ञतपोदानतीर्थदेवेषु यत् फलम् ॥ २५ ॥ तत्फलं कोटिगुणितं लब्ध्वा याति शिवं पदम् ॥ तत्र भुक्त्वा महाभोगान् यावदाभूतसंप्लवम् ॥ २६ ॥ सृष्ट्यंतरे पुनः प्राप्ते मानवं पदमाप्नुयात् ॥ नग्नं चतुर्भुजं श्वेतं त्रिनेत्रं सर्पमेखलम् ॥ २७ ॥ कपालहस्तं देवेशं कृष्णकुंचितमूर्धजम् ॥ कृत्वा भक्त्या प्रतिष्ठाप्य शिवसायुज्यमाप्नुयात् ॥ २८ ॥ इभेंद्रदारकं देवं सांबं सिद्धार्थदं प्रभुम् ॥ सुधूम्रवर्णं रक्ताक्षं त्रिनेत्रं चंद्रभूषणम् ॥ २९ ॥ काकपक्षधरं मूर्ध्ना नागटंकधरं हरम् ॥ सिंहाजिनोत्तरीयं च मृगचर्मांबरं प्रभुम् ॥३०॥ तीक्ष्णदंष्ट्रं गदाहस्तं कपालोद्यतपाणिनम् ॥ हुंफट्कारे महाशब्दशब्दिताखिलदिङ्मुखम् ॥३१॥ पुंडरीकाजिनं दोर्भ्यां बिभ्रंतं कंचुकं तथा ॥ हसंतं च नदंतं च पिबंतं कृष्णसागरम् ॥ ३२ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इभेंद्रं गजासुरं दारयतीति इभेंद्रदारकस्तं ... ॥ ३१ ॥ पुंडरीकाजिनं व्याघ्रांबरं "व्याघ्रे तु पुंडरीको ना" इत्यमरः । कंचुकं

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कमंडलुं कृष्णसागरं तमःसमुद्रं वा कृष्णसागरं क्षीरसमुद्रमित्यर्थः । इयं कथा 'क्षीरोदं पूर्ववच्चक्रे' इत्यनेन एकोनत्रिंशे उक्ता ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ लकुलीश्वर तत्संज्ञकपूर्वोक्तकार्यावतारम् ॥ ३८ ॥ ३९ ॥ ४० ॥ कृतमुद्रस्य ध्यानमुद्रायुक्तस्येत्यर्थः ॥ ४१ ॥ ४२ ॥ विष्णोः कलेवरं नृसिंहचर्म परमेष्ठिनः शिवस्य बिभ्रदिति शेषः । कृत्वा

नृत्यंतं भूतसंघैश्च गणसंघैस्त्वलंकृतम् ॥ कृत्वा भक्त्या प्रतिष्ठाप्य यथाविभवविस्तरम् ॥ ३३ ॥ सर्वविघ्नानतिक्रम्य शिवलोके महीयते ॥ तत्र भुक्त्वा महाभोगान् यावदाभूतसंप्लवम् ॥ ३४ ॥ ज्ञानं विचारतो लब्ध्वा रुद्रेभ्यस्तत्र मुच्यते ॥ अर्धनारीश्वरं देवं चतुर्भुजमनुत्तमम् ॥३५॥ वरदाभयहस्तं च शूलपद्मधरं प्रभुम् ॥ स्त्रीपुंभावेन संस्थानं सर्वाभरणभूषितम् ॥ ३६ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य शिवलोके महीयते ॥ तत्र भुक्त्वा महाभोगानणिमादिगुणैर्युतः ॥ ३७ ॥ आचंद्रतारकं ज्ञानं ततो लब्ध्वा विमुच्यते ॥ यः कुर्याद्देवदेवेशं सर्वज्ञं लकुलीश्वरम् ॥ ३८ ॥ वृतं शिष्यप्रशिष्यैश्च व्याख्यानोद्यतपाणिनम् ॥ कृत्वा भुक्त्या प्रतिष्ठाप्य शिवलोकं स गच्छति ॥३९॥ भुक्त्वा तु विपुलांस्तत्र भोगान् युगशतं नरः ॥ ज्ञानयोगं समासाद्य तत्रैव च विमुच्यते ॥ ४० ॥ पूर्वदेवामराणां च यत्स्थानं सकलेप्सितम् ॥ कृतमुद्रस्य देवस्य चिताभस्मानुलेपिनः ॥ ४१ ॥ त्रिपुंड्रधारिणस्तेषां शिरोमालाधरस्य च ॥ ब्रह्मणः केशकैनैकमुपवीतं च बिभ्रतः ॥ ४२ ॥ बिभ्रतो वामहस्तेन कपालं ब्रह्मणो वरम् ॥ विष्णोः कलेवरं चैव बिभ्रतः परमेष्ठिनः ॥ ४३ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य मुच्यते भवसागरात् ॥ ओंनमो नीलकंठाय इति पुण्याक्षराष्टकम् ॥ ४४ ॥ मंत्रमाह सकृद्वा यः पातकैः स विमुच्यते ॥ मंत्रेणानेन गंधाद्यैर्भक्त्या वित्तानुसारतः ॥ ४५ ॥ संपूज्य देवदेवेशं शिवलोके महीयते ॥ जालंधरांतकं देवं सुदर्शनधरं प्रभुम् ॥ ४६ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य द्विधाभूतं जलंधरम् ॥ प्रयाति शिवसायुज्यं नात्र कार्या विचारणा ॥ ४७ ॥ सुदर्शनप्रदं देवं साक्षात्पूर्वोक्तलक्षणम् ॥ अर्चमानेन देवेन चार्चितं नेत्रपूजया ॥ ४८ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य शिवलोके महीयते ॥ तिष्ठतोथ निकुंभस्य पृष्ठतश्चरणांबुजम् ॥ ४९ ॥ वामेतरं सुविन्यस्य वामे चालिंग्य चाद्रिजाम् ॥ शूलाग्रे कूर्परं स्थाप्य किंकिणीकृतपन्नगम् ॥ ५० ॥ संप्रेक्ष्य चांधकं पार्श्वे कृतांजलिपुटं स्थितम् ॥ रूपं कृत्वा यथान्यायं शिवसायुज्यमाप्नुयात् ॥ ५१ ॥

प्रतिष्ठाप्य मुच्यत इत्यग्रिमेणान्वयः ॥ ४३ ॥ अष्टाक्षरमंत्रं तन्माहात्म्यं तत्पूजनफलं च कथयति ओं नम इत्यादिना ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ देवेन विष्णुना नेत्रपद्मेन स्वनेत्रकमलेनेत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

सोममुमासहितमित्यर्थः ॥५२॥५३॥५४॥५५॥ वामोत्संगेंबिकायुतं गंगया सहितं च शिवं विनायकादींश्च प्रतिष्ठाप्येति शेषः।सायुज्यमाप्नुयादिति तृतीयेनान्वयः ॥५६॥५७॥५८॥ ॥५९॥६०॥६१॥ क्षेत्रसंरक्षकं क्षेत्रपालम् ॥६२॥ महीयते पूज्यत इत्यर्थः ॥६३॥ "शंभो त्वया वै जगतां हिताय नानाविधा ये तु धृतावतारा: ॥ संस्थापनात्सर्वफला महेश शिवा युताः संतु सुखप्रदा मे॥१॥" इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां शिवमूर्तिप्रतिष्ठाफलकथनं नाम षट्सप्ततितमोऽध्यायः॥७६॥"सप्त सप्ततिकेऽध्याये प्रासादकरणात्फलम् ॥

तदाकारतया यः कुर्याद्देवदेवेशं त्रिपुरांतकमीश्वरम् ॥ धनुर्बाणसमायुक्तं सोमं सोमार्धभूषणम् ॥ ५२ ॥ रथे सुसंस्थितं देवं चतुराननसारथिम् ॥ तदाकारतया ... ॥ ५३ ॥ क्रीडते नात्र संदेहो द्वितीय इव शंकरः ॥ तत्र भुक्त्वा महाभोगान्यावदिच्छा द्विजोत्तमाः ॥ ५४ ॥ ज्ञानं सोपि गत्वा शिवपुरं सुखी ॥ ५३ ॥ क्रीडते नात्र संदेहो द्वितीय इव शंकरः ॥ तत्र भुक्त्वा महाभोगान्यावदिच्छा द्विजोत्तमाः ॥ ५४ ॥ ज्ञानं विचारितं लब्ध्वा तत्रैव स विमुच्यते ॥ गंगाधरं सुखासीनं चंद्रशेखरमेव च ॥ ५५ ॥ गंगया सहितं चैव वामोत्संगेंबिकान्वितम् ॥ विनायकं तथा स्कंदं ज्येष्ठं दुर्गां सुशोभनाम् ॥ ५६ ॥ भास्करं च तथा सोमं ब्रह्माणीं च महेश्वरीम् ॥ कौमारीं वैष्णवीं देवीं वाराहीं वरदां तथा ॥ ५७ ॥ इंद्राणीं चैव चामुंडां वीरभद्रसमन्विताम् ॥ विघ्नेशेन च यो धीमान् शिवसायुज्यमाप्नुयात्॥५८॥लिंगमूर्तिं महाज्वालामालासंवृतमव्ययम् ॥ लिंगस्य मध्ये वै कृत्वा चंद्रशेखरमीश्वरम् ॥५९॥ व्योम्नि कुर्यात्तथा लिंगं ब्रह्माणं हंसरूपिणम् ॥ विष्णुं वराहरूपेण लिंगस्याधस्त्वधोमुखम् ॥६०॥ ब्रह्माणं दक्षिणे तस्य कृतांजलिपुटं स्थितम् ॥ मध्ये लिंगं महाघोरं महांभसि च संस्थितम् ॥ ६१ ॥ कृत्वा भक्त्या प्रतिष्ठाप्य शिवसायुज्यमाप्नुयात् ॥ क्षेत्रसंरक्षकं देवं तथा पाशुपतं प्रभुम्॥६२॥कृत्वा भक्त्या यथान्यायं शिवलोके महीयते॥६३॥इतिश्रीलिंगमहापुराणे पूर्वभागे शिवमूर्तिप्रतिष्ठाफलकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ऋषय ऊचुः ॥ लिंगप्रतिष्ठापुण्यं च लिंगस्थापनमेव च ॥ लिंगानां चैव भेदाश्च श्रुतं तव सुखादिह ॥ १ ॥ मृदादिरत्नपर्यंतैर्द्रव्यैः कृत्वा शिवालयम् ॥ यत्फलं लभते मर्त्यस्तत्फलं वक्तुमर्हसि ॥ २ ॥ सूत उवाच ॥ यस्य भक्तोपि लोकेस्मिन्पुत्रदारगृहादिभिः ॥ बाध्यते ज्ञानयुक्तश्चेन्न च तस्य गृहैस्तु किम् ॥ ३ ॥ तथापि भक्ताः परमेश्वरस्य कृत्वेष्टलोष्टैरपि रुद्रलोकम् ॥ प्रयांति दिव्यं हि विमानवर्यं सुरेंद्रपद्मोद्भववंदितस्य ॥ ४ ॥ बाल्यात्तु लोष्टेन शिवं च कृत्वा मृदापि वा पांसुभिरादिदेवम् ॥ गृहं च तादृग्विधमस्य शंभोः संपूज्य रुद्रत्वमवाप्नुवंति ॥ ५ ॥ तस्मात्सर्वप्रयत्नेन भक्त्या भक्तैः शिवालयम् ॥ कर्तव्यं सर्वयत्नेन धर्मकामार्थसिद्धये ॥ ६ ॥

शिवक्षेत्रस्य मानादि कथ्यते मंडलानि च ॥१॥" ऋषयः पूर्वोक्तमनूद्य प्रासादफलमपृच्छन् लिंगमित्यादिना । इदमिति शेषः।तव मुखाच्छ्रुतमित्यन्वयः॥१॥२॥यस्य शिवस्य भक्तः अस्मिन् भूलोके ज्ञानयुक्तः पुत्रदारगृहादिभिरपि न बाध्यते चेत्तस्य ज्ञानवैराग्ययुक्तस्य गृहैः प्रासादैस्तु किं किमपि कर्तव्यं नेत्यर्थः॥३॥ तथापि पुत्रादिसक्ता अपीत्यर्थः ॥४॥५॥६॥ केसरादिभेदाः शिल्पशास्त्रे ज्ञेयाः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ शंभवे कृत्वेत्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

केशरं नागरं वापि द्राविडं वा तथापरम्॥कृत्वा रुद्रालयं भक्त्या शिवलोके महीयते॥७॥कैलासाख्यं च यः कुर्यात्प्रासादं परमेष्ठिनः॥कैलासशिखराकारैर्विमानैर्मोदते सुखी ॥ ८ ॥ मंदरं वा प्रकुर्वीत शिवाय विधिपूर्वकम् ॥ भक्त्या वित्तानुसारेण उत्तमाधममध्यमम् ॥ ९ ॥ मंदराद्रिप्रतीकाशैर्विमानैर्विश्वतोमुखैः॥अप्सरोगणसंकीर्णैर्देवदानवदुर्लभैः ॥१०॥ गत्वा शिवपुरं रम्यं भुक्त्वा भोगान् यथेप्सितान्॥ज्ञानयोगं समासाद्य गाणपत्यं लभेन्नरः ॥ ११ ॥ यः कुर्यान्मेरुनामानं प्रासादं परमेष्ठिनः ॥ स यत्फलमवाप्नोति न तत्सर्वैर्महामखैः ॥ १२ ॥ सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम्॥तत्फलं सकलं लब्ध्वा शिववन्मोदते चिरम्॥१३॥निषधं नाम यः कुर्यात्प्रासादं भक्तितः सुधीः ॥ शिवलोकमनुप्राप्य शिववन्मोदते चिरम् ॥१४॥ कुर्याद्वा यः शुभं विप्रा हिमशैलमनुत्तमम् ॥ हिमशैलोपमैर्यानैर्गत्वा शिवपुरं शुभम् ॥ १५ ॥ ज्ञानयोगं समासाद्य गाणपत्यमवाप्नुयात् ॥ नीलाद्रिशिखराख्यं वा प्रासादं यः सुशोभनम् ॥ १६ ॥ कृत्वा वित्तानुसारेण भक्त्या रुद्राय शंभवे ॥ यत्फलं लभते मर्त्यस्तत्फलं प्रवक्ष्यामि मर्त्यस्तत्फलं प्रवदाम्यहम् ॥ १७ ॥ हिमशैले कृते भक्त्या यत्फलं प्राक्तयोदितम् ॥ तत्फलं सकलं लब्ध्वा सर्वदेवनमस्कृतः ॥१८॥ रुद्रलोकमनुप्राप्य रुद्रैः सार्धं प्रमोदते ॥ महेंद्रशैलनामानं प्रासादं रुद्रसंमतम् ॥१९॥ कृत्वा यत्फलमाप्नोति तत्फलं प्रवदाम्यहम् ॥ महेंद्रपर्वताकारैर्विमानैर्वृषसंयुतैः ॥२०॥ गत्वा शिवपुरं दिव्यं भुक्त्वा भोगान्यथेप्सितान् ॥ ज्ञानं विचारितं रुद्रैः संप्राप्य मुनिपुंगवाः ॥२१॥ विषयान् विषवत्त्यक्त्वा शिवसायुज्यमाप्नुयात् ॥ हेम्ना यस्तु प्रकुर्वीत प्रासादं रत्नशोभितम् ॥ २२ ॥ द्राविडं नागरं वापि केसरं वा विधानतः ॥ कूटं वा मंडपं वापि समं वा दीर्घमेव च॥ २३ ॥ प्रासादं न तस्य शक्यते वक्तुं पुण्यं शतयुगैरपि ॥ जीर्णं वा पतितं वापि खंडितं स्फुटितं तथा॥२४॥पूर्ववत्कारयेद्यस्तु द्वाराद्यैः सुशुभं द्विजाः ॥ प्रासादं मंडपं वापि प्राकारं गोपुरं तु वा ॥ २५ ॥ कर्तुरप्यधिकं पुण्यं लभते नात्र संशयः ॥ वृत्यर्थं वा प्रकुर्वीत नरः कर्म शिवालये ॥ २६ ॥ यः स याति न संदेहः स्वर्गलोकं सबांधवः ॥ यश्चात्मभोगसिध्यर्थमपि रुद्रालये सकृत् ॥ २७ ॥ कर्म कुर्याद्यदि सुखं लब्ध्वा चापि प्रमोदते ॥ तस्मादायतनं भक्त्या यः कुर्यान्मुनिसत्तमाः ॥ २८ ॥ काष्ठेष्टकादिभिर्मर्त्यः शिवलोके महीयते ॥ प्रसादार्थं महेशस्य प्रासादो मुनिपुंगवाः ॥ २९ ॥

... जीर्णोद्धारफलं कथयति । जीर्णमित्यादिना ॥ २४ ॥ कूटं यंत्ररूपं वा निश्चलमित्यर्थः । ... ॥ २५ ॥ वृत्यर्थं स्वजीवनार्थमित्यर्थः ॥ २६ ॥ आत्मभोगसिद्ध्यर्थं स्वोपभोगार्थम् ॥ २७ ॥ २८ ॥ २९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥३०॥३१॥वस्त्रपूतेन वस्त्रशोधितेनेत्यर्थः। गंधं चंदनम्॥३२॥वर्षचांद्रायणं वर्षपर्यंतचांद्रायणव्रतफलमित्यर्थः लभेदित्यन्वयः। शिवक्षेत्रमानं कथयति अर्धक्रोशमित्यादिना॥३३॥ सामान्यमुक्त्वा ब्राह्मणकौंडिन्यन्यायेन विशेषमानं कथयति स्वायंभुवमित्यादिना। स्वायंभुवस्य स्वयमुत्पन्नस्य बाणस्य केवलस्य ज्योतिर्लिंगस्येत्यर्थः। "बाणः स्यात्केवले काण्डे" इति विश्वः। तथार्धक्रोशं मानं हि क्षेत्रप्रमाणमित्यर्थः॥ ३४॥ स्वायंभुवे पूर्वोक्तान्यस्वयंभूस्थाने तदर्धमर्धक्रोशार्धरूपं आर्षे ऋषिस्थापिते तदर्धं क्रोशपादार्धं मानुषे मनुष्यस्थापिते

कर्तव्यः सर्वयत्नेन धर्मकामार्थमुक्तये॥ अशक्तश्चेन्मुनिश्रेष्ठाः प्रासादं कर्तुमुत्तमम्॥ ३०॥ संमार्जनादिभिर्वापि सर्वान्कामानवाप्नुयात्॥ संमार्जनं तु यः कुर्यान्मार्जन्यामृदुसूक्ष्मया॥ ३१॥ चान्द्रायणसहस्रस्य फलं मासेन लभ्यते॥ यः कुर्याद्वस्त्रपूतेन गंधगोमयवारिणा॥ ३२॥ आलेपनं यथान्यायं वर्षचांद्रायणं लभेत्॥ अर्धक्रोशं शिवक्षेत्रं शिवलिंगात्समंततः॥ ३३॥ यस्त्यजेदुस्त्यजान्प्राणाञ्शिवसायुज्यमाप्नुयात्॥ स्वायंभुवस्य मानं हि तथा बाणस्य सुव्रताः॥ ३४॥ स्वायंभुवे तदर्धं स्यात्स्यादार्षे च तदर्धकम्॥ मानुषे च तदर्धं स्यात्क्षेत्रमानं द्विजोत्तमाः॥ ॥ ३५॥ एवं यतीनामावासे क्षेत्रमानं द्विजोत्तमाः॥ रुद्रावतारे चाद्यं यच्छिष्ये चैव प्रशिष्यके॥ ३६॥ नरावतारे तच्छिष्ये तच्छिष्ये च प्रशिष्यके॥ श्रीपर्वतं महापुण्ये तस्य प्रांते च वा द्विजाः॥ ३७॥ तस्मिन्वा यस्त्यजेत्प्राणाञ्छिवसायुज्यमाप्नुयात्॥ वाराणस्यां तथाप्येवम विमुक्ते विशेषतः॥ ३८॥ केदारे च महाक्षेत्रे प्रयागे च विशेषतः॥ कुरुक्षेत्रे च यः प्राणान्संत्यजेद्याति निर्वृतिम्॥ ३९॥ प्रभासे पुष्करेवंत्यां तथा चैवामरेश्वरे॥ वर्णीशैलाकुले चैव मृतो याति शिवात्मताम्॥ ४०॥ वाराणस्यां मृतो जंतुर्न जातु जंतुतां व्रजेत्॥ त्रिविष्टपे विमुक्ते च केदारे संगमेश्वरे॥ ४१॥ शालके वा त्यजेत्प्राणांस्तथा वै जंबुकेश्वरे॥ शुक्रेश्वरे वा गोकर्ण भास्करेशे गुहेश्वरे॥ ४२॥ हिरण्यगर्भे नंदीशे स याति परमां गतिम्॥ नियमैः शोष्य यो देहं त्यजेत्क्षेत्रे शिवस्य तु॥ ४३॥ स याति शिवतां योगी मानुषे दैविकेपि वा॥ आर्षे वापि मुनिश्रेष्ठास्तथा स्वायंभुवेपि वा॥ ४४॥ स्वयंभूते तथा देवे नात्र कार्या विचारणा॥ आधायाग्निं शिवक्षेत्रे संपूज्य परमेश्वरम्॥ ४५॥ स्वदेहपिंडं जुहुयाद्यः स याति परां गतिम्॥ यावत्तावन्निराहारो भूत्वा प्राणान्परित्यजेत्॥ ४६॥ शिवक्षेत्रे मुनिश्रेष्ठाः शिवसायुज्यमाप्नुयात्॥ छित्त्वा पादद्वयं चापि शिवक्षेत्रे वसेत्तु यः॥ ४७॥

तदर्धं क्रोशषोडशभागमितमित्यर्थः॥ ३५॥ यतीनां संन्यासिनामावासे एवं क्रोशषोडशभागरूपमित्यर्थः। रुद्रावतारे सप्तमाध्यायोक्तश्वेताद्यवतारस्थाने शिष्ये चैव प्रशिष्यके तच्छिष्यप्रशिष्यादिस्थाने नरावतारे तच्छिष्यप्रशिष्यके च यदाद्यं अर्धक्रोशरूपक्षेत्रमानं तज्ज्ञेयमिति शेषनादायाग्रिमेणान्वयः॥ ३६॥ विशिष्टक्षेत्रमाहात्म्यं कथयति श्रीपर्वत इत्यादिना॥ ३७॥ ३८॥ ३९॥ ४०॥ ४१॥ ४२॥ ४३॥ ४४॥ स्वयंभूते ज्योतिर्लिंग इत्यर्थः। शिवक्षेत्रे विधिना देहत्यागफलं कथयति आधायेत्यादिना॥४५॥४६॥४७॥

क्षेत्रदर्शनाद्युत्तरोत्तरफलं कथयति क्षेत्रस्य दर्शनमित्यादिना॥ ४८॥ ४९॥ ५०॥ शिवक्षेत्रसमीपनद्यादिमाहात्म्यं कथयति शिवेत्यादिना॥ ५१॥ ५२॥ ५३॥ ५४॥

स याति शिवतां चैव नात्र कार्या विचारणा॥ क्षेत्रस्य दर्शनं पुण्यं प्रवेशस्तच्छताधिकः॥ ४८॥ तस्माच्छतगुणं पुण्यं स्पर्शनं च प्रदक्षिणम्॥ तस्माच्छतगुणं पुण्यं जलस्नानमतः परम्॥ ४९॥ क्षीरस्नानं ततो विप्राः शताधिकमनुत्तमम्॥ दध्ना सहस्रमाख्यातं मधुना तच्छताधिकम्॥ ५०॥ घृतस्नानेन चानंतं शार्करे तच्छताधिकम्॥ शिवक्षेत्रसमीपस्थां नदीं प्राप्यावगाह्य च॥५१॥ त्यजेद्देहं विहायान्नं शिवलोके महीयते॥ शिवक्षेत्रसमीपस्था नद्यः सर्वाः सुशोभनाः॥ ५२॥ वापीकूपतडागाश्च शिवतीर्था इति स्मृताः॥ स्नात्वा तेषु नरो भक्त्या तीर्थेषु द्विजसत्तमाः॥ ५३॥ ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः॥ प्रातः स्नात्वा मुनिश्रेष्ठाः शिवतीर्थेषु मानवः॥ ५४॥ अश्वमेधफलं प्राप्य रुद्रलोकं स गच्छति॥ मध्याह्ने शिवतीर्थेषु स्नात्वा भक्त्या सकृन्नरः॥५५॥गंगास्नानसमं पुण्यं लभते नात्र संशयः॥ अस्तं गते तथा चार्के स्नात्वा गच्छेच्छिवं पदम्॥५६॥ पापकंचुकमुत्सृज्य शिवतीर्थेषु मानवः॥ द्विजास्त्रिषवणं स्नात्वा शिवतीर्थे सकृन्नरः॥५७॥ शिवसायुज्यमाप्नोति नात्र कार्या विचारणा॥ पुराथ सूकरः कश्चित् श्वानं दृष्ट्वा भयात्पथि॥ ५८॥ प्रसंगाद्वारमेकं तु शिवतीर्थेवगाह्य च॥ मृतः स्वयं द्विजश्रेष्ठा गाणपत्यमवाप्तवान्॥ ५९॥ यः प्रातर्देवदेवेशं शिवं लिंगस्वरूपिणम्॥ पश्येत्स याति सर्वस्मादधिकां गतिमेव च॥ ६०॥ मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत्॥ सायाह्ने सर्वयज्ञानां फलं प्राप्य विमुच्यते॥ ६१॥ मानसैर्वाचिकैः पापैः कायिकैश्च महत्तरैः॥ तथोपपातकैश्चैव पापैश्चैवानुपातकैः॥ ६२॥ संक्रमे देवमीशानं दृष्ट्वा लिंगाकृतिं प्रभुम्॥ मासेन यत्कृतं पापं त्यक्त्वा याति शिवं पदम्॥ ६३॥ अयने चार्धमासेन दक्षिणे चोत्तरायणे॥ विषुवे चैव संपूज्य प्रयाति परमां गतिम्॥ ६४॥ प्रदक्षिणात्रयं कुर्याद्यः प्रासादं समंततः॥ सव्यापसव्यन्यायेन मृदुगत्या शुचिर्नरः॥ ६५॥ पदेपदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात्॥ वाचा यस्तु शिवं नित्यं संरौति परमेश्वरम्॥ ६६॥ सोपि याति शिवं स्थानं प्राप्यं किं पुनरेव च॥ कृत्वा मंडलकं क्षेत्रं गंधगोमयवारिणा॥ ६७॥ मुक्ताफलमयैश्चूर्णैरिंद्रनीलमयैस्तथा॥ पद्मरागमयैश्चैव स्फाटिकैश्च सुशोभनैः॥ ६८॥

॥ ५५॥ ५६॥ ५७॥ ५८॥ एकवारं सकृदित्यर्थः॥ ५९॥ शिवलिंगदर्शनफलं कथयति य इत्यादिना॥ ६०॥ ६१॥ ६२॥ संक्रमे सूर्यसंक्रांतौ॥ ६३॥ ६४॥ सव्यापसव्यन्यायेन सोमसूत्रविधिनेत्यर्थः॥ ६५॥ शिवं संरौति अत्युच्चशब्देनोच्चारयतीत्यर्थः॥ ६६॥ मंडलपूजाविधिं कथयति कृत्वेत्यादिना॥ ६७॥ ६८॥ ॥ ६९॥ ७०॥ नवशक्तिसमन्वितं वामादिशक्तियुक्तम्॥ ७१॥ ७२॥ ७३॥ रविमंडलं कथयति द्वादशारमित्यादिना॥७४॥७५॥प्रकृतिमंडलं कथयति एवमित्यादिना॥७६॥

तथा मारकतैश्चैव सौवर्णै राजतैस्तथा॥ तद्वर्णैर्लौकिकैश्चैव चूर्णैर्वित्ताविवर्जितैः॥ ६९॥ आलिख्य कमलं भद्रं दशहस्तप्रमाणतः॥ सकर्णिकं महाभागा महादेवसमीपतः॥ ७०॥ तत्रावाह्य महादेवं नवशक्तिसमन्वितम्॥ पंचभिश्च तथा षड्भिरष्टाभिश्चेष्टदं परम्॥ ॥ ७१॥ पुनरष्टाभिरीशानं दशारे दशभिस्तथा॥ पुनर्वाह्ये च दशभिः संपूज्य प्रणिपत्य च॥ ७२॥ निवेद्य देवदेवाय क्षितिदानफलं लभेत्॥ शालिपिष्टादिभिर्वापि पद्ममालिख्य निर्धनः॥ ७३॥ पूर्वोक्तमखिलं पुण्यं लभते नात्र संशयः॥ द्वादशारं तथालिख्य मंडले पद्ममुत्तमम्॥ ७४॥ रत्नचूर्णादिभिश्चूर्णैस्तथा द्वादशमूर्तिभिः॥ मंडलस्य च मध्ये तु भास्करं स्थाप्य पूजयेत्॥ ७५॥ ग्रहैश्च संवृतं वापि सूर्यसायुज्यमुत्तमम्॥ एवं प्राकृतमप्यार्यो षडस्रं परिकल्प्य च॥७६॥ मध्यदेशे च देवेशीं प्रकृतिं ब्रह्मरूपिणीम्॥ दक्षिणे सत्त्वमूर्तिं च वामतश्च रजोगुणम्॥७७॥ अग्रतस्तु तमोमूर्तिं मध्ये देवीं तथांबिकाम्॥ पंचभूतानि तन्मात्रा पंचकं चैव दक्षिणे॥७८॥ कर्मेंद्रियाणि पंचैव तथा बुद्धींद्रियाणि च॥ उत्तरे विधिवत्पूज्य षडस्रे चैव पूजयेत्॥ ७९॥ आत्मानं चांतरात्मानं युगलं बुद्धिमेव च॥ अहंकारं च महता सर्वयज्ञफलं लभेत्॥ ८०॥ एवं वः कथितं सर्वं प्राकृतं मंडलं परम्॥ अतो वक्ष्यामि विप्रेंद्राः सर्वकामार्थसाधनम्॥ ८१॥ गोचर्ममात्रमालिख्य मंडलं गोमयेन तु॥ चतुरस्रं विधानेन चाद्भिरभ्युक्ष्य मंत्रवित्॥ ८२॥ अलंकृत्य वितानाद्यैश्छत्रैर्वापि मनोरमैः॥ बुद्बुदैरर्धचंद्रैश्च हैमैरश्वत्थपत्रकैः॥ ८३॥ सितैर्विकसितैः पद्मै रक्तैर्नीलोत्पलैस्तथा॥ मुक्तादामैर्वितानांते लंबितैस्तु सितैर्ध्वजैः॥ ८४॥ सितमृत्पात्रकैश्चैव सुश्लक्ष्णैः पूर्णकुंभकैः॥ फलपल्लवमालाभिर्वैजयंतीभिरंशुकैः॥ ८५॥ पंचाशद्दीपमालाभिर्धूपैः पंचविधैस्तथा॥ पंचाशद्दलसंयुक्तमालिखेत्पद्ममुत्तमम्॥८६॥ तत्तद्वर्णैस्तथा चूर्णैः श्वेतचूर्णैरथापि वा॥ एकहस्तप्रमाणेन कृत्वा पद्मं विधानतः॥ ८७॥ कर्णिकायां न्यसेद्देवं देव्या देवेश्वरं भवम्॥ वर्णानि च न्यसेत्पत्रे रुद्रैः प्रागाद्यनुक्रमात्॥ ८८॥ प्रणवादिनमोंतानिसर्ववर्णानि सुव्रताः॥ संपूज्यैवं मुनिश्रेष्ठा गंधपुष्पादिभिः क्रमात्॥ ८९॥ ब्राह्मणान् भोजयेत्तत्र पंचाशद्विधिपूर्वकम्॥ अक्षमालोपवीतं च कुंडलं च कमंडलुम्॥ ९०॥ आसनं च तथा दंडमुष्णीषं वस्त्रमेव च॥ दत्वा तेषां मुनींद्राणां देवदेवाय शंभवे॥ ९१॥

॥ ७७॥ ७८॥ ७९॥ ८०॥ सर्वमंडलं कथयति अत इत्यादिना॥ ८१॥ ८२॥ ८३॥ ८४॥ ८५॥ ८६॥ ८७॥ ८८॥ ८९॥९०॥ ९१॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ताम्रा आभा कांतिर्यस्य तत्ताम्राभम् ॥ २५ ॥ २६॥२७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ रक्तशाल्यन्नं रक्तवर्णतंडुलान्नं पूतं घृतादिभिः मध्वा माक्षिकेन च नक्तभोजनं कृत्वा नवां

पौर्णमास्यां महादेवं स्नाप्य संपूज्य शंकरम् ॥ दद्याद्गोमिथुनं चापि ताम्राभं शूलपाणये ॥ २५ ॥ ब्राह्मणान् भोजयित्वा तु प्रार्थयेत्परमेश्वरम् ॥ स याति चंद्रसायुज्यं नात्र कार्या विचारणा ॥२६॥ चैत्रेपि रुद्रमभ्यर्च्य कुर्याद्वै नक्तभोजनम्॥शाल्यन्नं पयसा युक्तं घृतेन च यथासुखम् ॥२७॥ गोष्ठशायी मुनिश्रेष्ठाः क्षितौ निशि भवं स्मरेत् ॥ पौर्णमास्यां शिवं स्नाप्य दद्याद्गोमिथुनं सितम् ॥ २८॥ ब्राह्मणान् भोजयेच्चैव निर्ऋतेः स्थानमाप्नुयात् ॥ वैशाखे च तथा मासे कृत्वा वै नक्तभोजनम्॥२९॥पौर्णमास्यां भवं स्नाप्य पंचगव्यघृतादिभिः ॥ श्वेतं गोमिथुनं दत्त्वा सोश्वमेधफलं लभेत् ॥ ३० ॥ ज्येष्ठे मासे च देवेशं भवं शर्वमुमापतिम्॥ संपूज्य श्रद्धया भक्त्या कृत्वा वै नक्तभोजनम् ॥३१॥ रक्तशाल्यन्नमध्वा च अद्भिः पूतं घृतादिभिः॥वीरासनी निशार्धं च गवां शुश्रूषणे रतः ॥ ३२ ॥ पौर्णमास्यां तु संपूज्य देवदेवमुमापतिम् ॥ स्नाप्य शक्त्या यथान्यायं चरुं दद्याच्च शूलिने ॥ ३३ ॥ ब्राह्मणान् भोजयित्वा च यथाविभवविस्तरम्॥धूम्रं गोमिथुनं दत्त्वा वायुलोके महीयते ॥३४॥ आषाढे मासि चाप्येवं नक्तभोजनतत्परः ॥ भूरिखंडाज्यसंमिश्रं सक्तुभिश्चैव गोरसम् ॥३५॥ पौर्णमास्यां घृताद्यैस्तु स्नाप्य पूज्य यथाविधि ॥ ब्राह्मणान् भोजयित्वा च श्रोत्रियान् वेदपारगान् ॥ ३६ ॥ दद्याद्गोमिथुनं गौरं वारुणं लोकमाप्नुयात् ॥ श्रावणे च द्विजा मासे कृत्वा वै नक्तभोजनम् ॥ ३७ ॥ क्षीरषष्टिकभक्तेन संपूज्य वृषभध्वजम् ॥ पौर्णमास्यां घृताद्यैस्तु स्नाप्य पूज्य यथाविधि ॥ ३८ ब्राह्मणान् भोजयित्वा च श्रोत्रियान् वेदपारगान् ॥ श्वेताग्रपादं पौंड्रं च दद्याद्गोमिथुनं पुनः ॥ ३९ ॥ स याति वायुसायुज्यं वायुवत्सर्वगो भवेत् ॥ प्राप्ते भाद्रपदे मासे कृत्वैवं नक्तभोजनम् ॥ ४० ॥ हुतशेषं च विप्रेंद्रान्वृक्षमूलाश्रितो दिवा ॥ पौर्णमास्यां तु देवेशं स्नाप्य संपज्य शंकरम् ॥ ४१ ॥ नीलस्कंधं वृषं गां च दत्त्वा भक्त्या यथाविधि ॥ ब्राह्मणान् भोजयित्वा च वेदवेदांगपारगान् ४२ ॥ यक्षलोकमनुप्राप्य यक्षराजो भवेन्नरः ॥ ततश्चाश्वयुजे मासि कृत्वैवं नक्तभोजनम् ॥ ४३ ॥ सघृतं शंकरं पूज्य पौर्णमास्यां च पूर्ववत् ॥ ब्राह्मणान् भोजयित्वा च शिवभक्तान् सदा शुचीन् ॥ ४४ ॥ वृषभं नीलवर्णाभमुरोदेशसमुन्नतम् ॥ गां च दत्त्वा यथान्यायमैशानं लोकमाप्नुयात् ॥ ४५ ॥ कार्तिके च तथा मासे कृत्वा वै नक्तभोजनम् ॥ क्षीरोदनेन साज्येन संपूज्य च भवं प्रभुम् ॥ ४६ ॥

शुश्रूषणे रतः निशार्धं वीरासनी सन्नित्यन्वयः ॥३२॥३३॥३४॥ गोरसं गव्यमश्नित्विति शेषः ॥३५॥३६॥३७॥ षष्टिकभक्तेन षष्टिदिनोत्पन्नशाल्यन्नेनेत्यर्थः ॥३८॥ पौंड्रं चित्रं "पुंड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके ॥ चित्रे भूमौ पुंडरीके" इति विश्वः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ सोमलोकं शिवलोकमित्यर्थः ॥ ५१ ॥ सनियमवर्षनक्तव्रतं कथयति अहिंसेत्यादिना ॥ ५२ ॥ ५३ ॥ क्रमेण पूर्वोक्तपौषमासादिक्रमेण वा व्युत्क्रमेणान्यमासतिथ्यादिक्रमेणापि यः कुर्यात्स ज्ञानयुक्तं योगमवाप्नुयात् ज्ञानस्वरूपमुक्तं कौर्मे–"यया स देवो भगवान् विद्यया वेद्यते परः ॥ साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम् " इति तेनेति शेषः शिवसायुज्यं याति प्राप्नोतीत्यर्थः ॥ ५४ ॥ " श्रीशंकर बहुतोषं सर्वश्रेष्ठं व्रतं नक्तम् ॥ शक्त्या चरितं मह्यं स्याच्च सायुज्यदं

पौर्णमास्यां च विधिवत्स्नाप्य दत्त्वा चरुं पुनः ॥ ब्राह्मणान्भोजयित्वा च यथाविभवविस्तरम् ॥४७॥ दत्त्वा गोमिथुनं चैव कामिलं पूर्ववद्द्विजाः ॥ सूर्यसायुज्यमाप्नोति नात्र कार्या विचारणा ॥४८॥ मार्गशीर्षे च मासेपि कृत्वैवं नक्तभोजनम् ॥ यवान्नेन यथान्यायमाज्यक्षीरादिभिः समम्॥४९॥ पौर्णमास्यां च पूर्वोक्तं कृत्वा शर्वाय शंभवे ॥ ब्राह्मणान् भोजयित्वा च दरिद्रान्वेदपारगान् ॥ ५० ॥ दत्त्वा गोमिथुनं चैव पांडुरं विधिपूर्वकम् ॥ सोमलोकमनुप्राप्य सोमेन सह मोदते ॥५१॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं क्षमा दया ॥ त्रिःस्नानं चाग्निहोत्रं च भूशय्या नक्तभोजनम् ॥५२॥ पक्षयोरुपवासं च चतुर्दश्यष्टमीषु च ॥ इत्येतदखिलं प्रोक्तं प्रतिमासं शिवव्रतम् ॥ ५३ ॥ कुर्याद्वर्षं क्रमेणैव व्युत्क्रमेणापि वा द्विजाः ॥ स याति शिवसायुज्यं ज्ञानयोगमवाप्नुयात् ॥ ५४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे शिवव्रतकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ सूत उवाच ॥ उमामहेश्वरं वक्ष्ये व्रतमीश्वरभाषितम् ॥ नरनार्यादिजंतूनां हिताय मुनिसत्तमाः ॥ १ ॥ पौर्णमास्याममावास्यां चतुर्दश्यष्टमीषु च ॥ नक्तमब्दं प्रकुर्वीत हविष्यं पूजयेद्भवम् ॥ २ ॥ उमामहेशप्रतिमां हेम्ना कृत्वा सुशोभनाम् ॥ राजतीं वाथ वर्षांते प्रतिष्ठाप्य यथाविधि ॥ ३ ॥ ब्राह्मणान् भोजयित्वा च दत्त्वा शक्त्या च दक्षिणाम् ॥ रथाद्यैर्वापि देवेशं नीत्वा रुद्रालयं प्रति ॥ ४ ॥ सर्वातिशयसंयुक्तैश्छत्रचामरभूषणैः ॥ निवेदयेद्व्रतं चैव शिवाय परमेष्ठिने॥५॥स याति शिवसायुज्यं नारी देव्या यदि प्रभो॥अष्टम्यां च चतुर्दश्यां नियता ब्रह्मचारिणी॥६॥

सौम्यम् ॥ १ ॥ " इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां त्र्यशीतितमोऽध्यायः ॥८३॥ " चतुर्भिरधिकेशीतितमे चोमामहेश्वरम् ॥ अन्यानि नरनारीणां व्रतान्युक्तानि वै पृथक् ॥ १ ॥ " सूतः शैवव्रतानि कथयति उमामहेश्वरमित्यादिना ॥ १ ॥ हविष्यं हविष्ययुक्तं नक्तव्रतमब्दं कुर्वीत उमामहेशप्रतिमां हेम्ना वा राजतीः कृत्वा भवं पूजयेदित्यग्रिमस्थैरन्वयः ॥ २ ॥ ३ ॥ ४ ॥ शिवाय यः व्रतं निवेदयेत्स शिवसायुज्यं याति यदि नारी देव्याः सायुज्यं यातीत्यग्रिमेणान्वयः ॥ ५ ॥ शैलादिसनत्कुमारसंवादोपक्रमात्प्रभोरिदं सनत्कुमारसंबोधनं ज्ञेयम् अन्यव्रतानि कथयति अष्टम्यामित्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ भ्रूणहत्यादिदोषनाशकव्रतं कथयति अमावास्यामित्यादिना । अमावास्याममावास्याया मित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ स्त्रीणां व्रते भर्त्रनुज्ञानियमं कथयति नियोगादिति ॥१६॥१७॥१८॥ कृष्णतिलानामेकं भारं दद्यादित्यन्वयः । भारमानमुक्तं

वर्षमेकं न भुंजीत कन्या वा विधवापि वा ॥ वर्षांते प्रतिमां कृत्वा पूर्वोक्तविधिना ततः ॥ ७ ॥ प्रतिष्ठाप्य यथान्यायं दत्त्वा रुद्रालये पुनः ॥ ब्राह्मणान् भोजयित्वा च भवान्या सह मोदते ॥ ८ ॥ या नार्येवं चरेदब्दं कृष्णामेकां चतुर्दशीम् ॥ वर्षांते प्रतिमां कृत्वा येन केनापि वा द्विजाः ॥ ९ ॥ पूर्वोक्तमखिलं कृत्वा भवान्या सह मोदते ॥ अमावास्यां निराहारा भवेदब्दं सुयंत्रिता ॥ १० ॥ शूलं च विधिना कृत्वा वर्षांते विनिवेदयेत् ॥ स्नाप्येशानं यजेद्भक्त्या सहस्रैः कमलैः सितैः ॥ ११ ॥ राजतं कमलं चैव जांबूनदसुकर्णिकम् ॥ दत्त्वा भवाय विप्रेभ्यः प्रदद्याद्दक्षिणामपि ॥ १२ ॥ कामतोपि कृतं पापं भ्रूणहत्यादिकं च यत् ॥ तत्सर्वं शूलदानेन भिद्यान्नारी न संशयः ॥ १३ ॥ सायुज्यं चैव माप्नोति भवान्या द्विजसत्तमाः ॥ कुर्याद्यद्वा नरः सोपि रुद्रसायुज्यमाप्नुयात् ॥ १४ ॥ पौर्णमास्याममावास्यां वर्षमेकमतंद्रिता ॥ उपवासरता नारी नरोपि द्विजसत्तमाः ॥ १५ ॥ नियोगादेव तत्कार्यं भर्तॄणां द्विजसत्तमाः ॥ जपं दानं तपः सर्वमस्वतंत्रा यतः स्त्रियः ॥ १६ ॥ वर्षांते सर्वगंधाढ्यां प्रतिमां संनिवेदयेत् ॥ सा भवान्याश्च सायुज्यं सारूप्यं चापि सुव्रता ॥ १७ ॥ लभते नात्र संदेहः सत्यंसत्यं वदाम्यहम् ॥ कार्तिक्यां वा तु या नारी एकभक्तेन वर्तते ॥ १८ ॥ क्षमाहिंसादिनियमैः संयुक्ता ब्रह्मचारिणी ॥ दद्यात्कृष्णतिलानां च भारमेकमतंद्रिता ॥ १९ ॥ सघृतं सगुडं चैव ओदनं परमेष्ठिने ॥ दत्त्वा च ब्राह्मणेभ्यश्च यथाविभवविस्तरम् ॥ २० ॥ अष्टम्यां च चतुर्दश्यामुपवासरता च सा ॥ भवान्या मोदते सार्धं सारूप्यं प्राप्य सुव्रता ॥ २१ ॥ क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः ॥ सर्वव्रतेष्वयं धर्मः सामान्यो रुद्रपूजनम् ॥ २२ ॥ समासाद्वः प्रवक्ष्यामि प्रतिमासमनुक्रमात् ॥ मार्गशीर्षकमासादि कार्तिक्यांतं यथाक्रमम् ॥ २३ ॥

पाशुपततंत्रे " तलद्वयं तु प्रसृतं तद्वयं कुडवं [illegible] गोमिथुनं खारी तद्वयमुच्यते ॥ खारीत्रयं च भारः स्यादाचितो नवभारतः " इति ॥ १९ ॥ २० ॥ सर्वव्रतधर्मान् कथयति क्षमेति ॥ २१ ॥ २२ ॥ प्रतिमासव्रतं कथयति समासादित्यादिना । मार्गशीर्षकमा

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवं राजतपर्वंतेसादि मार्गशीर्षमासमारभ्य कार्तिक्यांतमित्यनेन प्रतिपौर्णमास्यां व्रतं ज्ञेयम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवं राजतपर्वंते सादि मार्गशीर्षमासमारभ्य कार्तिक्यांतमित्यनेन प्रतिपौर्णमास्यां व्रतं ज्ञेयम् ॥ ३४ ॥ लिंगे मूर्तिः स्वरूपं यस्य तमुमापतिं कृतांजलिपुटेनैव ब्रह्मणा तया विष्णुना संयुक्तमित्यन्वयः ॥ ३५ ॥ हंसेन वराहेण पूर्वोक्त ईश्वरादिप्रतिमासहितमित्यर्थः ॥ ३४ ॥

व्रतं सुविपुलं पुण्यं नंदिना परिभाषितम् ॥ मार्गशीर्षकमासेथ वृषं पूर्णांगमुत्तमम्॥२४॥अलंकृत्य-यथान्यायं शिवाय विनिवेदयेत् ॥ सा च सार्धं भवान्या वै मोदते नात्र संशयः॥२५॥पुष्यमासे तु वै शूलं प्रतिष्ठाप्य निवेदयेत् ॥ पूर्वोक्तमखिलं कृत्वा भवान्या सह मोदते॥२६॥माघमासे रथं कृत्वा सर्वलक्षणलक्षितम् ॥ दद्यात्संपूज्य देवेशं ब्राह्मणांश्चैव भोजयेत्॥२७॥सा च देव्या महाभागा मोदते नात्र संशयः॥ फाल्गुने प्रतिमां कृत्वा हिरण्येन यथाविधि॥२८॥राजतेनापि ताम्रेण यथाविभवविस्तरम्॥प्रतिष्ठाप्य समभ्यर्च्य स्थापयेच्छंकरालये॥२९॥सा च सार्धं महादेव्या मोदते नात्र संशयः ॥ चैत्रे भवं कुमारं च भवानीं च यथाविधि ॥३०॥ ताम्राद्यैर्विधिवत्कृत्वा प्रतिष्ठाप्य यथाविधि॥भवान्या मोदते सार्धं दत्त्वा रुद्राय शंभवे॥३१॥ कृत्वालयं हि कौबेरं राजतं रजतेन वै ॥ ईश्वरामासमायुक्तं गणेशैश्च समंततः ॥ ३२ ॥ सर्वरत्नसमायुक्तं प्रतिष्ठाप्य यथाविधि ॥ स्थापयेत्परमेशस्य भवस्यायतने शुभे ॥३३॥ वैशाखे वै वरेदेवं कैलासाख्यं व्रतोत्तमम् ॥ कैलासपर्वतं प्राप्य भवान्या सह मोदते ॥ ३४ ॥ ज्येष्ठे मासि महादेवं लिंगमूर्तिमुमापतिम् ॥ कृतांजलिपुटेनैव ब्रह्मणा विष्णुना तथा॥३५॥मध्ये भवेन संयुक्तं लिंगमूर्तिं द्विजोत्तमाः ॥ हंसेन च वराहेण कृत्वा ताम्रादिभिः शुभाम् ॥ ३६ ॥ प्रतिष्ठाप्य यथान्यायं ब्राह्मणान् भोजयेत्ततः ॥ शिवाय शिवमासाद्य शिवस्थाने यथाविधि ॥३७॥ ब्राह्मणैः सहितां स्थाप्य देव्याः सायुज्यमाप्नुयात् ॥ आषाढे च शुभे मासे गृहं कृत्वा सुशोभनम् ॥ ३८ ॥ पक्वेष्टकाभिर्विधिवद्यथाविभवविस्तरम् ॥ सर्वबीजरसैश्चापि संपूर्णं सर्वशोभनैः ॥ ३९ ॥ गृहोपकरणैश्चैव मुसलोलूखलादिभिः ॥ दासीदासादिभिश्चैव शयनैरशनादिभिः ॥ ४० ॥ संपूर्णैश्च गृहं वस्त्रैराच्छाद्य च समंततः ॥ देवं घृतादिभिः स्नाप्य महादेवमुमापतिम् ॥ ४१ ॥ ब्राह्मणानां सहस्रं च भोजयित्वा यथाविधि ॥ विद्याविनयसंपन्नं ब्राह्मणं वेदपारगम् ॥ ४२ ॥ प्रथमाश्रमिणं भक्त्या संपूज्य च यथाविधि ॥ कन्यां सुमध्यमां यावत्कालजीवनसंयुताम् ॥ ४३ ॥

मध्ये भवेन संयुक्तं लिंगमूर्तिं ताम्रादिभिः कृत्वा प्रतिष्ठाप्येत्यग्रिमेणान्वयः ॥ ३६ ॥ शिवाय कल्याणाय शिवमासाद्य प्रसाद्य ब्राह्मणैः ऋत्विग्भिः सहितं ब्रह्मादियुक्तां प्रतिमां शिवस्थाने यथाविधि स्थाप्य देव्याः सायुज्यमाप्नुयादित्यग्रिमेणान्वयः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ प्रथमाश्रमिणं ब्रह्मचारिणम् ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ दातारं कन्याप्रदातारमित्यर्थः ॥ ६८

क्षेत्रं गोमिथुनं चैव तद्गृहे च निवेदयेत् ॥ सायनैर्विविधैर्दिव्यैर्मेरुपर्वतसन्निभैः ॥ ४४ ॥ गोलोकं समनुप्राप्य भवान्या सह मोदते ॥ भवान्या सदृशी भूत्वा सर्वकल्पेषु साव्यया ॥ ४५ ॥ भवान्याश्चैव सायुज्यं लभते नात्र संशयः ॥ सर्वधातुसमाकीर्णं विचित्रध्वजशोभितम् ॥ ४६ ॥ निवेदयीत शर्वाय श्रावणे तिलपर्वतम् ॥ वितानध्वजवस्त्राद्यैर्धातुभिश्च निवेदयेत् ॥ ४७ ॥ ब्राह्मणान् भोजयित्वा च पूर्वोक्तमखिलं भवेत् ॥ कृत्वा भाद्रपदे मासि शोभनं शालिपर्वतम् ॥ ४८ ॥ वितानध्वजवस्त्राद्यैर्धातुभिश्च निवेदयेत् ॥ ब्राह्मणान् भोजयित्वा च दापयेच्च यथाविधि ॥ ४९ ॥ सा च सूर्यांशुसंकाशा भवान्या सह मोदते ॥ कृत्वा चाश्वयुजे मासि विपुलं धान्यपर्वतम् ॥ ५० ॥ सुवर्णवस्त्रसंयुक्तं दत्त्वा संपूज्य शंकरम् ॥ ब्राह्मणान् भोजयित्वा च पूर्वोक्तमखिलं भवेत् ॥ ५१ ॥ सर्वधान्यसमायुक्तं सर्वबीजरसादिभिः ॥ सर्वधातुसमायुक्तं सर्वरत्नोपशोभितम् ॥ ५२ ॥ शृंगैश्चतुर्भिः संयुक्तं वितानच्छत्रशोभितम् ॥ गंधमाल्यैस्तथा धूपैर्दीपैश्चापि सुशोभितम् ॥ ५३ ॥ विचित्रैर्नृत्यगेयैश्च शंखवीणादिभिस्तथा ॥ ब्रह्मघोषैर्महापुण्यैः मंगलैश्च विशेषतः ॥ ५४ ॥ महाध्वजाष्टसंयुक्तं विचित्रकुसुमोज्ज्वलम् ॥ नगेंद्रं मेरुनामानं त्रैलोक्याधारमुत्तमम् ॥ ५५ ॥ तस्य मूर्ध्नि शिवं कुर्यान्मध्यतो धातुनैव तु ॥ दक्षिणे च यथान्यायं ब्रह्माणं च चतुर्मुखम् ॥ ५६ ॥ उत्तरे देवदेवेशं नारायणमनामयम् ॥ इंद्रादिलोकपालांश्च कृत्वा भक्त्या यथाविधि ॥ ५७ ॥ प्रतिष्ठाप्य ततः स्नाप्य समभ्यर्च्य महेश्वरम् ॥ देवस्य दक्षिणे हस्ते शूलं त्रिदशपूजितम् ॥ ५८ ॥ वामे पार्श्वे भवान्याश्च कमलं हेमभूषितम् ॥ विष्णोश्च शंखं चक्रं च गदामब्जं प्रयत्नतः ॥ ५९ ॥ ब्रह्मणश्चाक्षसूत्रं च कमंडलुमनुत्तमम् ॥ इंद्रस्य वज्रमग्नेश्च शक्त्याख्यं परमायुधम् ॥ ६० ॥ यमस्य दंडं निर्ऋतेः खड्गं निशिचरस्य तु ॥ वरुणस्य महापाशं नागाख्यं रुद्रमद्भुतम् ॥ ६१ ॥ वायोर्योष्टिं कुबेरस्य गदां लोकप्रपूजिताम् ॥ टंकं चेशानदेवस्य निवेद्यैवं क्रमेण च ॥ ६२ ॥ शिवस्य महतीं पूजां कृत्वा चरुसमन्विताम् ॥ पूजयेत्सर्वदेवांश्च यथाविभवविस्तरम् ॥ ६३ ॥ ब्राह्मणान्भोजयित्वा च पूजां कृत्वा प्रयत्नतः ॥ महामेरुव्रतं कृत्वा महादेवाय दापयेत् ॥ ६४ ॥ महामेरुमनुप्राप्य महादेव्या प्रमोदते ॥ चिरं सायुज्यमाप्नोति महादेव्या न संशयः ॥ ॥ ६५ ॥ कार्तिक्यामपि या नारी कृत्वा देवीमुमां शुभाम् ॥ सर्वाभरणसंपूर्णां सर्वलक्षणलक्षिताम् ॥ ६६ ॥ हेमताम्रादिभिश्चैव प्रतिष्ठाप्य विधानतः ॥ देवं च कृत्वा देवेशं सर्वलक्षणसंयुतम् ॥६७॥ तयोरग्रे हुताशं च स्रुवहस्तं पितामहम् ॥ नारायणं च दातारं सर्वाभरणभूषितम्॥६८॥

॥ ६९ ॥ द्वादशमासव्रतान्युक्त्वा एकभक्तव्रतफलं कथयति एकभक्तमित्यादिना ॥ ७० ॥ ७१ ॥ शिवेन परिभाषितं कथितमित्यर्थः ॥ ७२ ॥ "उमामहेश्वरादीनि व्रतानि श्रीमहेश्वर ॥ मुदे संतु कृपासिंधो श्रुतान्यपि हि ते सदा ॥ १ ॥" इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां चतुरशीतितमोध्यायः ॥ ८४ ॥ "पंचाशीतितमेध्याये

लोकपालैस्तथा सिद्धैः संवृतं स्थाप्य यत्नतः ॥ रुद्रालये व्रतं तस्मै दापयेद्भक्तिपूर्वकम् ॥ ६९ ॥ सा भवान्यास्तनुं गत्वा भवेन सह मोदते ॥ एकभक्तव्रतं पुण्यं प्रतिमासमनुक्रमात् ॥ ७० ॥ मार्गशीर्षकमासादिकार्तिकांतं प्रवर्तितम् ॥ नरनार्यादिजंतूनां हिताय मुनिसत्तमाः ॥ ॥ ७१ ॥ नरः कृत्वा व्रतं चैव शिवसायुज्यमाप्नुयात् ॥ नारी देव्या न संदेहः शिवेन परिभाषितम् ॥ ७२ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे उमामहेश्वरव्रतं नाम चतुरशीतितमोध्यायः ॥ ८४ ॥ सूत उवाच ॥ सर्वव्रतेषु संपूज्य देवदेवमुमापतिम् ॥ जपेत्पंचाक्षरीं विद्यां विधिनैव द्विजोत्तमाः ॥ १ ॥ जपादेव न संदेहो व्रतानां वै विशेषतः ॥ समाप्तिर्नान्यथा तस्माज्जपेत्पंचाक्षरीं शुभाम् ॥ २ ॥ ऋषय ऊचुः ॥ कथं पंचाक्षरी विद्या प्रभावो वा कथं वद ॥ क्रमोपायं महाभाग श्रोतुं कौतूहलं हि नः ॥ ३ ॥ सूत उवाच ॥ पुरा देवेन रुद्रेण देवदेवेन शंभुना ॥ पार्वत्याः कथितं पुण्यं प्रवदामि समासतः ॥ ४ ॥ श्रीदेव्युवाच ॥ भगवन्देवदेवेश सर्वलोकमहेश्वर ॥ पंचाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥ ५ ॥ श्रीभगवानुवाच ॥ पंचाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ॥ न शक्यं कथितुं देवि तस्मात्संक्षेपतः शृणु ॥ ६ ॥ प्रलये समनुप्राप्ते नष्टे स्थावरजंगमे ॥ नष्टे देवासुरे चैव नष्टे चोरगराक्षसे ॥ ७ ॥ सर्वं प्रकृतिमापन्नं त्वया प्रलयमेष्यति ॥ एकोहं संस्थितो देवि न द्वितीयोस्ति कुत्रचित ॥ ८ ॥ तस्मिन्वेदाश्च शास्त्राणि मंत्रे पंचाक्षरे स्थिताः ॥ ते नाशं नैव संप्राप्ता मच्छक्त्या ह्यनुपालिताः ॥ ९ ॥ अहमेको द्विधाप्यासं प्रकृत्यात्मप्रभेदतः ॥ स तु नारायणः शेते देवो मायामयीं तनुम् ॥ १० ॥ आस्थाय योगपर्यंकशयने तोयमध्यगः ॥ तन्नाभिपंकजाज्जातः पंचवक्त्रः पितामहः ॥ ११ ॥

पंचाक्षरविधिः शुभः ॥ विनियोगादिसहितः श्रीशिवोक्तो निरूप्यते ॥ १ ॥" ... ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ प्रलये ब्रह्मदेवनंदिनप्रलय इत्यर्थः ॥ ७ ॥ सर्वं जगत्प्रकृतिमापन्नं प्रकृतौ लीनं त्वया प्रकृत्या सह प्रलयमेष्यति महाप्रलयकाले गमिष्यतीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ पाद्मकल्पवृत्तं कथयति तन्नाभीत्या

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दिना ॥ ११ ॥ दशरुच्यादीनित्यर्थः ॥ १२ ॥ १३ ॥ पंच तत्संख्याकानक्षरान्नाशशून्यवर्णानित्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ पंच वर्णाः अक्षराणि यस्य तम् ॥ १७ ॥ तं तुरीयं शिवमाराधयितुं मंत्ररत्नं लब्ध्वेत्यन्वयः ॥ १८ ॥ ततः आराधनानंतरम् ॥१९॥२०॥२१॥२२॥२३॥ पंचाक्षरं ऋषिछंदोदैवतानां समाहारः। ऋषिछंदोदैवतं शक्तिबीजवच्छक्तिबी

सिसृक्षमाणो लोकान्वै नीनशक्तोऽसहायवान् ॥ दश ब्रह्मा ससर्जादौ मानसानमितौजसः ॥१२॥ तेषां सृष्टिप्रसिद्ध्यर्थं मां प्रोवाच पितामहः ॥ मत्पुत्राणां महादेव शक्तिं देहि महेश्वर ॥ १३ ॥ इति तेन समादिष्टः पंचवक्त्रधरो ह्यहम् ॥ पंचाक्षरान्पंचमुखैः प्रोक्तवान् पद्मयोनये ॥ १४ ॥ तान्पंचवदनैर्गृह्णन् ब्रह्मा लोकपितामहः ॥ वाच्यवाचकभावेन ज्ञातवान्परमेश्वरम् ॥ १५ ॥ वाच्यः पंचाक्षरैर्देवि शिवस्त्रैलोक्यपूजितः ॥ वाचकः परमो मंत्रस्तस्य पंचाक्षरः स्थितः ॥ १६ ॥ ज्ञात्वा प्रयोगं विधिना च सिद्धिं लब्ध्वा तथा पंचमुखो महात्मा ॥ प्रोवाच पुत्रेषु जगद्धिताय मंत्रं महार्थं किल पंचवर्णम् ॥ १७ ॥ ते लब्ध्वा मंत्ररत्नं तु साक्षाल्लोकपितामहात् ॥ तमाराधयितुं देवं परात्परतरं शिवम् ॥ ॥ १८ ॥ ततस्तुतोष भगवान् त्रिमूर्तीनां परः शिवः ॥ दत्तवानखिलं ज्ञानमणिमादिगुणाष्टकम् ॥ १९ ॥ तेपि लब्ध्वा वरान्वि प्रास्तदाराधनकांक्षिणः ॥ मेरोस्तु शिखरे रम्ये मुंजवान्नाम पर्वतः ॥ २० ॥ मत्प्रियः सततं श्रीमान्मद्भूतैः परिरक्षितः ॥ तस्याभ्याशे तप स्तीव्रं लोकसृष्टिसमुत्सुकाः ॥ २१ ॥ दिव्यवर्षसहस्रं तु वायुभक्षाः समाचरन् ॥ तिष्ठंतोनुग्रहार्थाय देवि ते ऋषयः पुरा ॥ २२ ॥ तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामियाम् ॥ पंचाक्षरमृषिश्छंदो दैवतं शक्तिबीजवत् ॥ २३ ॥ न्यासं षडंगं दिग्बंधं विनियोगमशेषतः ॥ प्रोक्त वानहमार्याणां लोकानां हितकाम्यया ॥ २४ ॥ तच्छ्रुत्वा मंत्रमाहात्म्यमृषयस्ते तपोधनाः ॥ मंत्रस्य विनियोगं च कृत्वा सर्वमनुष्ठिताः ॥ ॥ २५ ॥ तन्माहात्म्यात्तदा लोकान्सदेवासुरमानुषान् ॥ वर्णान्वर्णविभागांश्च सर्वधर्मांश्च शोभनान् ॥ २६ ॥ पूर्वकल्पसमुद्भूतान्सृष्टवंतो यथा पुरा ॥ पंचाक्षरप्रभावाच्च लोका वेदा महर्षयः ॥ २७ ॥ तिष्ठंति शाश्वता धर्मा देवाः सर्वमिदं जगत् ॥ तदिदानीं प्रवक्ष्यामि शृणु चावहिताखिलम् ॥ २८ ॥ अल्पाक्षरं महार्थं च वेदसारं विमुक्तिदम् ॥ आज्ञासिद्धमसंदिग्धं वाक्यमेतच्छिवात्मकम् ॥ २९ ॥ नाना सिद्धियुतं दिव्यं लोकचित्तानुरंजकम् ॥ सुनिश्चितार्थं गंभीरं वाक्यं मे पारमेश्वरम् ॥ ३० ॥

जविशिष्टं षडंगन्यासं दिग्बंध अशेषतः विनियोगम् आर्याणां ब्रह्मपुत्राणां लोकानामुत्पद्यमानजीवानां हितकाम्यया हितेच्छया अहं प्रोक्तवानिति पूर्वस्यैरन्वयः ॥२४॥ अनुष्ठिताः अनुष्ठितवंतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

मुखस्य सुख तेन उच्चार्यम् उच्चारणयोग्यमित्यर्थः ॥ ३१ ॥ अस्यैव प्रणवयोगात् षडक्षरत्वं कथयति वेद इत्यादिना ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ मंत्रमाहात्म्यं कथयति किं तस्येत्यादिना॥अत्र विशेष उक्तः शिवरहस्ये-"एवं षडक्षरं देवि, श्रीरुद्रपदमव्ययम् । स्त्रीशूद्राणां नमोंतोयं प्रभवेत मनुः शिवे ॥ आदौ नमः प्रयोक्तव्यं शिवायेति ततः परम् । सैषा पंचाक्षरी विद्या सर्वश्रुतिशिरोगता ॥ तथापि मूलमंत्रोयं किंचिद्भेदसमन्वयात् । तत्रास्य पंचमो वर्णो द्वादशस्वरभूषितः ॥ रहस्यमेतद्वक्ष्यामि गोपनीय मिदं प्रिये । सदाचारविहीनस्य पतितस्यांत्यजस्य च ॥ पंचाक्षरात्परं नास्ति परित्राणं कलौ युगे । गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ॥ अशुचेर्वा शुचेर्वापि मंत्रोयं

मंत्रं सुखमुखोच्चार्यमशेषार्थप्रसाधकम् ॥ तद्बीजं सर्वविद्यानां मंत्रमाद्यं सुशोभनम् ॥ ३१ ॥ अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ॥ वेदः स त्रिगुणातीतः सर्वज्ञः सर्वकृत्प्रभुः ॥ ३२ ॥ ओमित्येकाक्षरं मंत्रे स्थितः सर्वगतः शिवः ॥ मंत्रे षडक्षरे सूक्ष्मे पंचाक्षरतनुः शिवः ॥ ३३ ॥ वाच्यवाचकभावेन स्थितः साक्षात्स्वभावतः ॥ वाच्यः शिवः प्रमेयत्वान्मंत्रस्तद्वाचकः स्मृतः ॥ ३४ ॥ वाच्यवाचकभावोयमनादिः संस्थित स्तयोः ॥ वेदे शिवागमे वापि यत्रयत्र षडक्षरः ॥ ३५ ॥ मंत्रः स्थितः सदा मुख्यो लोके पंचाक्षरो मतः ॥ किं तस्य बहुभिर्मंत्रैः शास्त्रैर्वा बहु विस्तृतैः ॥ ३६ ॥ यस्यैवं हृदि संस्थोयं मंत्रः स्यात्पारमेश्वरः ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥ ३७ ॥ यो विद्वान्वै जपेत्सम्य गधीत्यैव विधानतः ॥ एतावद्धि शिवज्ञानमेतावत्परमं पदम् ॥ ३८ ॥ एतावद्ब्रह्मविद्या च तस्मान्नित्यं जपेद्बुधः ॥ पंचाक्षरैः सप्रणवो मंत्रोयं हृदयं मम ॥ ३९ ॥ गुह्याद्गुह्यतरं साक्षान्मोक्षज्ञानमनुत्तमम् ॥ अस्य मंत्रस्य वक्ष्यामि ऋषिं छंदोधिदैवतम् ॥ ४० ॥ बीजं शक्तिं स्वरं वर्णं स्थानं चैवाक्षरं प्रति ॥ वामदेवो नाम ऋषिः पंक्तिश्छंद उदाहृतः ॥ ४१ ॥ देवता शिव एवाहं मंत्रस्यास्य वरानने ॥ नकारादीनि बीजानि पंचभूतात्मकानि च ॥ ४२ ॥ आत्मानं प्रणवं विद्धि सर्वव्यापिनमव्ययम् ॥ शक्तिस्त्वमेव देवेशि सर्वदेवनमस्कृते ॥ ४३ ॥ त्वदीयं प्रणवं किंचिन्मदीयं प्रणवं तथा ॥ त्वदीयं देवि मंत्राणां शक्तिभूतं न संशयः ॥ ४४ ॥ अकारोकारमकारा मदीये प्रणवे स्थिताः ॥ उकारं च मकारं च अकारं च क्रमेण वै ॥ ४५ ॥ त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम् ॥ ओंकारस्य स्वरोदात्त ऋषिर्ब्रह्मा सितं वपुः ॥ ४६ ॥

न च निष्फलः । अनादिष्टोपि गुरुणा मंत्रोयं न च निष्फलः ॥ सर्वावस्थागतस्यापि मयि भक्तिमतः प्रिये । सिद्ध्यत्येव न संदेहो नापरस्य तु कस्यचित् ॥ न लग्नतिथिनक्षत्रवा रयोगादयः प्रिये । अस्यात्यंतमपेक्षा स्यान्नैव सुप्तः सदोत्थितः ॥ न कदाचन कस्यापि रिपुरेष महामनुः । असाधितः साधितो वा सिद्ध्यत्येव न संशयः ॥ अस्य मंत्रस्य जात्या दीननपेक्ष्य प्रवर्तनात् । तथापि नैनं क्षुद्रेषु फलेषु प्रतियोगिषु ॥ सहसा न नियुंजीत यस्मादेष महाफलः" ॥ इत्यादिबहुविस्तरो दशमेंशे ज्ञेयः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ मदीयं प्रणवं तथा त्वदीयं प्रणवं किंचिद्दीर्घभेदविशिष्टमित्यर्थः ॥ ४४ ॥ प्रणवभेद कथयति अकार इति ॥ ४५ ॥ षडक्षरस्य प्रत्येकाक्षरस्वरऋषिछंदादि

कथयति ओंकारस्येत्यादिना ॥ ४६ ॥ ४७ ॥ ४८ ॥ गौतमो ऋषिरत्र संधिरार्षः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ त्रिविधं न्यासं कथयति उत्पत्तिरित्यादिना ॥ ५४ ॥ ब्रह्म चारीणामित्यत्र दीर्घश्छांदसः ॥ ५५ ॥ ५६ ॥ न्यासक्रमं कथयति न्यसेत्पूर्वमित्यादिना ॥ ५७ ॥ अंगन्यासस्य त्रैविध्यं कथयति मूर्धादीत्यादिना ॥५८ ॥ ५९ ॥ एकविधमेव शरी

छंदो देवी च गायत्री परमात्माधिदेवता ॥ उदात्तः प्रथमस्तद्वच्चतुर्थश्च द्वितीयकः ॥ ४७ ॥ पंचमः स्वरितश्चैव मध्यमो निषधः स्मृतः ॥ नकारः पीतवर्णश्च स्थानं पूर्वमुखं स्मृतम् ॥ ४८ ॥ इंद्रोधिदैवतं छंदो गायत्री गौतमो ऋषिः ॥ मकारः कृष्णवर्णोस्य स्थानं वै दक्षिणामुखम् ॥४९॥ छंदोनुष्टुप् ऋषिश्चात्री रुद्रो दैवतमुच्यते॥शिकारो धूम्रवर्णोस्य स्थानं वै पश्चिमं मुखम् ॥५०॥ विश्वामित्र ऋषिस्त्रिष्टुप् छंदो विष्णुस्तु दैवतम् ॥ वाकारो हेमवर्णोस्य स्थानं चैवोत्तरं मुखम् ॥५१॥ ब्रह्माधिदैवतं छंदो बृहती चांगिरा ऋषिः ॥ यकारो रक्तवर्णश्च स्थानमूर्ध्वं मुखं विराट् ॥५२॥ छंदो ऋषिर्भरद्वाजः स्कंदो दैवतमुच्यते ॥ न्यासमस्य प्रवक्ष्यामि सर्वसिद्धिकरं शुभम् ॥५३॥ सर्वपापहरं चैव त्रिविधो न्यास उच्यते॥ उत्पत्तिस्थि तिसंहारभेदतस्त्रिविधः स्मृतः ॥५४॥ ब्रह्मचारिगृहस्थानां यतीनां क्रमशो भवेत् ॥ उत्पत्तिर्ब्रह्मचारीणां गृहस्थानां स्थितिः सदा ॥ ५५ ॥ यतीनां संहृतिर्न्यासः सिद्धिर्भवति नान्यथा॥ अंगन्यासः करन्यासो देहन्यास इति त्रिधा॥५६॥ उत्पत्त्यादित्रिभेदेन वक्ष्यते ते वरानने॥ न्यसेत्पूर्वं करन्यासं देहन्यासमनंतरम् ॥ ५७ ॥ अंगन्यासं ततः पश्चादक्षराणां विधिक्रमात् ॥ मूर्धादिपादपर्यंतमुत्पत्तिर्न्यास उच्यते ॥ ५८ ॥ पादादिमूर्धपर्यंतं संहारो भवति प्रिये ॥ हृदयास्यगलन्यासः स्थितिर्न्यास उदाहृतः॥५९॥ ब्रह्मचारिगृहस्थानां यतीनां चैव शोभने॥ सशिरस्कं ततो देहं सर्वमंत्रेण संस्पृशेत् ॥ ६० ॥ स देहन्यास इत्युक्तः सर्वेषां सम एव सः॥ दक्षिणांगुष्ठमारभ्य वामांगुष्ठांत एव हि ॥ ६१ ॥ न्यस्यते यत्तदुत्पत्तिर्विपरीतन्तु संहृतिः ॥ अंगुष्ठादिकनिष्ठांतं न्यस्यते हस्तयोर्द्वयोः ॥६२॥ अतीव भोगदो देवि स्थितिन्यासः कुटुंबिनाम् ॥ करन्यासं पुरा कृत्वा देहन्यासमनंतरम् ॥६३॥ अंगन्यासं न्यसेत्पश्चादेष साधारणो विधिः ॥ ओंकारं संपुटीकृत्य सर्वांगेषु च विन्यसेत् ॥६४॥ करयोरुभयोश्चैव दशांगुलिषु क्रमात् ॥ प्रक्षाल्य पादावाचम्य शुचिर्भूत्वा समाहितः ॥ ६५ ॥ प्राङ्मुखोदङ्मुखो वापि न्यासकर्म समाचरेत् ॥ स्मरेत्पूर्वमृषिं छंदो दैवतं बीजमेव च ॥ ६६ ॥ शक्तिं च परमात्मानं गुरुं चैव वरानने ॥ मंत्रेण पाणी संमृज्य तलयोः प्रणवं न्यसेत् ॥ ६७ ॥ अंगुलीनां च सर्वेषां तथा चाद्यंतपर्वसु ॥ सबिं दुकानि बीजानि पंचमध्यमपर्वसु ॥ ६८ ॥ उत्पत्त्यादित्रिभेदेन न्यसेदाश्रमतः क्रमात् ॥ उभाभ्यामेव पाणिभ्यामापादतलमस्तकम् ॥ ६९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

रन्यासं कथयति सशिरस्कमित्यादिना । ततः करन्यासानंतरमित्यर्थः ॥ ६० ॥ करन्यासस्य त्रैविध्यं कथयति दक्षिणांगुष्ठमित्यादिना ॥ ६१ ॥ ६२ ॥ ६३ ॥ ओंकारं संपुटीकृत्य आद्यंतयोरुच्चार्येत्यर्थः ॥ ६४ ॥ जपविधिं कथयति प्रक्षाल्येत्यादिना ॥ ६५ ॥ ऋष्यादिपूर्वं प्रथमं स्मरेदित्यन्वयः ॥ ६६ ॥ ६७ ॥ ६८ ॥ आश्रमतः आश्रमस्य क्रमात् ब्रह्मचर्या

दिपूर्वोक्तक्रमेण न्यसेदित्यन्वयः। करन्यासानंतरं देहन्यासं कथयति उभाभ्यामित्यादिना ॥ ६९ ॥ प्रणवेनैव संपुटं कृत्वेति शेषः। मंत्रेण पंचाक्षरेण उभाभ्यामेव पाणिभ्यामापाद तलमस्तकं देहं संस्पृशेदिति पूर्वस्यैरन्वयः। त्रिविधषडंगन्यासं कथयति मूर्ध्नीत्यादिना ॥ ७० ॥ संहृतिन्यासं कथयति पादयोरिति। पादयोरिति पूर्वान्वितस्यापि चकारादत्रा न्वयो बोध्यः ॥ ७१ ॥ स्थितिन्यासं कथयति हृदय इति। वाचि मुखे इत्यर्थः ॥ ७२ ॥ पूर्वं प्रथममादिर्यस्मिन्यथा तथा एवं नकारादिमुखानि ऊर्ध्वपर्यंतं परिकल्पयेत् स्वदेहे भाव येदित्यर्थः। 'शिवो भूत्वा शिवं यजेत्' इत्युक्तेः ॥ ७३ ॥ षडंगानि अग्रिमोक्तहृदयादीनि न्यसेदित्यन्वयः ॥७४॥७५॥ दिग्बंधं कथयति इत्थमित्यादिना ॥७६॥ ७७ ॥७८ ॥ गले

पादयोरुभयोश्चैव गुह्ये च हृदये तथा ॥ कंठे च मुख मंत्रेण संस्पृशेद्देहं प्रणवेनैव संपुटम् ॥ मूर्ध्नि वक्त्रे च कंठे च हृदये गुह्यके तथा ॥ ७० ॥ पादयोर्मूर्ध्नि वाचि वा ॥ कंठे चैव न्यसेदेव प्रणवादित्रिभेदतः ॥ ७२ ॥ कृत्वांगन्या मध्ये च मूर्ध्नि च प्रणवादिकम् ॥ ७१ ॥ हृदये गुह्यके चैव पादयोर्मूर्ध्नि वाचि वा ॥ कंठे चैव न्यसेदेव प्रणवादित्रिभेदतः ॥ ७२ ॥ कृत्वांगन्या समेवं हि मुखानि परिकल्पयेत् ॥ पूर्वादि चोर्ध्वपर्यंतं नकारादि यथाक्रमम् ॥ ७३ ॥ षडंगानि न्यसेत्पश्चाद्यथास्थानं च शोभनम् ॥ नमः स्वाहा वषड्ढुं च वौषट्फट्कारकैः सह ॥७४॥ प्रणवं हृदयं विद्यान्नकारः शिर उच्यते ॥ शिखामकार आख्यातः शिकारः कवचं तथा ॥७५॥ वाकारो नेत्रमस्त्रं तु यकारः परिकीर्तितः ॥ इत्थमंगानि विन्यस्य ततो वै बंधयेद्दिशः ॥ ७६ ॥ विघ्नेशो मातरो दुर्गा क्षेत्रज्ञो देवता दिशः ॥ आग्नेयादिषु कोणेषु चतुर्ष्वपि यथाक्रमम् ॥ ७७ ॥ अंगुष्ठतर्जन्यग्राभ्यां संस्थाप्य सुमुखं शुभम् ॥ रक्षध्वमिति चोक्त्वा तु नमस्कुर्यात्पृथक्पृथक् ॥ ७८ ॥ गले मध्ये तथांगुष्ठे तर्जन्याद्यंगुलीषु च ॥ अंगुष्ठेन करन्यासं कुर्यादेव विचक्षणः ॥ ७९ ॥ एवं न्यासमिमं प्रोक्तं सर्वपापहरं शुभम् ॥ सर्वसिद्धिकरं पुण्यं सर्वरक्षाकरं शिवम् ॥ ८० ॥ न्यस्ते मंत्रेथ सुभगे शंकरप्रतिमो भवेत् ॥ जन्मांतरकृतं पापमपि नश्यति तत्क्षणात् ॥ ८१ ॥ एवं विन्यस्य मेधावी शुद्धकायो दृढव्रतः ॥ जपेत्पंचाक्षरं मंत्रं लब्ध्वाचार्यप्रसादतः ॥ ८२ ॥ अतः परं प्रवक्ष्यामि मंत्रसंग्रहणं शुभे ॥ यं विना निष्फलं नित्यं येन वा सफलं भवेत् ॥ ८३ ॥ आज्ञाहीनं क्रियाहीनं श्रद्धाहीनममानसम् ॥ आज्ञप्तं दक्षिणाहीनं सदा जप्तं च निष्फलम् ॥८४॥ आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं सुमानसम् ॥ एव च दक्षिणासिद्धं मंत्रं सिद्धं यतस्ततः ॥८५॥ उपगम्य गुरु विप्रं मंत्रतत्त्वार्थवेदिनम् ॥ ज्ञानिनं सद्गुणोपेतं ध्यानयोगपरायणम् ॥ ८६ ॥

तथा मध्येंगुष्ठे एवं तर्जन्याद्यंगुलीषु च करन्यास विचक्षणः कुर्यादित्यन्वयः ॥ ७९ ॥ न्यासफलं कथयति एवमित्यादिना ॥ ८० ॥ ८१ ॥ ८२ ॥ मंत्रग्रहणविधिं कथयति अत इत्यादिना ॥ ८३ ॥ आज्ञाहीनं गुर्वाज्ञारहितं क्रियाहीनमाचारवर्जित श्रद्धाहीनं भक्तिरहितम् अमानसममनःपूर्वम् आज्ञप्तमन्यनियोगकृतं दक्षिणाहीनं ब्राह्मणद्वारा कृतं सद्दक्षिणा वर्जितमित्यर्थः। सदा प्रत्यहं नियमेन अजस्रं वा सदा सर्वकालं जप्तं च यतः निष्फलं ततः आज्ञादिसिद्धं सिद्धं ज्ञेयमिति शेषमादायाग्रिमेणान्वयः ॥ ८४ ॥ ८५ ॥ शिष्यविधिं कथयति उपगम्येत्यादिना ॥ ८६ ॥ ८७ ॥८८॥८९॥९०॥९१॥ गुरुविधिं कथयति एवमित्यादिना ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ज्ञानं मंत्रार्थतत्त्वज्ञानमित्यर्थः ॥ ९७ ॥ ॥ ९८ ॥ पुरश्चरणजपसंख्यां तन्नियमांश्च कथयति जपेदिति ॥ ९९ ॥ तयोः पुरश्चरणजापिनित्यजापकयोरन्यतरः भवेदित्यन्वयः ॥ १०० ॥ १ ॥ २ ॥ जपस्याद्यंतयोरपि प्राणा

तोषयेत्तं प्रयत्नेन भावशुद्धिसमन्वितः ॥ वाचा च मनसा चैव कायेन द्रविणेन च ॥ ८७ ॥ आचार्यं पूजयेच्छिष्यः सर्वदातिप्रयत्नतः ॥ हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ॥ ८८ ॥ भूषणानि च वासांसि धान्यानि विविधानि च ॥ एतानि गुरवे दद्याद्भक्त्या च विभवे सति ॥ ८९ ॥ वित्तशाठ्यं न कुर्वीत यदीच्छेत्सिद्धिमात्मनः ॥ पश्चान्निवेदयेद्देवि आत्मानं सपरिच्छदम् ॥ ९० ॥ एवं संपूज्य विधिवद्यथाशक्ति त्ववंचयन् ॥ आददीत गुरोर्मंत्रं ज्ञानं चैव क्रमेण तु ॥ ९१ ॥ एवं तुष्टो गुरुः शिष्यं पूजितं वत्सरोषितम् ॥ शुश्रूषुमनहंकारमुपवासकृशं शुचिम् ॥ ९२ ॥ स्नापयित्वा तु शिष्याय ब्राह्मणानपि पूज्य च ॥ समुद्रतीरे नद्यां च गोष्ठे देवालयेपि वा ॥ ९३ ॥ शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ ॥ नक्षत्रे शुभयोगे च सवदा दोषवर्जिते ॥ ९४ ॥ अनुगृह्य तता दद्याच्छिवज्ञानमनुत्तमम् ॥ स्वरेणोच्चारयेत्सम्यगेकांतपि प्रस न्नधीः ॥ ९५ ॥ उच्चार्योच्चारयित्वा तु आचार्यः सिद्धिदः स्वयम् ॥ शिवं चास्तु शुभं चास्तु शोभनोस्तु प्रियोस्त्विति ॥ ९६ ॥ एवं लब्ध्वा परं मंत्रं ज्ञानं चैव गुरोस्ततः ॥ जपेन्नित्यं ससंकल्पं पुरश्चरणमेव च ॥ ९७ ॥ यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम् ॥ अनश्नंस्तत्परो भूत्वा स याति परमां गतिम् ॥ ९८ ॥ जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ॥ नक्ताशी संयमी यश्च पौरश्चरणिकः स्मृतः ॥ ९९ ॥ पुरश्चरणजापी वा अपि वा नित्यजापकः ॥ अचिरात्सिद्धिकांक्षी तु तयोरन्यतरो भवेत् ॥ १०० ॥ यः पुरश्चरणं कृत्वा नित्यजापी भवेन्नरः ॥ तस्य नास्ति समो लोके स सिद्धः सिद्धिदो वशी ॥ १ ॥ आसनं रुचिरं बद्ध्वा मौनी चैकाग्रमानसः ॥ प्राङ्मुखोदङ्मुखो वापि जपेन्मंत्रमनुत्तमम् ॥ २ ॥ आद्यंतयोर्जपस्यापि कुर्याद्वै प्राणसंयमान् ॥ तथा चांते जपेद्बीजं शतमष्टोत्तरं शुभम् ॥ ३ ॥ चत्वारिंशत्समावृत्ति प्राणानायम्य संस्मरेत् ॥ पंचाक्षरस्य मंत्रस्य प्राणायाम उदाहृतः ॥ ४ ॥

यामान् श्रींह्रींन्नित्यं यः कुर्यात्तथांत अष्टोत्तरशतं बीजं जपेदित्यन्वयः ॥ ३ ॥ प्राणानायम्य पंचाक्षरस्य मंत्रस्य चत्वारिंशत्समावृत्तिसंस्मरेदयमिति शेषः। प्राणायाम उदाहृत इत्यन्वयः ॥ ४ ॥ ५ ॥ जपस्थानफलं कथयति गृह इत्यादिना ॥ ६ ॥ समुद्रतीरे देवह्रदेति पाठेक्षराधिक्यं छांदसम् ॥ ७ ॥ ८ ॥ जपमालाफलं कथयति अंगुलीत्यादिना ॥ ९ ॥ ११० ॥ ११ ॥ मणिसंख्योद्देशं कथयति पंचविंशतीति पंचविंशतितत्संख्यमणिजप्तमित्यर्थः ॥ १२ ॥ दिक्फलं कथयति तादिति ॥ १३ ॥ अंगुलिफलं कथयति अंगुष्ठमि

प्राणायामाद्भवेत्क्षिप्रं सर्वपापपरिक्षयः ॥ इंद्रियाणां वशित्वं च तस्मात्प्राणांश्च संयमेत् ॥ ५ ॥ गृहे जपः समं विद्याद्गोष्ठे शतगुणं भवेत् ॥ नद्यां शतसहस्रं तु अनंतः शिवसन्निधौ ॥ ६ ॥ समुद्रतीरे देवह्रदे गिरौ देवालयेषु च ॥ पुण्याश्रमेषु सर्वेषु जपः कोटिगुणो भवेत् ॥ ७ ॥ शिवस्य सन्निधाने च सूर्यस्याग्रे गुरोरपि ॥ दीपस्य गोर्जलस्यापि जपकर्म प्रशस्यते ॥ ८ ॥ अंगुलीजपसंख्यानमेकमेकं शुभानने ॥ रेखैरष्टगुणं प्रोक्तं पुत्रजीवफलैर्दश ॥ ९ ॥ शतं वै शंखमणिभिः प्रवालैश्च सहस्रकम् ॥ स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥ ११० ॥ पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ॥ कुशग्रंथ्या च रुद्राक्षैरनंतगुणमुच्यते ॥ ११ ॥ पंचविंशति मोक्षार्थं सप्तविंशति पौष्टिकम् ॥ त्रिंशच्च धनसंपत्त्यै पंचाशत्त्वाभिचारिकम् ॥ १२ ॥ तत्पूर्वाभिमुखं वश्यं दक्षिणं चाभिचारिकम् ॥ पश्चिमं धनदं विद्यादुत्तरं शांतिकं भवेत् ॥ १३ ॥ अंगुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशनी ॥ मध्यमा धनदा शांतिं करोत्येषा ह्यनामिका ॥ १४ ॥ कनिष्ठा रक्षणीया सा जपकर्मणि शोभने ॥ अंगुष्ठेन जपेज्जप्यमन्यैरंगुलिभिः सह ॥ १५ ॥ अंगुष्ठेन विना कर्म कृतं तदफलं यतः ॥ शृणुष्व सर्वयज्ञेभ्यो जपयज्ञो विशिष्यते ॥ १६ ॥ हिंसया ते प्रवर्तंते जपयज्ञो न हिंसया ॥ यावंतः कर्म यज्ञाः स्युः प्रदानानि तपांसि च ॥ १७ ॥ सर्वे ते जपयज्ञस्य कलां नार्हंति षोडशीम् ॥ माहात्म्यं वाचिकस्यैव जपयज्ञस्य कीर्तितम् ॥ १८ ॥ तस्माच्छतगुणोपांशुः सहस्रो मानसः स्मृतः ॥ यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ॥ १९ ॥ मंत्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ॥ शनै रुच्चारयेन्मंत्रमीषदोष्ठौ तु चालयेत् ॥ १२० ॥ किंचित्कर्णांतरं विद्यादुपांशुः स जपः स्मृतः ॥ धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ॥ २१ ॥ शब्दार्थं चिंतयेद्भूयः स तूक्तो मानसो जपः ॥ त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥ २२ ॥ भवेद्यज्ञविशेषेण वैशिष्ट्यं तत्फलस्य च ॥ जपेन देवता नित्यं स्तूयमाना प्रसीदति ॥२३॥ प्रसन्ना विपुलान् भोगान्दद्यान्मुक्तिं च शाश्वतीम् ॥ यक्षरक्षःपिशाचाश्च ग्रहाः सर्वे च भीषणाः जापिनं नोपसर्पंति भयभीताः समंततः ॥ २४ ॥ जपेन पापं शमयेदशेषं यत्तत्कृतं जन्मपरंपरासु ॥ जपेन भोगान् जयते च मृत्युं जपेन सिद्धिं लभते च मुक्तिम् ॥ २५ ॥ एवं लब्ध्वा शिवं ज्ञानं ज्ञात्वा जपविधिक्रमम् ॥ २६ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

त्यादिना ॥ १४ ॥ १५ ॥ जपयज्ञमाहात्म्यं कथयति शृणुष्वेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ जपन मृत्युं जयते भो

गान् सिद्धिं मुक्तिं च लभते इत्यन्वयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ आचार निरूपयति सदाचारमित्यादिना ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ पापहेतुकं मनृतादिवाचा तथा मनसापि क्वचिन्न कुर्वीतेत्यग्रिमेणान्वयः ॥ ३७ ॥ ३८ ॥ यातः यामः प्रहरो यस्य तद्यातयामान्नं गणान्नं बहुस्वामिकमन्नं समुदायान्नं बहुसमुदायार्थकृतमन्नमि

सदाचारी जपन्नित्यं ध्यायन् भद्रं समश्नुते ॥ सदाचारं प्रवक्ष्यामि सम्यग्धर्मस्य साधनम् ॥२७॥ यस्मादाचारहीनस्य साधनं निष्फलं भवेत् ॥ आचारः परमो धर्म आचारः परमं तपः ॥२८॥ आचारः परमा विद्या आचारः परमा गतिः ॥ सदाचारवतां पुंसां सर्वत्राप्यभयं भवेत् ॥ २९ ॥ तद्वदाचारहीनानां सर्वत्रैव भयं भवेत् ॥ सदाचारेण देवत्वमृषित्वं च वरानने ॥ १३० ॥ उपयांति कुयोनित्वं तद्वदाचारलंघनात ॥ आचारहीनः पुरुषो लोके भवति निंदितः ॥३१॥ तस्मात्संसिद्धिमन्विच्छन्सम्यगाचारवान् भवेत् ॥ दुर्वृत्तो शुद्धिभूयिष्ठो पापीयाञ्ज्ञानदूषकः ॥३२॥ वर्णाश्रम विधानोक्तं धर्मं कुर्वीत यत्नतः ॥३३॥ यस्य यद्विहितं कर्म तत्कुर्वन्मत्प्रियः सदा ॥ संध्योपासनशीलः स्यात्सायं प्रातः प्रसन्नधीः ॥ ३४ ॥ उदयास्तमयात्पूर्वमारभ्य विधिना शुचिः ॥ कामान्मोहाद्भयाल्लोभात्संध्यां नातिक्रमेद्द्विजः ॥ ३५ ॥ संध्यातिक्रमणाद्विप्रो ब्राह्मण्यात्पतते यतः ॥ असत्यं न वदेत्किंचिन्न सत्यं च परित्यजेत् ॥ ३६ ॥ यत्सत्यं ब्रह्म इत्याहुरसत्यं ब्रह्मदूषणम् ॥ अनृतं परुषं शाठ्यं पैशुन्यं पापहेतुकम् ॥३७॥ परदारान्परद्रव्यं परहिंसां च सर्वदा ॥ क्वचिच्चापि न कुर्वीत वाचा च मनसा तथा ॥ ३८ ॥ शूद्रान्नं यातयामान्नं नैवेद्यं श्राद्धमेव च ॥ गणान्नं समुदायान्नं राजान्नं च विवर्जयेत् ॥ ३९ ॥ अन्नशुद्धौ सत्त्वशुद्धिर्न मृदा न जलेन वै ॥ सत्त्वशुद्धौ भवेत्सिद्धिस्ततोऽन्नं परिशोधयेत् ॥ १४० ॥ राजप्रतिग्रहैर्दग्धान्ब्राह्मणान्ब्रह्मवादिनः ॥ स्विन्नानामपि बीजानां पुनर्जन्म न विद्यते ॥ ४१ ॥ राजप्रतिग्रहो घोरो बुद्धा भादौ विषोपमः ॥ बुधेन परिहर्तव्यः श्वमांसं चापि वर्जयेत् ॥ ४२ ॥ अस्नात्वा न च भुंजीयादजपोऽग्निमपूज्य च ॥ पर्णपृष्ठे न भुंजीयाद्रात्रौ दीपं विना तथा ॥ ४३ ॥ भिन्नभांडे च रथ्यायां पतितानां च सन्निधौ ॥ शूद्रशेषं न भुंजीयात्सहान्नं शिशुकैरपि ॥ ४४ ॥ शुद्धान्नं स्निग्धमश्नीयात्संस्कृतं चाभिमंत्रितम् ॥ भोक्ता शिव इति स्मृत्वा मौनी चैकाग्रमानसः ॥ ४५ ॥ आस्येन न पिबेत्तोयं तिष्ठन्नंजलिनापि वा ॥ वामहस्तेन शय्यायां तथैवान्यकरेण वा ॥ ४६ ॥ विभीतकार्ककारंजस्नुहिच्छायां न चाश्रयेत् ॥ स्तंभदीपमनुष्याणामन्येषां प्राणिनां तथा ॥ ४७ ॥

त्यर्थः ॥ ३९ ॥ १४० ॥ स्विन्नानां भंजितानां बीजानां धान्यानां पुनर्जन्म फलप्रादुर्भावः न विद्यते तद्वद्ब्रह्मवादिनोऽपि ब्राह्मणान् राजप्रतिग्रहैर्दग्धान्विद्यादिति शेषः ॥ ४१ ॥ ४२ ॥ भोजनविधिं कथयति अस्नात्वेत्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ उदकपाननियमान् कथयति आस्येनेति ॥ ४६ ॥ वर्ज्यच्छायां कथयति विभीतकेति । स्नुहिच्छायां सहुण्डदुमच्छा यामित्यर्थः ॥ ४७ ॥ अन्यानपि बहुतियमान्कथयति एक इत्यादिना ॥ ४८ ॥ विमुखः प्रत्यङ्मुख इत्यर्थः ॥ ४९ ॥ अभेरुच्छ्रयमूर्ध्वासन इत्यर्थः ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ मार्जारनिषेधः कस्तूरीमार्जाराद्यरण्यमार्जारपरो ज्ञेयः ॥ ५४ ॥ तन्मार्जारसहभोजितान्नं स्फिग्वात कटिवातं "स्त्रियां स्फिचौ कटीप्रोथौ" इत्यमरः ॥ ५५ ॥ ५६ ॥

एको न गच्छेदध्वानं बाहुभ्यां नोत्तरेन्नदीम् ॥ नावरोहेत कूपादिं नारोहेद्दुच्चपादपान् ॥४८॥ सूर्याग्निजलदेवानां गुरूणां विमुखः शुभे ॥ न कुर्यादिह कार्याणि जपकर्म शुभानि वा ॥४९॥ अग्नौ न तापयेत्पादौ हस्तं पद्भ्यां न संस्पृशेत् ॥ अग्नेर्नोच्छ्रयमासीत नाग्नौ किंचिन्मलं त्यजेत ॥१५०॥ न जलं ताडयेत्पद्भ्यां नांभस्यंगमलं त्यजेत् ॥ मलं प्रक्षालयेत्तीरे प्रक्षाल्य स्नानमाचरेत् ॥५१॥ नखाग्रकेशनिर्धूतस्नानवस्त्रघटोदकम् ॥ अश्रीकरं मनुष्याणामशुद्धं संस्पृशेद्यदि ॥५२॥ अजाश्वानखरोष्ट्राणां मार्जनात्तुपरेणुकान् ॥ संस्पृशेद्यदि मूढात्मा श्रियं हंति हरेरपि ॥५३॥ मार्जारश्च गृहे यस्य सोऽप्यंत्यजसमो नरः ॥ भोजयेद्यस्तु विप्रेंद्रान्मार्जारान्संनिधौ यदि ॥५४॥ तच्चांडालसमं ज्ञेयं नात्र कार्या विचारणा ॥ स्फिग्वातं शूर्पवातं च वातं प्राणमुखानिलम् ॥५५॥ सुकृतानि हरंत्येते संस्पृष्टाः पुरुषस्य तु ॥ उष्णीषी कंचुकी नग्नो मुक्तकेशो मलावृतः ॥५६॥ अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्कंचित ॥ क्रोधो मदः क्षुधा तंद्रा निष्ठीवनविजृंभणे ॥ ५७ ॥ श्वनीचदर्शनं निद्रा प्रलापास्ते जपद्विषः ॥ एतेषां संभवे वापि कुर्यात्सूर्यादिदर्शनम् ॥ ५८ ॥ आचम्य वा जपेच्छेषं कृत्वा वा प्राणसंयमम् ॥ सूर्योऽग्निश्चंद्रमाश्चैव ग्रहनक्षत्रतारकाः ॥ ५९ ॥ एते ज्योतींषि प्रोक्तानि विद्वद्भिर्ब्राह्मणैस्तथा ॥ प्रसार्य पादौ न जपेत्कुक्कुटासन एव च ॥ ६० ॥ अनासनः शयानो वा रथ्यायां शूद्रसन्निधौ ॥ रक्तभूम्यां च खट्वायां न जपेज्जापकस्तथा ॥ ६१ ॥ आसनस्थो जपेत्सम्यक् मंत्रार्थगतमानसः ॥ कौशेयं व्याघ्रचर्म वा चैलं तौलमथापि वा ॥ ६२ ॥ दारवं तालपर्णं वा आसनं परिकल्पयेत् ॥ त्रिसंध्यं तु गुरोः पूजा कर्तव्या हितमिच्छता ॥ ६३ ॥ यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ॥ यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ॥ ६४ ॥ शिवविद्यागुरोस्तस्माद्भक्त्या च सदृशं फलम् ॥ सर्वदेवमयो देवि सर्वशक्तिमयो हि सः ॥ ६५ ॥ सगुणो निर्गुणो वापि तस्याज्ञां शिरसा वहेत् ॥ श्रेयोर्थी यस्तु गुर्वाज्ञां मनसापि न लंघयेत् ॥ ६६ ॥ गुर्वाज्ञापालकः सम्यक् ज्ञानसंपत्तिमश्नुते ॥ गच्छंस्तिष्ठन्स्वपन् भुंजन्यद्यत्कर्म समाचरेत ॥ ६७ ॥ समक्षं यदि तत्सर्वं कर्तव्यं गुर्वनुज्ञया ॥ गुरोर्देवसमक्षं वा न यथेष्टासनो भवेत् ॥ ६८ ॥ गुरुर्देवो यतः साक्षात्तद्गृहं देवमंदिरम् ॥ पापिनां च यथासंगात्तत्पापैः पतनं भवेत् ॥ ६९ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ १६० ॥ ६१ ॥ व्याघ्रचर्म अस्यास्तीत्यर्शआद्यच् ॥ ६२ ॥ ६३ ॥ गुरुमाहात्म्यादि कथयति यो गुरुरित्यादिना ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ॥ १७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ निर्गुणस्य भावः नैर्गुण्यं तच्छतं भजतीति नैर्गुण्यशतभाक् ॥ ७८ ॥ ७९ ॥ १८० ॥ कुर्वन्नहितमिति शेषः

तद्वदाचार्यसंगेन तद्धर्मफलभाग्भवेत् ॥ यथैव वह्निसंपर्कान्मलं त्यजति कांचनम् ॥१७०॥ तथैव गुरुसंपर्कात्पापं त्यजति मानवः ॥ यथा वह्निसमीपस्थो घृतकुंभो विलीयते ॥७१॥ तथा पापं विलीयेत आचार्यस्य समीपतः ॥ यथा प्रज्वलितो वह्निर्विष्ठा काष्ठं च निर्दहेत् ॥७२॥ गुरुस्तुष्टो दहत्येवं पापं तन्मंत्रतेजसा ॥ ब्रह्मा हरिस्तथा रुद्रो देवाश्च मुनयस्तथा ॥७३॥ कुर्वंत्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ कर्मणा मनसा वाचा गुरोः क्रोधं न कारयेत् ॥७४॥ तस्य क्रोधेन दह्यंते आयुःश्रीज्ञानसत्क्रियाः ॥ तत्कार्यं ये करिष्यंति तेषां यज्ञाश्च निष्फलाः ॥७५॥ जपान्यानियमाश्चैव नात्र कार्या विचारणा ॥ गुरोर्विरुद्धं यद्वाक्यं न वदेत्सर्वयत्नतः ॥७६॥ वदेद्यदि महामोहाद्रौरवं नरकं व्रजेत् ॥ चित्तेनैव च वित्तेन तथा वाचा च सुव्रताः ॥७७॥ मिथ्या न कारयेद्देवि क्रियया च गुरोः सदा ॥ दुर्गुणे ख्यापित तस्य नैर्गुण्यशतभाग्भवेत् ॥७८॥ गुणे तु ख्यापिते तस्य सार्वगुण्यफलं भवेत् ॥ गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा ॥७९॥ असमक्षं समक्षं वा गुरोः कार्यं समाचरेत् ॥ गुरोर्हितं प्रियं कुर्यान्मनोवाक्कायकर्मभिः ॥१८०॥ कुर्वन्पतत्यधो गत्वा तत्रैव परिवर्तते ॥ तस्मात्स सर्वदोपास्यो वदनीयश्च सर्वदा ॥ ८१ ॥ समीपस्थोऽप्यनुज्ञाप्य वदेत्तद्विमुखो गुरुम् ॥ एवमाचारवान् भक्तो नित्यं जपपरायणः ॥ ८२ ॥ गुरुप्रियकरो मंत्रं विनियोक्तुं ततोऽर्हति ॥ विनियोगं प्रवक्ष्यामि सिद्धमंत्रप्रयोजनम् ॥ ८३ ॥ दौर्बल्यं याति तन्मंत्रं विनियोगमजानतः ॥ यस्य येन वियुंजीत कार्येण तु विशेषतः ॥ ८४ ॥ विनियोगः स विज्ञेय ऐहिकामुष्मिकं फलम् ॥ विनियोगजमायुष्यमारोग्यं तनुनित्यता ॥ ८५ ॥ राज्यैश्वर्यं च विज्ञानं स्वर्गो निर्वाण एव च ॥ प्रोक्षणं चाभिषेकं च अघमर्षणमेव च ॥ ८६ ॥ स्नाने च संध्ययोश्चैव कुर्यादेकादशेन वै ॥ शुचिः पर्वतमारुह्य जपेल्लक्षमतंद्रितः ॥ ८७ महानद्यां द्विलक्षं तु दीर्घमायुरवाप्नुयात् ॥ दूर्वांकुरास्तिलावाणी गुडूची घुटिका तथा ॥ ८८ ॥ तेषां तु दशसाहस्रं होममायुष्यवर्धनम् ॥ अश्वत्थवृक्षमाश्रित्य जपेल्लक्षद्वयं सुधीः ॥ ८९ ॥ शनैश्चरदिने स्पृष्ट्वा दीर्घायुष्यं लभेन्नरः ॥ शनैश्चरदिनेऽश्वत्थं पाणिभ्यां संस्पृशेत्सुधीः ॥१९०॥ जपेदष्टोत्तरशतं सोपमृत्युहरो भवेत् ॥ आदित्याभिमुखो भूत्वा जपेल्लक्षमनन्यधीः ॥ ९१ ॥ अर्कैरष्टशतं नित्यं जुह्वन्व्याधेर्विमुच्यते ॥ समस्तव्याधिशांत्यर्थं पलाशसमिधैर्नरः ॥ ९२ ॥

॥ ८१ ॥ गुरुमनुज्ञाप्य विज्ञाप्य तस्माद्विमुख [illegible] ॥ ८५ ॥ ८६ ॥ स्नाने संध्ययोश्च प्रोक्षणादिकमेकादशेन तत्संख्यमंत्रजपेन कुर्यादिति पूर्वस्यैरन्वयः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ अर्कैरर्कसमिद्भिः ॥ ९२ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अर्कसन्निधौ सूर्यसमीपतः॥९३॥एकादशेनाभिमंत्रितमेवान्नं भुंजीयादित्यन्वयः ॥९४ ॥ ९५ ॥ ९६ ॥९७ ॥ अष्टाविंशज्जपित्वातावत्पालाशैः हुत्वान्नमश्नीयादेवं वा आरोग्यमश्नुत

हुत्वा दशसहस्रं तु निरोगी मनुजो भवेत् ॥ नित्यमष्टशतं जप्त्वा पिबेदंभोर्कसन्निधौ ॥ ९३ ॥ औदर्यैर्व्याधिभिः सर्वैर्मासेनैकेन मुच्यते ॥ एकाद शेन भुंजीयादन्नं चैवाभिमंत्रितम् ॥ ९४ ॥ भक्ष्यं चान्यत्तथा पेयं विषमप्यमृतं भवेत् ॥ जपेल्लक्षं तु पूर्वाह्णे हुत्वा चाष्टशतेन वै ॥ ९५ ॥ सूर्यं नित्यमुपस्थाय सम्यगारोग्यमाप्नुयात्॥ नदीतोयेन संपूर्णं घटं संस्पृश्य शोभनम् ॥९६॥ जप्त्वायुतं च तत्स्नानाद्रोगाणां भेषजं भवेत् ॥ अष्टा विंशज्जपित्वान्नमश्नीयादन्वहं शुचिः॥९७॥हुत्वा च तावत्पालाशैरेवं वारोग्यमश्नुते ॥ चन्द्रसूर्यग्रहे पूर्वमुपोष्य विधिना शुचिः॥९८॥यावद्ग्रहणमोक्षं तु तावन्नद्यां समाहितः ॥ जपेत्समुद्रगामिन्यां विमोक्षे ग्रहणस्य तु ॥ ९९ ॥ अष्टोत्तरसहस्रेण पिबेद्ब्राह्मीरसं द्विजाः ॥ ऐहिकां लभते मेधां सर्व शास्त्रधरां शुभाम् ॥ २०० ॥ सारस्वती भवेद्देवी तस्य वागतिमानुषी ॥ ग्रहनक्षत्रपीडासु जपेद्भक्त्यायुतं नरः ॥ १ ॥ हुत्वा चाष्टसहस्रं तु ग्रहपी डां व्यपोहति ॥ दुःस्वप्नदर्शने स्नात्वा जपेद्वै चायुतं नरः ॥२॥ घृतेनाष्टशतं हुत्वा सद्यः शांतिर्भविष्यति ॥ चंद्रसूर्यग्रहे लिंगं समभ्यर्च्य यथा विधि ॥ ३ ॥ यत्किंचित्प्रार्थयेद्देवि जपेदयुतमादरात् ॥ संनिधावस्य देवस्य शुचिः संयतमानसः ॥ ४ ॥ सर्वान्कामानवाप्नोति पुरुषो नात्र संशयः ॥ गजानां तुरगाणां तु गोजातीनां विशेषतः ॥५॥ व्याध्यागमे शुचिर्भूत्वा जुहुयात्समिधाहुतिम् ॥ मासमभ्यर्च्य विधिनाऽयुतं भक्तिसम न्वितः ॥ ६ ॥ तेषामृद्धिश्च शांतिश्च भविष्यति न संशयः ॥ उत्पाते शत्रुबाधायां जुहुयादयुतं शुचिः ॥७॥ पालाशसमिधैर्देवि तस्य शांति र्भविष्यति ॥ आभिचारिकबाधायामेतद्देवि समाचरेत् ॥ ८ ॥ प्रत्यग् भवति तच्छक्तिः शत्रोः पीडा भविष्यति ॥ विद्वेषणार्थं जुहुयाद्बिभी तसमिधाष्टकम् ॥ ९ ॥ अक्षरप्रातिलोम्येन आर्द्रेण रुधिरेण वा ॥ विषेण रुधिराभ्यक्तो विद्वेषणकरं नृणाम् ॥ २१० ॥ प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशुद्धये ॥ पापशुद्धिर्यथा सम्यक् कर्तुमभ्युद्यतो नरः ॥ ११ ॥ पापशुद्धिर्यतः सम्यग् ज्ञानसंपत्तिहेतुकी ॥ पापशुद्धिर्न चेत्पुंसः क्रियाः सर्वाश्च निष्फलाः ॥ १२ ॥ ज्ञानं च हीयते तस्मात्कर्तव्यं पापशोधनम् ॥ विद्यालक्ष्मीविशुद्ध्यर्थं मां ध्यात्वांजलिना शुभे ॥ १३ ॥

इति पूर्वस्थैरन्वयः ॥ ९८॥९९ ॥ अष्टोत्तरसहस्रेणाभिमंत्रितामिति शेषः ब्राह्मीरसं पिबेदित्यन्वयः ॥ २०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अक्षरप्रातिलोम्येन मंत्राक्षरवैपरीत्यक्रमेणेत्यर्थः ॥ २१० ॥ प्रायश्चित्तविधिं कथयति प्रायश्चित्तमित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ लक्षस्य अयुतं लक्षायुतं शतकोटिसंख्यमित्यर्थः ॥ १७ ॥ शेषाणां स्वल्पपातकानामित्यर्थः ॥ १८ ॥ पुरश्चरणजपफलं कथयति आत्मबो धपरमित्यादिना । अनाकुलः स्वस्थचित्त इत्यर्थः ॥ १९ ॥ २२० ॥ २१ ॥ २२ ॥ २३ ॥ करणानां मनोबुद्ध्यहंकाराचित्तरूपाणामित्यर्थः ॥ २४ ॥ २५ ॥ ॥ २६ ॥ अनालस्यः ध्वनिवर्जिते निर्वाते वातशून्यस्थले मध्यरात्रे यः लक्षं जपेत्स शिवयोः शिवाशिवयोः स्वरूपमिति शेषः पश्यति साक्षात्करोत्येवेति पूर्वस्थै

शिवेनैकादशेनाद्भिरभिषिंचेत्समंततः ॥ अष्टोत्तरशतेनैव स्नायात्पापविशुद्धये ॥ १४ ॥ सर्वतीर्थफलं तच्च सर्वपापहरं शुभम् ॥ संध्यो पासनविच्छेदे जपेदष्टशतं नरः ॥ १५ ॥ विड्वराहैश्च चांडालैर्दुर्जनैः कुक्कुटैरपि ॥ स्पृष्टमन्नं न भुंजीत भुक्त्वा चाष्टशतं जपेत् ॥ १६ ॥ ब्रह्महत्या विशुद्ध्यर्थं जपेल्लक्षायुतं नरः ॥ पातकानां तदर्धं स्यान्नात्र कार्या विचारणा ॥ १७॥ उपपातकदुष्टानां तदर्धं परिकीर्तितम् ॥ शेषाणामपि पापानां जपेत्पंचसहस्रकम् ॥ १८ ॥ आत्मबोधपरं गुह्यं शिवबोधप्रकाशकम् ॥ शिवः स्यात्स जपेन्मंत्रं पंचलक्षमनाकुलः ॥ १९ ॥ पंचवायुजयं भद्रे प्राप्नोति मनुजः सुखम् ॥ जपेच्च पंचलक्षं तु विगृहीतेंद्रियः शुचिः ॥ २२० ॥ पंचेंद्रियाणां विजयो भविष्यति वरानने ॥ ध्यानयुक्तो जपेद्यस्तु पंचलक्षमनाकुलः ॥ २१ ॥ विषयाणां च पंचानां जयं प्राप्नोति मानवः ॥ चतुर्थं पंचलक्षं तु यो जपेद्भक्तिसंयुतः ॥ २२ ॥ भूतानामिह पंचानां विजयं मनुजो लभेत् ॥ चतुर्लक्षं जपेद्यस्तु मनः संयम्य यत्नतः ॥ २३ ॥ सम्यग्विजयमाप्नोति करणानां वरानने ॥ पंचविंशतिलक्षाणां जपेन कमलानने ॥ २४ ॥ पंचविंशतितत्त्वानां विजयं मनुजो लभेत् ॥ मध्यरात्रेतिनिर्वाते जपेदयुतमादरात् ॥ २५ ॥ ब्रह्मसिद्धिमवाप्नोति व्रतेनानेन सुंदरि ॥ जपेल्लक्षमनालस्यो निर्वाते ध्वनिवर्जिते ॥ २६ ॥ मध्यरात्रे च शिवयोः पश्यत्येव न संशयः ॥ अंधकारविनाशश्च दीपस्येव प्रकाशनम्॥ ॥ २७ ॥ हृदयांतर्बहिर्वापि भविष्यति न संशयः ॥ सर्वसंपत्समृद्ध्यर्थं जपेदयुतमात्मवान् ॥ २८ ॥ सबीजसंपुटं मंत्रं शतलक्षं जपेच्छुचिः ॥ मत्सायुज्यमवाप्नोति भक्तिमान्किमतः परम् ॥ २९ ॥ इति ते सर्वमाख्यातं पंचाक्षरविधिक्रमम् ॥ यः पठेच्छृणुयाद्वापि स याति परमां गतिम् ॥ ॥ २३० ॥ श्रावयेच्च द्विजाञ्छुद्धान्पंचाक्षरविधिक्रमम् ॥ दैवे कर्मणि पित्र्ये वा शिवलोके महीयते ॥२३१॥ इति श्रीलिंगमहापुराणे पूर्वभागे पंचा क्षरमाहात्म्यं नाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥

रन्वयः अन्यत्फलं कथयति अंधकार इत्यादिना अंधकारः अज्ञानमित्यर्थः ॥ २७ ॥ २८ ॥ कोटिजपफलं कथयति सबीजेति ॥ २९ ॥ फलश्रुतिं कथयति इतीत्यादिना ॥ २३० ॥ शिवलोके कैलासे महीयते पूजां लभत इत्यर्थः ॥ २३१ ॥ "सर्वश्रेष्ठतमोयं मंत्रः पंचाक्षरः शंभोः ॥ विधिनाविधिना जतः स्याच्छिवसायुज्यदोऽस्माकम् ॥ ? ॥" इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचाशीतितमोऽध्यायः ॥ ८५ ॥

"षडशीतितमेऽध्याये सर्वदुःखनिवारकम् ॥ ध्यानं च ज्ञानमाहात्म्यं शिवप्रोक्तं निरूप्यते ॥ १ ॥" ऋषयो ध्यानयज्ञमपृच्छन् जपादित्यादिना ॥ १ ॥ विश्वं कर्म यस्य स विश्वकर्मा तेन रुद्रेण कालकूटाख्यं विषं संहृत्य गुहां मेरुगुहां प्राप्य महात्मनां ऋषीणां कथितं सूत इति शेषः ॥ २ ॥ तेषां शौनकादीनां प्राहेत्य ग्रिमस्थैरन्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ संसारो द्विविधः तामसराजसभेदेन द्विप्रकार इत्यर्थः तामसं कथयति पुंसामिति ॥ १० ॥ संसारमूलं कथयति ईषणेति ईषणा इच्छा रागो विषयप्रीतिरित्यर्थः ॥ ११ ॥ पुण्यहेतुराजससंसारं कथयति असन्निकृष्टेति असन्निकृष्टेऽप्रत्यक्षेऽर्थे स्वर्गादौ सतामा

ऋषय ऊचुः ॥ जपाच्छ्रेष्ठतमं प्राहुर्ब्राह्मणा दग्धकिल्बिषाः ॥ विरक्तानां प्रबुद्धानां ध्यानयज्ञं सुशोभनम् ॥ १ ॥ तस्माद्वदस्व सूताद्य ध्यानयज्ञमशेषतः ॥ विस्तरात्सर्वयत्नेन विरक्तानां महात्मनाम् ॥ २ ॥ तेषां तद्वचनं श्रुत्वा मुनीनां दीर्घसत्रिणाम् ॥ रुद्रेण कथितं प्राह गुहां प्राप्य महात्मनाम् ॥ ३ ॥ संहृत्य कालकूटाख्यं विषं वै विश्वकर्मणा ॥ सूत उवाच ॥ गुहां प्राप्य सुखासीनं भवान्या सह शंकरम् ॥ ४ ॥ मुनयः संशितात्मानः प्रणेमुस्तं गुहाश्रयम् ॥ अस्तुवंश्च ततः सर्वे नीलकंठमुमापतिम् ॥ ५ ॥ अत्युग्रं कालकूटाख्यं संहृतं भगवंस्त्वया ॥ अतः प्रतिष्ठितं सर्वं त्वया देव वृषध्वज ॥ ६ ॥ तेषां तद्वचनं श्रुत्वा भगवान्नीललोहितः ॥ प्रहसन्प्राह विश्वात्मा सनंदनपुरोगमान् ॥ ७ ॥ किमनेन द्विजश्रेष्ठा विषं वक्ष्ये सुदारुणम् ॥ संहरेत्तद्विषं यस्तु स समर्थो ह्यनेन किम् ॥ ८ ॥ न विषं कालकूटाख्यं संसारो विषमुच्यते ॥ तस्मात्सर्वप्रयत्नेन संहरेत सुदारुणम् ॥ ९ ॥ संसारो द्विविधः प्रोक्तः स्वाधिकारानुरूपतः ॥ पुंसां संमूढचित्तानामसंक्षीणः ॥ १० ॥ ईषणारागदोषेण सर्गो ज्ञानेन सुव्रताः ॥ तद्वशादेव सर्वेषां धर्माधर्मौ न संशयः ॥ ११ ॥ असन्निकृष्टे त्वर्थेपि शास्त्रं तच्छ्र वणात्सताम् ॥ बुद्धिमुत्पादयत्येव संसारे विदुषां द्विजाः ॥ १२ ॥ तस्माद्दृष्टानुश्रविकं दुष्टमित्युभयात्मकम् ॥ संत्यजेत्सर्वयत्नेन विरक्तः सोऽभि धीयते ॥ १३ ॥ शास्त्रमित्युच्यते भागं श्रुतेः कर्मसु तद्विजाः ॥ मूर्धानं ब्रह्मणः सारं ऋषीणां कर्मणः फलम् ॥ १४ ॥ ननु स्वभावः सर्वेषां कामो दृष्टो न चान्यथा ॥ श्रुतिः प्रवर्तिका तेषामिति कर्मण्यतद्विदः ॥ १५ ॥

त्तिकजीवानां श्रवणात्तद्धर्मप्रतिपादकं शास्त्रं संसारे बुद्धिमुत्पादयत्येवेत्यन्वयः ॥ १२ ॥ तस्माद्विपरूपत्वादृष्टमैहिकयानुश्रविकं पारलौकिकमुभयात्मकं दुष्टमिति यः संत्यजेत्स विर क्तोऽभिधीयत इत्यन्वयः ॥ १३ ॥ श्रुतेः कर्मसु अभागमनैकदेशी ब्रह्मणः वेदस्य मूर्धानं मस्तकरूपम् ऋषीणामतींद्रियदृष्टॄणां सारं कर्मणः निष्कामकर्मणः फलं यदध्यात्मशास्त्रं तच्छास्त्रमित्युच्यत इत्यन्वयः ॥१४॥ नन्वेवं चेत् " अग्नीषोमीयं पशुमालभेत स्वर्गकामः" इत्यादिश्रुतीनां काम्यकर्मप्रवर्तनमनुचितमित्याशंक्य समाधत्ते नन्विति सर्वेषां कामः स्वभावो दृष्टः तेषां श्रुतिः प्रवर्तिका न कर्मणि [illegible] एकादशे [illegible] वैदिकमेव कुर्वाणो निःसंगार्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कपाली तस्मै नीललोहिताय रुद्ररूपायेत्यर्थः । २८ ध्यानाधाराय० । ध्यानं प्रत्ययैकतानता तस्याधारोऽधिकरणमित्यर्थः । तदुक्तं योगसूत्रे "तत्र प्रत्ययैकतानता ध्यानम्" इति । २९ अपरिच्छेद्याय० । अपरिच्छेद्यो व्यापकत्वाद्देशकालपरिच्छेदानर्ह इत्यर्थः । ३० गौरीभर्त्रे० । गौर्याः पार्वत्याः भर्ता पतिरित्यर्थः । ३१ गणेश्वराय० । गणस्य पंचविंशतितत्त्वगणस्य ईश्वरः स्वामीत्यर्थः ॥ ३१ ॥ ३२ अष्टमूर्तिविश्वमूर्तये० । अष्टावर्कादयो मूर्तयो यस्य सोऽष्टमूर्तिरत एव विश्वं तद्रूपं जगन्मूर्तिस्तनुर्यस्य सोऽष्टमूर्तिर्विश्वमूर्तिः । ३३ त्रिवर्गाय० । त्रिवर्गो धर्मकामार्थरूपः । ३४ स्वर्गसाधनाय० स्वर्गः साध्यतेऽनेनेति स्वर्गसाधनः क्रतुरूप इत्यर्थः ३५ ज्ञानगम्याय० ज्ञानादेव गम्यः प्राप्यो ज्ञानगम्यः कैवल्यरूपः "ज्ञानादेव तु कैवल्यम्" इति श्रुतेः । ३६ दृढप्रज्ञाय० । दृढा अचंचला प्रज्ञा बुद्धिर्यस्मादसौ दृढप्रज्ञः ।३७ देवदेवाय० । देवानिन्द्रादीन्दीव्यति क्रीडयतीति देवदेवः ३८ त्रिलोचनाय० । त्रीणि लोचनानि यस्य स त्रिलोचनः ॥ ३२ ॥ ३९ वामदेवाय० वामदेवस्तत्संज्ञकः "वामदेवाय नमः" इति श्रुतेः । ४० महादेवाय० । महान्पूज्यश्चासौ देवश्च महादेवः । ४१ पांडवे० । पांडुः शुभ्रवर्णः ४२ परिदृढाय० परितः सर्वतः दृढः बलवानित्यर्थः । ४३ अदृढाय० अः विष्णुर्दृढः बलवान् यस्मादसावदृढः ४४ विश्वरूपाय० विश्वस्मिन् रूप्यते प्रशस्यत इति विश्वरूपः । ४५ विरूपाक्षाय० । विविधानि रूपाणि येषां तानि सोमसूर्याग्निरूपाण्यक्षीणि यस्य स विरूपाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । ४६

अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ॥ ३२ ॥ वामदेवो महादेवः पांडुः परिदृढो दृढः ॥ विश्वरूपो विरूपाक्षो वागीशः शुचिरंतरः ॥३३ ॥ सर्वप्रणयसंवादी वृषांको वृषवाहनः ॥ ईशः पिनाकी खट्वांगी चित्रवेषश्चिरंतनः ॥ ३४ ॥ तमोहरो महायोगी गोप्ता ब्रह्मांगहृज्जटी ॥ कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ॥३५॥ उन्मत्तवेषश्चक्षुष्यो दुर्वासाः स्मरशासनः ॥ दृढायुधः स्कंदगुरुः परमेष्ठी परायणः ॥ ३६ ॥

वागीशाय० वाचामीशो वागीशः ४७ शुचये० शुचिः शुद्ध इत्यर्थः ४८ अंतराय० अंतरः सर्वावधिरूपः "अंतरम् आत्मांतर्धिविनात्मीयबहिर्मध्यावधिष्वपि" इति विश्वः ॥ ३३ ॥ ४९ सर्वप्रणयसंवादिने० सर्वप्रणयान् सकलनीतिशास्त्राणि संवदति तच्छीलः सर्वप्रणयसंवादी ५० वृषांकाय० वृषो नंदिकेश्वरः अंकश्चिह्नं यस्य स वृषांकः ५१ वृषवाहनाय० वृषो नंदिकेश्वरः वाहनं यस्य स वृषवाहनः ५२ ईशाय पिनाकिने० ईशः सकलनियंता तस्मै पिनाकिने पिनाक संज्ञकधनुर्विशिष्टायेत्यर्थः ५३ खट्वांगिने० खट्वांगं तत्संज्ञकायुधमस्ति यस्य स खट्वांगी ५४ चित्रवेषाय० चित्रो विचित्रो वेषो यस्य स चित्रवेषः ५५ चिरंतनाय० चिरंचिरकालं तनोति जगद्विस्तारयतीति यद्वा चिरंभवः चिरंतनः ॥ ३४ ॥ ५६ तमोहराय० । तमसः अज्ञानस्य हरो नाशक इत्यर्थः । ५७ महायोगिने गोप्त्रे० । महांश्चासौ योगी च महायोगी तस्मै अत एव गोप्त्रे रक्षणशीलायेत्यर्थः । ५८ ब्रह्मांगहृज्जटिने ब्रह्मांगं ब्रह्ममस्तकं हरतीति ब्रह्मांगहृत् स चासौ जटी च ब्रह्मांगहृज्जटी । ५९कालकालाय० । कालस्य यमस्यापि कालो मृत्युरित्यर्थः । ६० कृत्तिवाससे० । कृत्तिर्नृसिंहचर्म वासो वसनं यस्य स कृत्तिवासाः । ६१ सुभगाय० । सुष्ठु भगं षड्गुणैश्वर्यं विष्ण्वादीनां यस्मादसौ सुभगः । ६२ प्रणवात्मकाय० । प्रणवात्मकः ॐकारस्वरूप इत्यर्थः ॥ ३५ ॥ ६३ उन्मत्तवेषाय० । उन्मत्तवद्वेषो यस्य स उन्मत्तवेषः अवधूतदत्तात्रेयस्वरूपः । ६४ चक्षुष्याय० । चक्षुषि भवश्चक्षुष्यः अत्रिनयनोत्पन्नसोमरूपः । ६५ दुर्वाससे० । दुर्वासास्तत्संज्ञकऋषिरूप इत्यर्थः । ६६ स्मरशासनाय० । स्मरं मदनः शास्तीति स्मरशासनः । ६७ दृढायुधाय स्कंदगुरवे० । दृढमायुधं यस्य स दृढायुधस्तस्मै अत एव स्कंदस्य देवसेनापतेर्गुरुरुपदेशक इत्यर्थः । ६८ परमेष्ठिने परायणाय० । परमेष्ठी ब्रह्मरूपस्तस्मै अत एव परं सत्यलोकाख्यमयनं स्थानं यस्य स परायणः ॥ ३६ ॥६९ अनादिमध्यनिधनाय० । नास्ति आदिमध्यनिधनं यस्य स अनादिमध्यनिधनः । ७० गिरिशाय गिरिबांधवाय० । गिरौ हिमालये शेते इति गिरिशस्तस्मै गिरौ डः छंदसीति डः गिरिबांधवो गिरिजामातेत्यर्थः । ७१ कुबेरबंधवे श्रीकंठाय० । कुबेरः बंधुर्मित्रं यस्य स कुबेरबंधुस्तस्मै अत एव श्रीः कंठे समीपे यस्य स श्रीकंठः । ७२ लोकवर्णोत्तमोत्तमाय० । लोकवर्णोत्तमस्य ब्राह्मणस्य उत्तमः पूज्य इत्यर्थः ॥ ३७ ॥ ७३ सामान्यदेवाय० । सामान्याः मध्यमाः देवाः यस्मादसौ सामान्यदेवो देवश्रेष्ठ इत्यर्थः । ७४ कोदंडिने० । कोदंडं धनुर्यस्यास्तीति कोदंडी । ७५ नीलकंठाय० । नीलः कृष्णवर्णः कंठो यस्य स नीलकंठः 'नमो नीलग्रीवाय' इति श्रुतेः । ७६ परश्वधिने० परश्वधः परशुर्यस्यास्तीति परश्वधी । ७७ विशालाक्षाय० । विशालानि विस्तृतान्यक्षीणि यस्य स विशालाक्षः । ७८ मृगव्याधाय० । मृगं मृगरूपधारिणं ब्रह्माणं विध्यतीति मृगव्याधः । ७९ सुरेशाय० । सुराणां देवानामीशः सुरेशः ।८०सूर्यतापनाय० । सूर्यस्तापनो यस्मादसौ सूर्यतापनः ॥३८॥ ८१ धर्मकर्माक्षमाय० धर्मयुक्तं कर्म धर्मकर्म तद

अनादिमध्यनिधनो गिरिशो गिरिबांधवः ॥ कुबेरबंधुः श्रीकंठो लोकवर्णोत्तमोत्तमः ॥ ३७ ॥ सामान्यदेवः कोदंडी नीलकंठः परश्वधी ॥ विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ॥ ३८ ॥ धर्मकर्माक्षमः क्षेत्रं भगवान् भगनेत्रभित् ॥ उग्रः पशुपतिस्तार्क्ष्यप्रियभक्तः प्रियंवदः ॥ ३९ ॥ दांतो दयाकरो दक्षः कपर्दी कामशासनः ॥ श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ॥ ४० ॥ लोककर्ता भूतपतिः महाकर्ता महौषधी ॥ उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥ ४१ ॥

अक्षममप्रापकं यस्य स धर्मकर्माक्षमः 'न कर्मणा' इति श्रुतेः । ८२ क्षेत्राय भगवते० । क्षेत्रं बीजनिर्वापस्थानं तस्मै भगवते विष्णुरूपायेत्यर्थः। ८३ भगनेत्रभिदे उग्राय० । भगस्य । तत्संज्ञकादित्यस्य नेत्रं भिनत्ति दक्षयज्ञे भिन्नं करोतीति भगनेत्रभित्तस्मै अत एव उग्रः क्रूररूप इत्यर्थः । ८४ पशुपतये० । पशूनां ब्रह्मादिजीवानां पतिः पालक इत्यर्थः । ८५ तार्क्ष्यप्रियभक्ताय० । तार्क्ष्यो गरुडः प्रियो यस्य स तार्क्ष्यप्रियो विष्णुर्भक्तो यस्य स तार्क्ष्यप्रियभक्तः।८६ प्रियंवदाय० प्रियं स्वरहस्यमपि वदतीति प्रियंवदः प्रियवशेति खच् अरुर्द्विषदिति मुम् ॥ ३९॥८७ दांतोदयाकराय०। दांतानां जितेंद्रियाणामुदयो ज्ञानोदयस्तस्याकरः खनीभूतः।८८दक्षाय०।दक्षः पटुरित्यर्थः 'दक्षः पटौ हरवृषे' इति विश्वः। ८९ कपर्दिने० कपर्दो जटाजूटोऽस्ति यस्य स कपर्दी । ९० कामशासनाय० । कामं प्रकामं शासनं यस्य स कामशासनः स्वतंत्र इत्यर्थः । ९१ श्मशाननिलयाय सूक्ष्माय० । श्मशानं सुषुम्नानाडी निलयः स्थानं यस्य तस्मै अत एव सूक्ष्मः सूक्ष्मरूप इत्यर्थः सुषुम्नायाः श्मशानसंज्ञा हठदीपिकायामुक्ता। ९२श्मशानस्थाय०। श्मशाने काश्यां तिष्ठतीति श्मशानस्थः। ९३महेश्वराय० । महान्सर्वातिशायितश्चासौ ईश्वरश्च महेश्वरः ॥ ४० ॥ ९४ । लोककर्त्रे० । लोकानां भूरादीनां कर्ता उत्पादक इत्यर्थः । ९५ भूतपतये० । भूतानां गगनादीनां पतिः स्वामीत्यर्थः । ९६ महाकर्त्रे० महानपरिच्छिन्नश्चासौ कर्ता च महाकर्ता सकलोत्पादक इत्यर्थः९७महौषधिने महौषधं तारकज्ञानं यस्यास्तीति महौषधी९८उत्तराय० उत् ऊर्ध्वं संसारात्तारयतीति उत्तरः तृधातोरंतर्भावितण्यर्थात् ऋदोरप् ९९ गोपतये० गवां छंदोधेनूनां पतिः पालक इत्यर्थः१००गोप्त्रे० गोपायतीति गोप्ता सकलरक्षक इत्यर्थः प्रथमशतकं समाप्तम् ॥ १ ॥ १ज्ञानगम्याय० ज्ञानमात्मज्ञानं गम्यं प्राप्यं यस्मादसौ ज्ञानगम्यः २ पुरातनाय० पुराभवः पुरातनः पूर्वकालेऽपि विद्यमान इत्यर्थः ॥ ४१ ॥ ३ नीतये० नीतिः सन्मार्गरूपः ४ सुनीतये० शोभना नीतिर्यस्मादसौ सुनीतिः ५ शुद्धात्मने० शुद्धः आत्मा अंतःकरणं यस्मादसौ शुद्धात्मा ६ सोमसोमरताय० उमया सहितः सोमः सोमश्चंद्रः रतो यस्मिन्नसौ सोमरतः सोमश्चासौ सोमरतश्च सोमसोमरतः ७ सुखिने० सुखो नित्यसुखविशिष्टः ८ सोमपाय० सोमं सोमवल्लीरसं सर्वयज्ञेषु हूयमानं पिबतीति सोमपः ९ अमृतपाय० अमृतं सुधां पिबतीत्यमृतपः आतोऽनुपसर्गे क इति कः १० सोमाय० सोमो यज्ञीयसोमवल्लीरूपः तया च श्रुतिः "तृतीयस्यामितो दिवि सोम आसीत्तंगायत्र्याहरत्" इति । ११ महानीतये० महती पूज्या नीतिर्यस्मादसौ महानीतिः १२ महामतये० महती पूज्या मतिर्यस्मादसौ महामतिः ॥ ४२ ॥ १३ अजातशत्रवे० अजातोऽनुत्पन्नः शत्रुर्यस्य सोऽजातशत्रुः सर्वत्र सम इत्यर्थः १४ आलोकाय आलोकः प्रकाशरूप इत्यर्थः१५संभाव्याय० संभावयितुं सत्कर्तुं योग्यः संभाव्यः१६ हव्यवाहनाय० हव्यं वहति तत्तद्देवान्प्रापयतीति हव्यवाहनो वह्निरूपः १७ लोककाराय० लोकांश्चतुर्दशभुवनानि करोतीति लोककारः १८ वेदकाराय० वेदानृगादीन् करोतीति वेदकारः १९ सूत्रकाराय० सूत्राणि ब्रह्मसूत्रा

नीतिः सुनीतिः शुद्धात्मा सोमसोमरतः सुखी ॥ सोमपोऽमृतपः सोमो महानीतिर्महामतिः ॥ ४२ ॥ अजातशत्रुरालोकः संभाव्यो हव्यवाहनः ॥ लोककारो वेदकारः सूत्रकारः सनातनः ॥ ४३ ॥ महर्षिः कपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ॥ पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सदा ॥ ४४ ॥ त्रिधामा सौभगः शर्वः सर्वज्ञः सर्वगोचरः ॥ ब्रह्मधृग्विश्वसृक्स्वर्गः कर्णिकारः प्रियः कविः ॥ ४५ ॥

दीनि करोतीति सूत्रकारः २० सनातनाय० तत्संज्ञकऋषिरूपायेत्यर्थः ॥ ४३ ॥ २१ महर्षये कपिलाचार्याय० महर्षिः पूज्यऋषिरूपस्तस्मै अत एव कपिलस्तत्संज्ञकश्चासौ आचार्यः सांख्यगुरुस्तद्रूपः २२ विश्वदीप्तये० विश्वस्य जगतः दीप्तिः प्रकाशो यस्मादसौ विश्वदीप्तिः २३ त्रिलोचनाय० त्रिषु स्वर्गमृत्युपातालेषु लोचनानि यस्य स त्रिलोचनः त्रैलोक्यप्रेक्षक इत्यर्थः २४ पिनाकपाणिभूदेवाय० पिनाकं तत्संज्ञकधनुः पाणौ यस्य स पिनाकपाणिश्चासौ भूदेवश्च तत्संज्ञकलोके क्रीडमान इत्यर्थः २५ स्वस्तिदाय० स्वस्ति कल्याणं ददातीति स्वस्तिदः २६ सदा स्वस्तिकृते० सदा सर्वकालं स्वस्ति मंगलं करोतीति स्वस्तिकृत् ॥ ४४ ॥ २७ त्रिधाम्ने० त्रीणि ब्रह्मविष्णुरुद्ररूपाणि धामानि तेजांसि यस्मादसौ त्रिधामा २८ सौभगाय० सौभं तत्संज्ञकयानं गमयति शाल्वराज्ञे प्रापयतीति सौभगः। इयं कथा भागवते विस्तृता "अन्यत्रापि दृश्यते" इति डः२९ शर्वसर्वज्ञाय० शृणंति पातकिजनान् हिंसंति ते शर्वाः रौद्रगणाः पचाद्यच् सर्वज्ञाः यस्य स शर्वसर्वज्ञः ३० सर्वगोचराय० सर्वं गोचरं प्रत्यक्षं यस्य स सर्वगोचरः ३१ ब्रह्मधृग्विश्वसृक्स्वर्गाय० ब्रह्म वेदं धृष्णुवंति ते ब्रह्मधृषो ब्रह्मवादिनस्तेषां विश्वसृक् स्वर्गो ब्रह्मलोको यस्मादसौ ब्रह्मधृग्विश्वसृक्स्वर्गः । ३२ कर्णिकाराय० । कर्णिकारस्तत्संज्ञकवृक्षरूपो वा उत्पलरूपः । 'कर्णिकारो द्रुमोत्पले' इति विश्वः। ३३ प्रियाय० । प्रिय आत्मरूपत्वात्सर्वेष्ट इत्यर्थः। ३४ कवये० कविरादिकविर्वाल्मीकिरूपः। कविः काव्यकर्ता सूरे कविर्वाल्मीकिशुक्रयोः' इति

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विश्वः ॥ ४५ ॥ ३५ शाखाय विशाखाय० । शाखाय तत्संज्ञाय विशाखाय स्कंदरूपायेत्यर्थः । ३६ गोशाखाय० । गवां वेदवाणीनां शाखाः ऋगादिसंज्ञकभेदाः यस्मादसौ गोशाखः ३७ शिवाय० । शिवो मोक्षसुखरूपः 'शिवं मोक्षे सुखे भद्रे' इति विश्वः । ३८ नैकाय० । नास्ति एकोऽद्वितीयो यस्मादसौनैकः । ३९ क्रतवे० । क्रतुरग्निष्टोमादिरूपः । ४० समाय० । समः सर्वेषां तुल्य इत्यर्थः । ४१ गंगाप्लवोदकाय० । गंगा भागीरथी प्लववत्तारकमुदकं यस्याः सा प्लवोदका यस्मादसौ गंगाप्लवोदकः । ४२ भावाय० । भावयते स्वभक्तेभ्यो मोक्षं प्रापयतीति भावः । ४३ सकलाय० । कलया चंद्रकलया सहितः सकलः नित्यचंद्रकलायुक्त इत्यर्थः । ४४ स्थपतिस्थिराय० । स्थपतिः मायाकंचुकी चासौ स्थिरश्च स्थपतिस्थिरः 'स्थपतिः कंचुकिन्यपि' इति विश्वः ॥ ४६ ॥ ४५ विजितात्मने० ' विजितः स्वाधीनः आत्मा मनो यस्मात्सविजितात्मा । ४६ विधेयात्मने० । विधेयो विधि प्रतिपाद्यः आत्मा स्वरूपं यस्य स विधेयात्मा 'न चक्षुषा पश्यति कश्चनैनम् इति श्रुतेः । ४७ भूतवाहनसारथये० । भूतानां जीवानां वाहनः कर्मफलप्रापकः भूतवाहनो ब्रह्मा सार थिर्यस्य स भूतवाहनसारथिः । ४८ सगणाय० । गणैः प्रमथादिभिः सहितः सगणः । ४९ गणकार्याय० । गणैः पंचविंशतितत्त्वगणैः कार्यं ब्रह्मांडं यस्य स गणकार्यः । ५० सुकी र्तये० । सुष्ठु शोभना कीर्तिर्भक्तानां यस्मात्स सुकीर्तिः । ५१ छिन्नसंशयाय० । छिन्नाः नष्टाः भक्तानां संशयाः यस्मादसौ छिन्नसंशयः ॥ ४७ ॥ ५२ कामदेवाय० । कामो मदनः

शाखो विशाखो गोशाखः शिवोनैकः क्रतुः समः ॥ गंगाप्लवोदको भावः सकलस्थपतिस्थिरः ॥४६॥ विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ सगणो गणकार्यश्च सुकीर्तिश्छिन्नसंशयः ॥ ४७ ॥ कामदेवः कामपालो भस्मोद्धूलितविग्रहः ॥ भस्मप्रियो भस्मशायी कामी कांतः कृतागमः ॥ ४८ ॥ समायुक्तो निवृत्तात्मा धर्मयुक्तः सदाशिवः ॥ चतुर्मुखश्चतुर्बाहुर्दुरावासो दुरासदः ॥ ४९ ॥ दुर्गमो दुर्लभो दुर्गः सर्वायुधविशारदः ॥ अध्यात्मयोगनिलयः सुतंतुस्तंतुवर्धनः ॥ ५० ॥

देवो जगद्विजिगीषुर्यस्मादसौ कामदेवः । ५३ कामपालाय० । कामं मदनं पालयतीति कामपालः । ५४ भस्मोद्धूलितविग्रहाय० । भस्मना उद्धूलितः धूसरः विग्रहो यस्य स भस्मोद्धूलितविग्रहः । ५५ भस्मप्रियाय० । भस्म प्रियं यस्य स भस्मप्रियः । ५६ भस्मशायिने० । भस्मनि शेते तच्छीलः भस्मशायी । ५७ कामिने कांताय० । कामी कामवि शिष्टोऽत एव कांतः सुंदर इत्यर्थः । ५८ कृतागमाय० । कृतः आगमः वेदो येन स कृतागमः ॥ ४८ ॥ ५९ समायुक्ताय० । समायुक्तो नित्यप्रकृतियुक्तः वा मया लक्ष्म्या सहितः समो विष्णुः तेन आयुक्तः सर्वतो युक्त इत्यर्थः । ६० निवृत्तात्मने० । निवृत्तः आत्मा मनो यस्मादसौ निवृत्तात्मा 'अप्राप्य मनसा सह' इति श्रुतेः । ६१ धर्मयुक्ताय० । धर्मेण युक्तो नित्यसंगत इत्यर्थः । ६२ सदाशिवाय० । सदा सर्वकालं शिवं कल्याणं यस्मात्स सदाशिवः । ६३ चतुर्मुखाय चतुर्बाहवे० । चत्वारि मुखानि यस्य स चतुर्मुखस्तस्मै चत्वारो बाहवो यस्य स चतुर्बाहुर्ब्रह्मरूप इत्यर्थः । ६४ दुरावासाय० । दुःखेनातिक्लेशेन आवास्यते योगिभिः समाधौ चित्ते स्थाप्यत इति दुरावासः । ६५ दुरासदाय० । दुःखेनासत्तुं समीपं प्राप्तुमशक्यो दुरासदः ॥ ४९ ॥ ६६ दुर्गमाय दुर्लभाय० । दुःखेन गम्यते ज्ञायत इति दुर्गमस्तस्मै अत एव दुःखेनातिप्रयासेन लभ्यो दुर्लभः । ६७ दुर्गाय० । दुःखेन गंतु मशक्यः दुर्गः । ६८ सर्वायुधविशारदाय० । सर्वायुधेषु सर्वप्रहरणेषु विशारदाः निपुणाः जामदग्न्यादयो यस्मादसौ सर्वायुधविशारदः । ६९ अध्यात्मयोगनिलयाय० । आत्मान मेव अधिकृत्येत्यध्यात्मा स चासौ योगः असंप्रज्ञातसमाधिः निलयं स्थानं यस्य सः अध्यात्मयोगनिलयः । ७० सुतंतवे० । सुष्ठु तंतुः संततिर्यस्मादिति सुतंतुः । ७१ तंतुवर्धनाय० । तंतुमविच्छिन्नसंततिं वर्धयतीति तंतुवर्धनः ॥ ५० ॥ ७२ शुभांगाय० । शुभान्यंगानि शरीराणि यस्मादसौ शुभांगः । ७३ लोकसारंगाय० । लोकानां सारंगो लोकसारंगः भ्रम रवद्भक्तिरसग्राहक इत्यर्थः यद्वा लोकाः सारंगाः पशुपक्षिवत्क्रीडनकाः यस्य स लोकसारंगः । ७४ जगदीशाय० । जगतामीशो नियंतेत्यर्थः । ७५ अमृताशनाय० । अमृतं यज्ञ शेषमशनं यस्य सोऽमृताशनः 'अमृतं यज्ञशेषे स्यात्' इति विश्वः । ७६ भस्मशुद्धिकराय० । भस्मना शुद्धिर्भस्मशुद्धिस्तस्याः कर उत्पादक इत्यर्थः । ७७ मेरवे० । मेरुः कनका द्रिरूपः । ७८ ओजस्विने शुद्धविग्रहाय० । ओजः स्वात्मबलं न त्वन्नादिबलं यस्यास्तीति ओजस्वी अस्मायामेधेति विनिः । अत एव शुद्धः विग्रहो यस्य स शुद्धविग्रहः ॥ ५१ ॥ ७९ हिरण्यरेतसे० हिरण्य रेतो यस्य स हिरण्यरेताः । ८० तरणये मरीचये० तरंति संसारं भक्ता अनेनेति तरणिस्तस्मै मरीचये सूर्यरूपायेत्यर्थः । ८१ महिमालयाय० महिम्न स्तत्संज्ञकसिद्धेरालयः स्थानभूतः । ८२ महाह्रदाय० महानक्षोभ्यः ह्रदो योगिनां ज्ञानसमुद्रो यस्मादसौ महाह्रदः । ८३ महागर्भाय० महान्महत्तत्त्वं गर्भो यस्य स महागर्भः । ८४ सिद्धवृंदारवंदिताय सिद्धाः सिद्धगणाः वृंदाराः देवाश्च तैर्वंदितः स्तुत इत्यर्थः ॥ ५२ ॥ ८५ व्याघ्रचर्मधराय० व्याघ्रचर्मणः धरो धारका । ८६ व्यालिने० व्यालाः वासुक्या

शुभांगो लोकसारंगो जगदीशोऽमृताशनः ॥ भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ॥ ५१ ॥ हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ महा ह्रदो महागर्भः सिद्धवृंदारवंदितः ॥ ५२ ॥ व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ॥ अमृतांगोऽमृतवपुः पंचयज्ञः प्रभंजनः ॥ ५३ ॥ पंच विंशतितत्त्वज्ञः पारिजातः परावरः ॥ सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ॥ ५४ ॥

दिसर्पा भूषणभूता यस्य संति स व्याली । ८७ महाभूताय० महान् विराड्भूतः उत्पन्नो यस्मादसौ महाभूतः "यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुतेः । ८८ महानिधये० महां तोऽक्षयाः निधयः शंखादयो यस्मादसौ महानिधिः ८९ अमृतांगाय० अमृतं मृतिशून्यमंगं यस्मादसावमृतांगः । ९० अमृतवपुषे० अमृतवत्सुवर्णवद्वपुः शरीरं यस्य सोऽमृतवपुः "अमृतं वै हिरण्यम्" इति श्रुतेः । ९१ पंचयज्ञाय० पंच देवयज्ञादयो नित्ययागा यस्य स पंचयज्ञः । ९२ प्रभंजनाय० प्रकर्षेण भंजयति स्वभक्तमायावरणं नाशयतीति प्रभंजनः ॥ ५३ ॥ ९३ पंचविंशतितत्त्वज्ञाय० पंचविंशतितत्त्वानि ज्ञापयति स्वभक्तेभ्यः बोधयतीति पंचविंशतितत्त्वज्ञः । 'अंतर्भावितण्यर्थात् ज्ञाधातोरातोनुपसर्गे इति कः' । ९४ पारिजा ताय० पारिजातस्तत्संज्ञककल्पद्रुमरूपः । ९५ परावराय० परं ब्रह्म अवरं जगदुभयरूपः । ९६ सुलभाय० सुखेन लब्धुं भक्तजनैः प्राप्तुं शक्यः सुलभः । ९७ सुव्रताय शूराय० सुष्ठु व्रतं नियमाचरणं यस्य स सुव्रतस्तस्मै शूराय सूर्यरूपायेत्यर्थः 'शूरश्च रेभटे सूर्ये' इति विश्वः ९८ वाङ्मयैकनिधये० वाङ्मयस्य शब्दशास्त्रस्यैको द्वितीयः निधिः स्थानभूतः तदुक्तं शिक्षायां 'येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः" इति । ९९ निधये० नितरां धीयते योगिभिश्चित्ते स्थाप्यत इति निधिः 'उपस र्गे घोः किः' इति किः ॥ ५४ ॥

२०० वर्णाश्रमगुरवे० वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां गुरुर्जनक इत्यर्थः ॥ इति द्वितीयशतकं समाप्तम् ॥ २ ॥ १ 'वर्णिने० वर्णी ब्रह्मचारिरूपः' 'वर्णी स्याल्लेखके चित्रकारे व ब्रह्मचारिणि' इति विश्वः । २ शत्रुजिच्छत्रुतापनाय० । शत्रून्स्वभक्तशत्रून् जयतीति शत्रुजित्स चासौ शत्रुतापनः शत्रुसंतापकर इत्यर्थः । ३ आश्रमाय० । आश्रमो आश्रमसदृशः जन्ममरणायासनिवर्तकत्वात्सकलविश्रांतिस्थानभूत इत्यर्थः । ४ क्षपणाय० । क्षपयतीति क्षपणः स्वभक्तपापक्षयकारक इत्यर्थः ५ क्षामाय० क्षामः कृशरूपः ६ ज्ञानवते० ज्ञानवान्नित्य ज्ञानयुक्तः ७ अचलाचलाय० अचलाः स्थिराः अचलाः पर्वताः यस्मादसौ अचलाचलः ॥ ५५ ॥ ८ प्रमाणभूताय० प्रमाणानि प्रत्यक्षादीनि भूतान्युत्पन्नानि यस्मादसौ प्रमाणभूतः । ९ दुर्ज्ञेयाय० दुःखेनातिप्रयासेन ज्ञातुं योग्यो दुर्ज्ञेयः । १० सुपर्णाय० सुष्ठु सौवर्णे पर्णे पक्षौ यस्य स सुपर्णः गरुडरूपः । ११ वायुवाहनाय० वायवः वाहने रथे सोपानभूताः यस्य स वायुवाहनः । १२ धनुर्धराय धनुर्वेदाय० धनुषः धरो धारकस्तस्मै धनुषः वेदो यस्मात्स धनुर्वेदः । १३ गुणराशये० गुणानां षोडशाध्यायोक्तयोगादिगुणानां राशयः संघाः यस्मात्स गुणराशिः । १४ गुणाकराय० गुणानां योगादीनामाकरः खनीभूत इत्यर्थः ॥ ५६ ॥ १५ अनंतदृष्टये० अनंताः असंख्याः दृष्टयो यस्य सोऽनंतदृष्टिः ॥ १६ आनंदाय० आनंद आनं दरूपः "आनंदं ब्रह्म इति श्रुतेः । १७ दंडाय दमयित्रे० दंडो दंडरूपस्तस्मै अत एव दमयिता सकलदुष्टदमकारक इत्यर्थः 'दंडो दमयतामस्मि' इति भगवद्गीतोक्तेः । १८ दमाय० दम

वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ॥ आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः ॥ ५५ ॥ प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ॥ ५६ ॥ अनंतदृष्टिरानंदो दंडो दमयिता दमः ॥ अभिवाद्यो महाचार्यो विश्वकर्मा विशारदः ॥ ५७ ॥ वीतरागो विनीतात्मा तपस्वी भूतभावनः ॥ उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ॥ ५८ ॥ कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ॥ तपस्वी तारको धीमान् प्रधानप्रभुरव्ययः ॥ ५९ ॥

इंद्रियनिग्रहस्तद्रूपः । १९ अभिवाद्याय० अभिवाद्यः सर्वस्तुत्य इत्यर्थः । २० महाचार्याय० महांत आचार्याः गुरवो यस्मात्स महाचार्यः । २१ विश्वकर्मणे० विश्वं जगत्कर्म यस्य स विश्वकर्मा । २२ विशारदाय० । विशिष्टा शारदा सरस्वती यस्मात्स विशारदः ॥ ५७ ॥ २३ वीतरागाय० वीतः गतः रागो विषयप्रीतिर्भक्तानां यस्मात्स वीतरागः । २४ विनी तात्मने० विनीतो नम्रः आत्मा स्वभावो यस्मात्स विनीतात्मा । २५ तपस्विने० तपोऽस्ति यस्मिन् स तपस्वी । २६ भूतभावनाय० भूतानि भावयति उत्पादयतीति भूतभावनः २७ उन्मत्तवेषाय प्रच्छन्नाय० उन्मत्तवद्वेषो यस्य स उन्मत्तवेषस्तस्मै अत एव प्रच्छन्नः गूढरूपः । २८ जितकामाय० जितः कामो मदनो येन स जितकामः । २९ अजितप्रियाय० अजितो विष्णुः प्रियो यस्य सोऽजितप्रियः ॥ ५८ ॥ ३० कल्याणप्रकृतये० कल्याणी प्रकृतिर्यस्य स कल्याणप्रकृतिः । ३१ कल्पाय० कल्पः सर्वप्रथमः 'कल्पः स्यात्प्रथमे न्याये शास्त्रे ब्राह्मदिने विधौ' इति विश्वः । ३२ सर्वलोकप्रजापतये० । सर्वलोकेषु चतुर्दशभुवनेषु प्रजास्तासां पतिः पालक इत्यर्थः । ३३ तपस्विने तारकाय० । तप एव स्वं यस्या स्तीति तपस्वी तस्मै अत एव तारको [illegible] । प्रधानस्य प्रकृतेः प्रभुः स्वामी

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

त्यर्थः। ३६ अव्ययाय०। न व्येतीत्यव्ययः नाशशून्य इत्यर्थः ॥ ५९॥ ३७ लोकपालाय०। लोकान्पालयतीति लोकपालः। ३८ अंतर्हितात्मने०। अंतर्हितो मायातिरोहितः आत्मा स्वरूपं यस्य सोंऽतर्हितात्मा।३९ कल्पादये०। कल्पस्य शास्त्रस्य आदिः कारणं तदुक्तं शारीरके "शास्त्रयोनित्वात्" इति। ४० कमलेक्षणाय०। कमला श्रीः ईक्षणायस्य स कमलेक्षणः।४१ वेदशास्त्रार्थतत्त्वज्ञाय०। वेदाश्च शास्त्राणि च वेदशास्त्राणि तेषामर्थतत्त्वज्ञास्तत्त्ववेत्तारो मुनयो यस्मात्स वेदशास्त्रार्थतत्त्वज्ञः। ४२ नियमाय०। नितरां यमस्तत्संज्ञकप्रथमं योगांगं यस्मात्स नियमः।४३ नियमाश्रयाय०। नियमादिद्विपनिग्रहादाश्रयो यस्य स नियमाश्रयः ॥ ६० ॥ ग्रहाणामपि तद्रूपत्वात्तद्वाचकपञ्चनामानि कथयति। ४४ चंद्राय०। चंदयति आह्लादयतीति चंद्रः तत्संज्ञकग्रहरूपः। ४५ सूर्याय०। सुवति जगत्प्रेरयतीति सूर्यस्तद्रूपः। ४६ शनये०। शनिस्तत्संज्ञकग्रहरूपः। ४७ केतवे०। केतुर्धूम केतुरूपः। ४८ विरामाय०। विशेषेण रम्यतेऽनेनेति विरामः अतिसुंदरबुधरूप इत्यर्थः। ४९ विद्रुमच्छवये०। विद्रुमवत्प्रवालवच्छविः कांतिर्यस्येति विद्रुमच्छविः भौमरूपः। गुरुशुक्रनामान्यग्रे वक्ष्यंते। ५० भक्तिगम्याय०। भक्त्या परमप्रीत्या गम्यः प्राप्तुं योग्य इत्यर्थः। ५१ परंब्रह्ममृगबाणार्पणाय०। परंब्रह्मरूपो यो मृगः अन्वेष्यस्तस्मिन् बाणस्य मनोरूपस्य अर्पणं यस्मात्स परंब्रह्ममृगबाणार्पणः तदुक्तमेकनवतौ "प्रणवो धनुः शरो ह्यात्मा ब्रह्म लक्षणमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इति। ५२ अनघाय०।

लोकपालोंऽतर्हितात्मा कल्पादिः कमलेक्षणः॥ वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ॥ ६० ॥ चंद्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ॥
भक्तिगम्यः परं ब्रह्म मृगबाणार्पणोऽनघः ॥ ६१ ॥ अद्रिराजालयः कांतः परमात्मा जगद्गुरुः ॥ सर्वकर्माचलस्त्वष्टा मंगल्यो मंगलावृतः ॥६२॥
महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ॥ अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ॥ ६३ ॥

नास्ति अघं पापं यस्मात्सोऽनघः तदुक्तं भागवते "यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति तत्" इति ॥ ६१ ॥ ५३ अद्रिराजालयाय०। अद्रिराजेषु मेर्वादिषु आलयानि यस्य सोऽद्रिराजालयः। ५४ कांताय०। कः ब्रह्मा अंते सारथिभूतः समीपे यस्य स कांतः। ५५ परमात्मने०। परमः सर्वोत्कृष्टश्चासावात्मा च परमात्मा सर्वव्यापकत्वात्सर्वत्र विद्यमान इत्यर्थः। तदुक्तं 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते' इति। ५६ जगद्गुरवे०। जगतां गुरुर्हितोपदेशक इत्यर्थः। ५७ सर्वकर्माचलाय०। सर्वकर्म पूजादिकमचलमक्षयं यस्मात्स सर्वकर्माचलः। ५८ त्वष्ट्रे०। त्वक्षति सूर्यमपि तनूकरोतीति त्वष्टा विश्वकर्मरूपः। ५९ मंगल्याय मंगलावृताय०। मंगलाय हितो मंगल्यस्तस्मै अत एव मंगलेन आवृतो वृत इत्यर्थः ॥ ६२ ॥ ६० महातपसे०। महत्सर्वातिशयितं तपो यस्य स महातपाः। ६१ दीर्घतपसे०। दीर्घमजरामरत्वाद्बहुकालं तपो यस्य स दीर्घतपाः। ६२ स्थविष्ठाय०। अतिशयेन स्थूलः स्थविष्ठः स्थूलदूरेत्यादिना साधुः। ६३ स्थविराय०। स्थविरो वृद्धरूपः। ६४ ध्रुवाय०। ध्रुवोऽचंचल इत्यर्थः।६५ अह्ने०। अहर्दिवसरूपः। ६६ संवत्सराय०। संवत्सरस्तत्संज्ञकालरूपः। ६७ व्याप्तये०। व्याप्तिः सर्वहेतुसमानाधिकरणाभावाप्रतियोगिरूपः सर्वत्र विद्यमान इत्यर्थः। ६८ प्रमाणाय०। प्रमाणं मर्यादारूपः 'प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु' इति विश्वः। ६९ परमाय०। परा मुक्तिरूपा मा लक्ष्मीर्यस्य स परमः। ७० तपसे०। तपो ऋतादिरूपः 'ऋतं तपः सत्यं तपः' इति श्रुतेः ॥ ६३ ॥ ७१ संवत्सरकराय०। संवत्सराणां प्रभवादीनां करः उत्पादक इत्यर्थः। ७२ मंत्राय प्रत्ययाय०। मंत्रो गुप्तसंभाषणीयस्तस्मै प्रत्ययाय अनुभवरूपायेत्यर्थः। ७३ सर्वदर्शनाय०। सर्वं दृश्यते यस्मिन्नसौ सर्वदर्शनः। ७४ अजाय०। न जायत इत्यजः नित्यसिद्ध इत्यर्थः। ७५ सर्वेश्वराय०। सर्वेषामीश्वरः सर्वेश्वरः। ७६ क्षिग्धाय०। क्षिग्धो भक्तस्नेहयुक्तः। ७७ महारेतसे महाबलाय०। महदस्कन्नत्वात्पूज्यं रेतो यस्य स महारेतास्तस्मै 'ऊर्ध्वरेतं विरूपाक्षम्' इति श्रुतेः अत एव महदतिशयितं बलं यस्य स महाबलः॥६४॥७८ योगिने०। योगी नित्ययोगविशिष्टः।७९ योग्याय०। योगाय प्रभवतीति योग्यः। ८० महारेतसे०। महत्सुवर्णरूपत्वात्पूज्यं रेतो यस्य स महारेताः। ८१ सिद्धाय०। सिद्धो नित्यनिष्पन्नरूपः। ८२ सर्वादये०। सर्वस्य आदिः प्रारंभो यस्मात्स सर्वादिः।८३ अग्निदाय०। अग्निं ज्ञानाग्निं ददातीत्यग्निदः तदुक्तं भगवद्गीतायां "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन इति।८४ वसवे०। वसतीतिवसुः सर्वभूतावास इत्यर्थः।८५ वसुमनसे० वसु प्रशस्तं मनो यस्मात्स वसुमनाः ८६ सत्यसर्वपापहराय०। सत्यश्चासौ सर्वपापहरश्च सत्यसर्वपापहरः।८७ हराय०। ह अद्भुतं राति ददातीति हरः ॥ ६५ ॥ ८८ अमृताय शाश्वताय०। अमृतो मोक्षरूपस्तस्मै अत एव शाश्वतो नित्यः।८९ शांताय०। शांतो निरपृहत्वात्सुखरूपः।९० बाणहस्ताय प्रतापवते बाणस्त्रिपुरांतकशरः हस्ते यस्य स बाणहस्तस्तस्मै अत एव प्रतापवान् शौर्य विशिष्टः।

संवत्सरकरो मंत्रः प्रत्ययः सर्वदर्शनः ॥ अजः सर्वेश्वरः क्षिग्धो महारेता महाबलः ॥ ६४ ॥ योगी योग्यो महारेताः सिद्धः सर्वादिरग्निदः ॥
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ॥६५॥ अमृतः शाश्वतः शांतो बाणहस्तः प्रतापवान् ॥ कमंडलुधरो धन्वी वेदांगो वेदविन्मुनिः ॥ ६६ ॥
भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः॥ अतींद्रियो महामायः सर्वावासश्चतुष्पथः ॥ ६७ ॥ कालयोगी महानादो महोत्साहो महाबलः ॥
महाबुद्धिर्महावीर्यो भूतचारी पुरंदरः ॥ ६८ ॥

९१ कमंडलुधराय०। कमंडलोः करकस्य धरो धारक इत्यर्थः।९२ धन्विने०। धन्वी पिनाकधन्वविशिष्टः। ९३ वेदांगाय०। वेदरूपाण्यंगानि यस्य स वेदांगः 'तस्य यजुरेव शिरः' इति श्रुतेः। ९४ वेदविदे०। वेदानां वित् ज्ञानं यस्मात्स वेदवित्। "यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः। ९५ मुनये०। मननशीलो मुनिर्यतिरूपः "मुनिर्यती मुदीबुद्धपिप्पलागस्तिकिंशुके" इति विश्वः॥६६॥९६ भ्राजिष्णवे०। भ्राजाति दीप्यते तच्छीलः भ्राजिष्णुः।९७ भोजनाय भोक्त्रे०। भुज्यते तद्भोजनं अन्नं तद्रूपस्तस्मै भोक्त्रे अन्यत्र हारकत्रे इत्यर्थः। ९८ लोकनेत्रे०। लोकानां नेता नियंतेत्यर्थः। ९९ दुराधराय०। दुःखेनापि आधर्तुं स्वांके स्थापयितुमशक्यो दुराधरः। ३०० अतींद्रियाय०। इंद्रियाणि अतिक्रांतो तींद्रियः इंद्रियागोचर इत्यर्थः॥इति तृतीयशतकं समाप्तम्॥३॥१ महामायाय०। महती दुष्पारा माया यस्य स महामायः।२सर्वावासाय०। सर्वस्य विश्वस्यावासः स्थानभूतः सर्वावासः।३ चतुष्पथाय०। चत्वारः पंथानो धर्मादयो यस्मात्स चतुष्पथः॥६७॥४ कालयोगिने०। कालं मृत्युं स्वकार्ये योजयति तच्छीलः कालयोगी संपृच्छतेति विनुप् 'मृत्युर्धावति पंचमः' इति श्रुतेः।५ महानादाय०। महान्पूज्यः नादो अनाहत ध्वनिर्यस्मात्स महानादः। ६ महोत्साहाय०। महान् पूज्यः उत्साहो यस्य स महोत्साहः। ७ महाबलाय०। महत् बलं यस्मात्स महाबलः। ८ महाबुद्धये०। महती पूज्या बुद्धिर्यस्मात्स महाबुद्धिः। ९ महावीर्याय०। महद्वीर्यं यस्मात्स महावीर्यः।१० भूतचारिणे०। भूतेषु सर्वप्राणिषु चरति तच्छीलो भूतचारी। ११ पुरंदराय०। पुराणि त्रिपुराणि दारयतीति पुरंदरः 'वाचंयमपुरंदरौ च' इति निपातनात्पुरःशब्दस्यामंतत्वम् ॥ ६८ ॥ १२ निशाचराय०। निशायां कालरात्र्यां चरति क्रीडत इति निशाचरः इयं कथा योगवासिष्ठादौ विस्तृता। १३ प्रेतचारिमहाशक्तये०। प्रेतेन शववाहनेन चरति तच्छीला प्रेतचारिणी सा चासौ महाशक्तिश्च प्रेतचारिमहाशक्तिः चामुंडारूप इत्यर्थः 'पुंवत्कर्मधारयः' इति पुंवत् तदुक्तं सप्तशत्यां 'चामुंडा शववाहना' इति। १४ महाद्युतये०। महती सर्वातिशायिता द्युतिर्दीप्तिर्यस्य स महाद्युतिः तदुक्तं ब्रह्मोत्तरखंडे 'सूर्यकोटिप्रतीकाशम्' इति। १५ अनिर्देश्यवपुषे०। अनिर्देश्यं वक्तुमप्यनर्हं वपुर्यस्य सोऽनिर्देश्यवपुः तदुक्तं महिम्नि 'अतीतः पंथानं तव च महिमा वाङ्मनसयोः' इति। १६ श्रीमते०। श्रीमान्नित्यश्रीयुक्तः। १७ सर्वहार्यमिताय०। सर्वं हरति तच्छीलः सर्वहारी महाकालस्तेनाप्यमितोऽपरिमित इत्यर्थः। १८ गतये०। गतिः सन्मार्गरूपः 'गतिर्मार्गे दशायां च ज्ञाने यात्राभ्युपाययोः' इति विश्वः ॥ ६९ ॥ १९ बहुश्रुताय०। बहु श्रुतं शास्त्रं यस्मात्स बहुश्रुतः। २० बहुमयाय०। बहु अपारं मयः सुखं यस्मात्स बहुमयः। २१ नियतात्मने०। नियतानां नियतमनसामात्मा। सततं गम्यमान इत्यर्थः। २२ भवोद्भवाय०। भवस्य संसारस्योद्भवः प्रादुर्भावो यस्मात्स भवोद्भवः। २३ ओजस्तेजोद्युतिकराय०। ओजो बलं तेजः शौर्यं द्युतिर्दीप्तिस्तासां कर ओजस्तेजोद्युतिकरः। २४ नर्तकाय०। नर्तयतीति नर्तकः जगत्सूत्रधार इत्यर्थः नृतिधातोःण्वुल्। २५ सर्वकामकाय०।

निशाचरः प्रेतचारिमहाशक्तिर्महाद्युतिः ॥ अनिर्देश्यवपुः श्रीमान्सर्वहार्यमितो गतिः ॥ ६९ ॥ बहुश्रुतो बहुमयो नियतात्मा भवोद्भवः ॥
ओजस्तेजो द्युतिकरो नर्तकः सर्वकामकः ॥ ७० ॥ नृत्यप्रियो नृत्यनृत्यः प्रकाशात्मा प्रतापनः ॥ बुद्धः स्पष्टाक्षरो मंत्रः सन्मानः सारसंप्लवः ॥ ७१ ॥ युगादिकृद्युगावर्तो गंभीरो वृषवाहनः ॥ इष्टो विशिष्टः शिष्टेष्टः शरभः शरभो धनुः ॥ ७२ ॥

सर्वो विश्वरूपः कामोभिलाषो यस्य स सर्वकामुकः 'सोकामयत' इति श्रुतेः। 'कामः स्मरेऽभिलाषे च' इति विश्वः ॥ ७० ॥ २६ नृत्यप्रियाय०। नृत्यं नर्तनं प्रियं यस्य स नृत्यप्रियः।२७ नृत्यनृत्याय०। नृत्यं नृत्यान्नर्तनाद्यस्य स नृत्यनृत्यः। नृत्यप्रवर्तक इत्यर्थः।२८ प्रकाशात्मने प्रतापनाय०। प्रकाशः प्रदीप्तः आत्मा देहो यस्य स प्रकाशात्मा तस्मै अत एव प्रतापनो निदाघेन संतापकारकसूर्यरूपः।२९ बुद्धस्पष्टाक्षराय०। स्पष्टं स्वतः प्रकाशं च तदक्षरं च स्पष्टाक्षरं ब्रह्म बुद्धं ज्ञातं स्पष्टाक्षरं सनकादिभिर्यस्मात्स बुद्धस्पष्टाक्षरः।३० मंत्राय०। मननात्त्रायत इति मंत्रः गायत्र्यादिरूप इत्यर्थः।३१ सन्मानाय०। सतां मानः प्रमाणभूत इत्यर्थः।३२ सारसंप्लवाय०। सम्यक् प्लवः संप्लवः सारो वरश्चासौ संप्लवश्च सारसंप्लवः दुष्पारभवांबुधिपोतरूप इत्यर्थः 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः ॥ ७१ ॥ ३३ युगादिकृद्युगावर्ताय०। युगादेर्युगादिकालस्य कृत्कर्ता चासौ युगानि कृतादीनामावर्तक इति युगावर्तः। ३४ गंभीराय०। गंभीरोऽतलस्पर्शो विज्ञानमयस्वरूप इत्यर्थः। ३५ वृषवाहनाय० वृषो धर्मः वाहनं यस्य स वृषवाहनः "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। ३६ इष्टाय०। इष्टः परमानंदात्मत्वेन सर्वप्रिय इत्यर्थः 'आत्मनः कामाय सर्वं प्रियं भवति' इति

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

श्रुतेः । ३७ विशिष्टाय शिष्टेष्टाय० । विशिष्टः सर्वश्रेष्ठोऽत एव शिष्टानां विदुषामिष्टः प्रियो वा शिष्टैरिष्टः पूजितः । ३८ शरभाय० । शरभस्तत्संज्ञकपक्षिरूपः । ३९. शरभाय धनुषे० । शरं भजतीति शरभस्तस्मै अत एव धनुषे धनूरूपायेत्यर्थः ॥ ७२ ॥ ४० अपां निधये० । अपां गंगोदकानां निधीयंत्यस्मिन्निति निधिः स्थानभूतः उपसर्गे घोः किरिति किः ।४१ अधिष्ठानविजयाय० । अधिष्ठानस्य लिंगशरीरस्य विजयो नाशो यस्मात्सोऽधिष्ठानविजयः । ४२ जयकालविदे० । जयकालस्य वित् ज्ञानं यस्मात्स जयकालवित् । ४३ प्रतिष्ठिताय० । प्रतिष्ठा जगत्स्थितिः संजाता यस्य स प्रतिष्ठितः । ४४ प्रमाणज्ञाय० । प्रमाणं ब्रह्मांडादिपरिमाणं जानातीति प्रमाणज्ञः । ४५ हिरण्यकवचाय० । हिरण्यस्य कवचं यस्य स हिरण्यकवचो हिरण्यगर्भरूपः । ४६ हरये० । हरति स्मृतिमात्रेण पातकमपनयति हरिः ॥ ७३ ॥ ४७ विरो चनाय० । विशेषेण सर्वातिशयेन रोचत इति विरोचनः । ४८ सुरगणाय० । सुराः देवाः गणाः पार्षदाः यस्य स सुरगणः । ४९ विद्येशाय विबुधाश्रयाय० । विद्यायाः ईशः नियंता तस्मै अत एव विबुधानां ज्ञानिनामाश्रयो विबुधाश्रयः । ५० बालरूपाय० । बालवद्रूपं स्वरूपं यस्य स बालरूपः इयं कथा भरते द्रोणपर्वणि" पुराणि दग्धवंतं तं देवी याता प्रवीक्षितुम्" "बालमंकगतं कृत्वा स्वयं पंचशिखं पुनः" इत्यादिना ५१ बलोन्माथिने० । बलान्यसुरसैन्यान्युन्मंथति तच्छीलो बलोन्माथी । ५२ विवर्ताय०

अपां निधिरधिष्ठानं विजयो जयकालवित् ॥ प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ॥ ७३ ॥ विरोचनः सुरगणो विद्येशो विबुधाश्रयः ॥ बालरूपो बलोन्माथी विवर्तो गहनो गुरुः ॥ ७४ ॥ करणं कारणं कर्ता सर्वबंधविमोचनः ॥ विद्वत्तमो वीतभयो विश्वभर्ता निशाकरः ॥ ७५ ॥ व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ॥ दुंदुभो ललितो विश्वो भवात्मात्मनिसंस्थितः ॥ ७६ ॥ वीरेश्वरो वीरभद्रो वीरहा वीरभृद्विराट् ॥ वीरचूडामणिर्वेत्ता तीव्रनादो नदीधरः ॥ ७७ ॥

विशेषेण वर्तयति जगद्भ्रमं करोतीति विवर्तः । ५३ गहनाय गुरवे० । गहनः स्वतो दुर्बोधस्तस्मै गुरवे हितोपदेशकरूपायेत्यर्थः ॥ ७४ ॥ ५४ करणाय० । जगदुत्पत्तौ प्रकृष्टतमं कारणं करणं मनस्तद्रूपः । ५५ कारणाय० । कारणो निमित्तकारणबुद्धिरूपः । ५६ कर्त्रे० । करोतीति कर्ता सकलोत्पादकाहंकाररूपः । ५७ सर्वबंधविमोचनाय० । विमुच्यते अनेनेति विमोचनः । सर्वबंधेभ्यो विमोचनः परमात्मरूपः । ५८ विद्वत्तमाय वीतभयाय० । विद्वत्सु श्रेष्ठो विद्वत्तमस्तस्मै अत एव वीतं भयं यस्मात्स वीतभयः । ६९ विश्वभर्त्रे० विश्वं बिभर्ति तच्छीलो विश्वभर्ता विश्वपोषक इत्यर्थः ताच्छील्ये तृन् । ६० निशाकराय० । निशां प्रलयरूपां रात्रिं करोति तच्छीलो निशाकरः ॥ ७५ ॥ ६१ व्यवसायाय० । विशेषेण अवसायस्तत्त्वनिश्चयो यस्मात्स व्यवसायः । ६२ व्यवस्थानाय० । विशेषेणावस्थानं पुनरावृत्तिशून्यं यस्मात्स व्यवस्थानः । ६३ स्थानदाय० । स्थानानि इंद्रादिपदानि ददातीति स्थानदः । ६४ जगदादिजाय० । जगतामादिजो महान्यस्मात्स जगदादिजः । ६५ दुंदुभाय० । दुंदुभिर्यस्यास्तति दुंदुभो नरेंद्ररूपः 'नराणां च नरेंद्रोहम्' इति भगवद्गीतोक्तेः । ६६ ललिताय० । ललितः सर्वसुंदररूपः । ६७ विश्वस्मै० । विश्वो जगद्रूप इत्यर्थः । ६८ भवात्मात्मनिसंस्थिताय० । भवात्मनां पांचभौतिकदेहानामात्मनि जीवे संस्थितोंतर्यामिरूपेण विद्यमानः ॥ ७६ ॥ ६९ वीरेश्वराय वीरभद्राय० । वीराणां शूराणामीश्वरो वीरेश्वरस्तस्मै वीरभद्राय तत्संज्ञकगणेश्वररूपायेत्यर्थः । ७० वीरघ्ने० । वीरान् हंतीति वीरहा । ७१ वीरभृद्विराजे० वीरान्बिभर्ति ते वीरभृतस्तेषां विराट् सार्वभौम इत्यर्थः । ७२ वीरचूडामणये० । वीराणां चूडामणिः शिरोरत्नभूतः "चूडामणिः शिरोरत्नम्" इत्यमरः । ७३ वेत्रे० । वेत्ता सर्वज्ञ इत्यर्थः । ७४ तीव्रनादाय० । तीव्रोतिशयितः नादो यस्य स तीव्रनादः । ७५ नदीधराय० । नदीनां धरो नदीधरः सागररूपः ॥ ७७ ॥ ७६ आज्ञाधाराय० । आज्ञा धारा अविच्छिन्ना यस्य स आज्ञाधारः । ७७ त्रिशूलिने० । त्रिशूलमस्यास्तीति त्रिशूली । ७८ शिपिविष्टाय० । शिपयो रश्मयस्तेषु प्रविष्टः तदुक्तं विष्णुसहस्रनामभाष्ये "शिपयो रश्मयो मताः । तत्र प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते" इति । ७९ शिवालयाय० । शिवायाः पार्वत्याः आलयः स्थानभूतः । ८० वालखिल्याय० । वालखिल्यस्तत्संज्ञकऋषिरूपः । ८१ महाचापाय० महद्दिदेहराजपूज्यं चापं धनुर्यस्य स महाचापः । ८२ तिग्मांशवे० । तिग्मास्तीक्ष्णाः अंशवः किरणाः यस्य स तिग्मांशुः सूर्यरूपः । ८३ निधये अव्ययाय० । निधिः पद्मादिरूपस्तस्मै अत एवाव्ययाय नाशशून्यायेत्यर्थः ॥ ७८ ॥ ८४ अभिरामाय० । अभि सर्वतः रमंते योगिनो यस्मिन्नित्यभिरामः । ८५ सुशरणाय० । शोभनश्चासौ शरणो रक्षिता च सुशरणः सर्वभयनिवारक इत्यर्थः । ८६ सुब्रह्मण्याय० । 'तपो वेदाश्च सत्यं च ज्ञानं च ब्रह्मसंज्ञितम्' तेभ्यः सुतरां हितः सुब्रह्मण्यः । ८७ सुधापतये० । सुधायाः अमृतस्य पतिः स्वामीत्यर्थः । ८८ मघवते कौशिकाय० । मघवते शक्ररूपायात एव कौशिकस्तत्संज्ञः "अहिल्यायै जारकौशिकब्राह्मणे" इति श्रुतेः 'कौशिको गुग्गुलशक्रयोः इति विश्वः । ८९ गोमते० । गौर्विश्वरूपास्ति यस्य स

आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ॥ वालखिल्यो महाचापस्तिग्मांशुर्निधिरव्ययः ॥ ७८ ॥ अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ॥ मघवान्कौशिको गोमान् विश्रामः सर्वशासनः ॥ ७९ ॥ ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत ॥ अमोघदंडी मध्यस्थो हिरण्यो ब्रह्मवर्चसी ॥ ८० ॥ परमार्थः परमयः शंवरो व्याघ्रकोनलः ॥ रुचिर्वररुचिर्वंद्यो वाचस्पतिरहर्पतिः ॥ ८१ ॥

गोमान् इयं कथा अस्मिन्नेवा ईशानकल्पवृत्तांते उक्ता । ९० विश्रामाय० । विगतं श्रामं जन्ममरणादिश्रमसमूहो यस्मात्स विश्रामः तस्य समूह इत्यण् । ९१ सर्वशासनाय० । सर्वस्मिन् शासनं यस्य स सर्वशासनः ॥ ७९ ॥ ९२ ललाटाक्षाय० । ललाट अक्षि नेत्रं यस्य स ललाटाक्षः । ९३ विश्वदेहाय० । विश्वं जगद्देहो यस्य स विश्वदेहः । ९४ साराय० । सारः प्रलयेपि विद्यमानत्वान्मुख्यस्थिरांशरूपः । ९५ संसारचक्रभृते० संसारचक्रमखिलप्रपंचगणं बिभर्ति पुष्णातीति संसारचक्रभृत् 'चक्रो गणे चक्रवाके' इति विश्वः । ९६ अमोघदंडिने० । अमोघदंडोऽस्ति यस्य सोऽमोघदंडी । ९७ मध्यस्थाय० मध्ये न्याये तिष्ठतीति मध्यस्थः सर्वसमत्वादुदासीन इत्यर्थः 'मध्यं न्यायेवकाशे च इति' विश्वः । ९८ हिरण्याय० । हिरण्यः स्वर्णरूपः 'हिरण्यं तेजसि स्वर्णे' इति विश्वः । ९९ ब्रह्मवर्चसिने० । ब्रह्मवर्चस्तपोदीप्तिर्यस्यास्तीति ब्रह्मवर्चसी ॥ ८० ॥ ४०० परमार्थाय० परमो मोक्षरूपः अर्थो यस्मात्स परमार्थः ॥ इति चतुर्थशतकं समाप्तम् ॥ ४ ॥ १ परमयसे० । परं दुःखातीतं च तन्मयः सुखं परमयः आत्यंतिकसुखरूप इत्यर्थः । २ शंवराय० । शं कल्याणं वरं यस्मात्स वबयोरभेदाच्छंवरो वा जलरूपः 'शंवरं जलम्' इत्यमरः । ३ व्याघ्रकाय० । व्याघ्रस्य तत्संज्ञकदैत्यस्य कः शमनो नाशक इत्यर्थः 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च इति' विश्वः । ४ अनलाय० अनलोग्निरूपः । ५ रुचये० । रुचिर्दीप्तिरूपः । ६ वररुचये० । वरा श्रेष्ठा रुचिर्दीप्तिर्यस्य वा यस्मात्स वररुचिः । ७ वंद्याय० । वंद्यः सर्वेषां स्तवार्ह इत्यर्थः । ८ वाचस्पतये० वाचो विद्यायाः पतिर्वाचस्पतिः । 'ईशानः सर्वविद्यानाम्' इति श्रुतेः । ९ अहर्पतये० । अह्नो दिवसस्य पतिः अहर्पतिः अहरादीनामिति रेफः ॥ ८१ ॥ १० रवये विरोचनाय० रवये सूर्यरूपायात एव विशेषेण रोचयति ब्रह्मांडं दीपयतीति विरोचनः । ११ स्कंधाय० । स्कंधः समूहरूपः 'स्कंधो बाहुमूलसमूहयोः' इति विश्वः । १२ शास्त्रे वैवस्वताय० शास्तीति शास्ता तस्मै वैवस्वताय यमरूपायेत्यर्थः 'यमः संयमतामहम्' इति भगवद्गीतोक्तेः । १३ अजनाय० । नास्ति जनः प्रादुर्भावो यस्य सोऽजनः जनी प्रादुर्भावेऽस्माद्धः । १४ युक्तये० । युक्तिर्योजनं समाधिरूपः 'युक्तिर्न्याये च योजने' इति विश्वः । १५ उन्नतकीर्तये० । उन्नता अत्युच्चा कीर्तिर्यस्मात्स उन्नतकीर्तिः । १६ शांतरागाय० । शांतानां त्यक्तैषणानां रागः प्रीतिर्यस्य वा यस्मिन्स शांतरागः । १७ पराजयाय० । पराजयति सर्वानभिभवतीति पराजयः ॥ ८२ ॥ १८ कैलासपतिकामारये० । कैलासस्य तत्संज्ञकपर्वतस्य पतिश्चासौ कामारिश्च मदननाशक इत्यर्थः । १९ सवित्रे० । सूतेसौ सविता जगत्प्रसूतिरित्यर्थः । २० रविलोचनाय० । रविः सूर्यः लोचनं यस्य स रविलोचनः । २१ विद्वत्तमाय० । ताम्यतीति तमः विदुषां तमो कांक्षक इत्यर्थः । २२ वीतभयाय० । वीतं व्याप्तं भयं यस्य स वीतभयः वी गतिव्याप्तीत्यादिधात्वर्थनिर्देशात् । २३ विश्वहर्त्रे अनिवारिताय० । विश्वं हरति संहरतीति विश्वहर्ता तस्मै अनिवारितः केनाप्यवारित इत्यर्थः ॥ ८३ ॥ २४ नित्याय० । नित्योऽव्यय इत्यर्थः । २५ नियतकल्याणाय० । नियतमखंडितं

रविर्विरोचनः स्कंधः शास्ता वैवस्वतो जनः ॥ युक्तिरुन्नतकीर्तिश्च शांतरागः पराजयः ॥ ८२ ॥ कैलासपतिकामारिः सविता रविलोचनः ॥ विद्वत्तमो वीतभयो विश्वहर्ता निवारितः ॥ ८३ ॥ नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ॥ दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ॥ ८४ ॥ उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोभयः ॥ अनादिर्भूर्भुवो लक्ष्मीः किरीटित्रिदशाधिपः ॥ ८५ ॥ विश्वगोप्ता विश्वभर्ता सुधीरो रुचिरांगदः ॥ जननो जनजन्मादिः प्रीतिमान्नीतिमान्ध्रुवः ॥ ८६ ॥

कल्याणं यस्मात्स नियतकल्याणः । २६ पुण्यश्रवणकीर्तनाय० । पुण्ये श्रवणकीर्तने यस्य स पुण्यश्रवणकीर्तनः । २७ दूरश्रवसे० । दूरे दूरदेशेपि श्रवः श्रवणं यस्मात्स दूरश्रवाः २८ विश्वसहाय० । विश्वं सहति आमर्षतीति विश्वसहः । २९ ध्येयाय० । ध्यातुं चिंतितुं योग्यो ध्येयः । ३० दुःस्वप्ननाशनाय० । दुःस्वप्नानि नाशयति स्मृतिमात्रेण निष्फलानि करोतीति दुःस्वप्ननाशनः ॥ ८४ ॥ ३१ उत्तारकाय० । उत्तारयति स्वभक्तान्भवसमुद्रपारं नयतीत्युत्तारकः । ३२ दुष्कृतिघ्ने० । दुष्कृतीन् पातकिजनान् हंतीति दुष्कृतिहा । ३३ दुर्धर्षाय० । दुःखेनापि धर्षितुमशक्यो दुर्धर्षः । ३४ दुःसहाय न० । दुःखेनापि असुरादिभिरसह्यो दुःसहः । ३५ अभयाय० । नास्ति भयं यस्मात्सोऽभयः । ३६ अनादये० नास्ति आदिर्यस्य सोनादिः । ३७ भुवे० भूः पृथिवीरूपः । ३८ भुवो लक्ष्म्यै० । भुवः पृथिव्याः लक्ष्मीः शोभारूपः । ३९ किरीटित्रिदशाधिपाय० । किरीटोस्यास्तीति किरीटी स चासौ त्रिदशाधिपश्च किरीटित्रिदशाधिपः मुख्यदेवस्वामीत्यर्थः ॥ ८५ ॥ ४० विश्वगोप्त्रे० । विश्वस्य जगतो गोप्ता रक्षक इत्यर्थः । ४१ विश्वभर्त्रे० विश्वस्य जगतो भर्ता पोषकः । ४२ सुधीराय० । सुतरां धीरो निर्भयः सुधीरः । ४३ रुचिरांगदाय० रुचिराणि रमणीयाण्यंगदानि बाहुभूषणानि यस्य स रुचिरांगदः । ४४ जननाय० । जनयति जगत्प्रादुर्भावं करोतीति जननः [illegible] यतो वा इमानि भूतानि जायंते " इति श्रुतेः । ४६ प्रीति

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मते० । प्रीतिमान्नित्यप्रीतियुक्तः । ४७ नीतिमते० । नीतिमान्नित्यनीतियुक्तः । ४८ नयाय० । नयोन्यायरूपः ' नयो नीतौ द्यूतभेदे न्याये नेतरि च स्मृतः ' इति विश्वः ॥८६॥ ४९ विशिष्टाय० । विशेषेण शिष्टः प्रलयकालेपि विद्यमान इत्यर्थः । ५० काश्यपाय० । कश्यपस्य तत्संज्ञकऋषेरपत्यं पुमान् काश्यपः । ५१ भानवे० । भातीति भानुः सूर्यरूपः ५२ भीमाय० । बिभेत्यस्मादिति भीमः । ५३ भीमपराक्रमाय० । भीमो भयंकरः पराक्रमो यस्मात्स भीमपराक्रमः । ५४ प्रणवाय० । प्रणामयतीति प्रणवः ओंकाररूपः । तदुक्तं शिवाथर्वशिरसि " अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एवर्चो यजूंषि सामान्यथर्वांगिरसश्च यज्ञे ब्रह्म ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः " इति । ५५ सतथाचाराय० । सतथा आवहादिसप्तवायुप्रकारेण चारः गमनं यस्मिन् स सतथाचारः । ५६ महाकायाय महाधनुषे० । महानपरिमितः कायः शरीरं यस्य स महाकायोत एव महद् परिमितं धनुर्यस्य स महाधनुः ॥ ८७ ॥ ५७ जन्माधिपाय० । जन्मनः उत्पत्तेरधिपो जन्माधिपः । ५८ महादेवाय० । महांतः पूज्याः देवा यस्मात्स महादेवः । ५९ सकलागमपारगाय० सकलागमानां सर्ववेदानां पारगोंतवेत्ता सकलागमपारगः । ६० तत्त्वातत्त्वविवेकात्मने० । तत्त्वातत्त्वविवेकाज्ञानविचारः आत्मा स्वरूपं यस्य स तत्त्वातत्त्वविवेकात्मा । ६१ विभूष्णवे० । विशेषेण भवति सर्वत्र विद्यमानस्तच्छीलो विभूष्णुः चाद्भुव इति ताच्छील्ये स्नुः । ६२ भूतिभूषणाय० । भूतिरणिमाद्यैश्वर्यं भूषणं यस्य स भूतिभूषणः

विशिष्टः काश्यपो भानुर्भीमो भीमपराक्रमः ॥ प्रणवः सतथाचारो महाकायो महाधनुः ॥८७॥ जन्माधिपो महादेवः सकलागमपारगः ॥ तत्त्वातत्त्वविवेकात्मा विभूष्णुर्भूतिभूषणः ॥ ८८ ॥ ऋषिर्ब्राह्मणविज्जिष्णुर्जन्ममृत्युजरातिगः ॥ यज्ञो यज्ञपतिर्यज्वा यज्ञांतो मोघविक्रमः ॥ ८९ ॥ महेंद्रो दुर्भरः सेनी यज्ञांगो यज्ञवाहनः ॥ पंचब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ॥ ९० ॥ आत्मयोनिरनाद्यंतो षड्विंशत्सप्तलोकधृक् ॥ गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ॥ ९१ ॥

" विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा " इत्यमरः ॥ ८८ ॥ ६३ ऋषये० ऋषिरतींद्रियदर्शकः " रुद्रो महर्षिः " इति श्रुतेः । ६४ ब्राह्मणविज्जिष्णवे० ब्राह्मणानां वित् ज्ञानं जिष्णुर्जयशीलं यस्माद्वा यस्य स ब्राह्मणविज्जिष्णुः । ६५ जन्ममृत्युजरातिगाय० । जन्ममृत्युजराः अतिगच्छतीति जन्ममृत्युजरातिगः । ६६ यज्ञाय यज्ञपतये० । यज्ञोग्निष्टोमादिरूपस्तस्मै यज्ञपतये यज्ञस्वामिन इत्यर्थः । ६७ यज्वने० । यजतीति यज्वा सकलयजमानरूपः । ६८ यज्ञांताय० । यज्ञानामंतः समाप्तिर्यस्मात्स यज्ञांतः । ६९ अमोघविक्रमाय० । अमोघोऽनिष्फलः विक्रमो यस्य सोऽमोघविक्रमः ॥८९॥ ७० महेंद्राय० । महांश्चासौ इंद्रः परमेश्वरश्च महेंद्रः । ७१ दुर्भराय० दुःखेनापि भर्तुं चित्ते धारयितुमशक्यो दुर्भरः ७२ सेनिने० । सेना प्रमथादिसैन्यं यस्यास्तीति सेनी व्रीह्यादित्वादिनिः । ७३ यज्ञांगाय यज्ञवाहनाय० यज्ञाः अंगानि यस्य स यज्ञांगस्तस्मै यज्ञः वाहनं प्रापको यस्य स यज्ञवाहनः । ७४ पंचब्रह्मसमुत्पत्तये० । पंचब्रह्मणां सद्योजातादीनां समुत्पत्तिर्यस्मात्स पंचब्रह्मसमुत्पत्तिः ७५ विश्वेशाय० विश्वस्येशो नियंतेत्यर्थः ७६ विमलोदयाय० । विमलो निष्कलंकः उदयो यस्मात्स विमलोदयः ॥९०॥ ७७ आत्मयोनये० । आत्मैव योनिः कारणं यस्य स आत्मयोनिः निष्कारण इत्यर्थः । ७८ अनाद्यंताय० । न स्त आद्यंतौ यस्य सः अनाद्यंतः । ७९ षड्विंशत्सप्तलोकधृषे० । षड्विंशतत्संख्यतत्त्वानि सप्तलोकांश्च धृष्णोतीति षड्विंशत्सप्तलोकधृक् । ८० गायत्रीवल्लभाय० । गायत्र्याः वल्लभः प्रिय इत्यर्थः । ८१ प्रांशवे० । प्रकृष्टाः अंशवः सुषुम्नादयः किरणाः यस्य स प्रांशुः ८२ विश्वावासाय० । विश्वमावसति अभिव्याप्य तिष्ठतीति विश्वावासः ८३ प्रभाकराय० प्रभां प्रकृष्टदीप्तिं करोति तच्छीलः प्रभाकरः ॥९१॥ ८४ शिशवे० । शिशुर्बालरूपः इयं कथा पार्वतीस्वयंवरे अस्मिन्नेवाग्रे उक्ता । ८५ गिरिरताय० । गिरिषु मंदरादिषु रतः प्रीतियुक्त इत्यर्थः । ८६ सम्राट्सुषेणाय० ॥ सम्राजः सुषेणाः शोभनसेनायुक्ताः यस्मात्स सम्राट्सुषेणः सुषामादिषु चेति षत्वम् । ८७ सुरशत्रुघ्ने० । सुरशत्रून्दैत्यादीन् हंतीति सुरशत्रुहा । ८८ अमोघाय० । न मोघो व्यर्थसंकल्पो यस्य सोऽमोघः सत्यसंकल्प इत्यर्थः । ८९ अरिष्टमथनाय० । अरिष्टानि स्वभक्तसंकटानि मंथति विलोडयतीत्यरिष्टमथनः । ९० मुकुंदाय० । मुकुंदो मुक्तिदः पृषोदरादित्वात्साधुरिति विष्णुसहस्रनामभाष्ये उक्तम् । ९१ विगतज्वराय० । विगतः प्रनष्टः ज्वरः संसारतापो यस्मात्स विगतज्वरः ॥ ९२ ॥ ९२ स्वयंज्योतिषे० । स्वयमात्मनैव ज्योतिः प्रकाशक इत्यर्थः । ९३ अनुज्योतिषे० । अनु अनुलक्ष्येण ज्योतींषि नक्षत्रादीनि यस्य सोऽनुज्योतिः । ९४ आत्मज्योतिषे० । आत्मा देहः ज्योतिश्चैतन्यरूपो यस्य स आत्मज्योतिः । ९५ अचंचलाय० । न चंचलोऽचंचलः कूटस्थ इत्यर्थः । ९६ पिंगलाय० । पिंगलः कडारवर्णः 'कडारः कपिलः पिंगपिशंगौ कद्रुपिंगलौ' इत्यमरः । सितपीतहरिद्रक्तः कडारस्तृणवह्निवत्' इति शब्दार्णवः । ९७ कपिलश्मश्रुणे० । कपिलानि तद्वर्णानि श्मश्रूणि मुखकेशाः यस्य स कपिलश्मश्रुः । ९८ शास्त्रनेत्रत्रयीतनवे० । त्रयी

शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ अमोघोरिष्टमथनो मुकुंदो विगतज्वरः ॥ ९२ ॥ स्वयंज्योतिरनुज्योतिरात्मज्योतिरचंचलः ॥ पिंगलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः ॥ ९३ ॥ ज्ञानस्कंधो महाज्ञानी निरुत्पत्तिरुपप्लवः ॥ भगो विवस्वानादित्यो योगाचार्यो बृहस्पतिः ॥ ९४ ॥ उदारकीर्तिरुद्योगी सद्योगीसदसन्मयः ॥ नक्षत्रमाली राकेशः साधिष्ठानः षडाश्रयः ॥ ९५ ॥ पवित्रपाणिः पापारिर्मणिपूरो मनोगतिः ॥ हृत्पुंडरीकमासीनः शुक्लः शांतो वृषाकपिः ॥ ९६ ॥

वेदत्रयी तनुः शरीरं यस्य स त्रयीतनुः शास्त्रे न्यायव्याकरणे नेत्रे लोचनभूते यस्य स शास्त्रनेत्रश्चासौ त्रयीतनुश्च शास्त्रनेत्रत्रयीतनुः तदुक्तं ' काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति । वस्तुतः शास्त्रे पूर्वोत्तरमीमांसारूपे इत्यर्थः ॥ ९३ ॥ ९९ ज्ञानस्कंधाय० । ज्ञानस्य स्कंधः समूहरूपो ज्ञानस्कंधः । ५०० महाज्ञानिने० । महदपरिच्छिन्नं ज्ञानं यस्यास्तीति महाज्ञानी । इति पंचमं शतकं समाप्तम् ॥५॥१ निरुत्पत्तये० । निर्गता उत्पत्तिर्यस्य स निरुत्पत्तिः उत्पत्तिशून्य इत्यर्थः । २ उपप्लवाय० । उपप्लवो राहुरूपः 'उपप्लवः सैंहिकेय' इति विश्वः । ३ भगाय० । भगः षड्गुणैश्वर्यरूपः । ४ विवस्वते आदित्याय० । विवसो रश्मयः संति यस्य स विवस्वान् तस्मै आदित्याय अदितिपुत्ररूपायेत्यर्थः । ५ योगाचार्याय० । योगानां युक्तीनामाचार्यो गुरुः योगाचार्यः शुक्ररूपः "योगः पूर्वार्यसंनाहौ संगतिज्ञानयुक्तिषु इति विश्वः । ६ बृहस्पतये० । बृहस्पतिः सुराचार्यरूपः ॥ ९४ ॥ ७ उदारकीर्तये० । उदारा श्रोतॄणां सर्वार्थदा कीर्तिर्यस्य स उदारकीर्तिः । ८ उद्योगिने० । उत्सर्गोत्कृष्टः योगो यस्यास्तीति उद्योगी । ९ सद्योगिने० । सद्ब्रह्म योजयति तच्छीलः सद्योगी संपृचेति घिनुण् । १० सदसन्मयाय० । सद्ब्रह्म असन्मायिकं जगदुभयावयवः सदसन्मयः । ११ नक्षत्रमालिने राकेशाय० । नक्षत्रैर्मालते शोभते तच्छीलो नक्षत्रमाली तस्मै राकेशाय चंद्ररूपायेत्यर्थः । १२ साधिष्ठानाय० । अधिष्ठानेन प्रकृत्या सहितः साधिष्ठानः । १३ षडाश्रयाय० षण्णां कामादीनामाश्रयः षडाश्रयः ॥९५॥ १४ पवित्रपाणये० । पवित्राः पाणयो यस्य स पवित्रपाणिः । १५ पापारये० । पापानामरिर्नाशक इत्यर्थः । १६ मणिपूराय० । मणीनां पूरः प्रवाहो यस्मात्स मणिपूरः । १७ मनोगतये० । मनस एव गतिर्गमनं यस्मिन्स मनोगतिरन्येंद्रियाग्राह्य इत्यर्थः । १८ हृत्पुंडरीकमासीनाय० । हृत्पुंडरीके स्वभक्तहृत्कमलमासीनः स्थित इत्यर्थः । १९ शुक्लाय० । शुक्लः श्वेतवर्णः । २० शांताय वृषाकपये० । शांत उपशमयुक्तस्तस्मै अत एव वर्षति कामान्सेचतीति वृषो धर्मस्तं न कंपयति न चालयतीति वृषाकपिः कपि किंचिच्चलने अस्मादौणादिकः इः ॥९६॥ २१ विष्णवे० । वेवेष्टि जगद्व्याप्नोतीति विष्णुः । २२ ग्रहपतये० । ग्रहाणां सोमादिग्रहाणां पतिः स्वामीत्यर्थः । २३ कृष्णाय० । कृषति पापं विलिखतीति कृष्णस्तत्संज्ञ अवतारः । २४ समर्थाय० । सम्यक् संपूर्णः अर्थो यस्य वा यस्मात्स समर्थः । २५ अनर्थनाशनाय० । अर्थो याचना नश्यत्यनेनेत्यनर्थनाशनः । २६ अधर्मशत्रवे० । अधर्मस्य शत्रुर्नाशक इत्यर्थः । २७ अक्षय्याय न क्षय्योऽक्षय्यः क्षयाऽक्षम इत्यर्थः । २८ पुरुहूताय पुरुष्टुताय० । पुरु प्रचुरं हूतं यज्ञेष्वाह्वानं यस्य स पुरुहूतस्तस्मै पुरु बहुलं स्तुतं वेदेषु स्तवनं यस्य स पुरुष्टुत इंद्ररूप इत्यर्थः ॥९७॥ २९ ब्रह्मगर्भाय० । ब्रह्मा गर्भो यस्य स ब्रह्मगर्भः । ३० बृहद्गर्भाय० । बृहद्ब्रह्मांडरूपः गर्भो यस्य स बृहद्गर्भः । ३१ धर्मधेनवे० । धर्मः धेनुः नवप्रसूतगोसदृशो यस्मात्स धर्मधेनुः "धेनुः स्यान्नवसूतिका " इत्यमरः । ३२ धनागमाय० । धनस्य आगमस्तुतिरर्पतं प्राप्तिर्यस्मात्स धनागमः तदुक्तं 'धनं चास्तुतिरर्पतं शिवपूजाविधेः फलम्' इति । ३३ जगद्धितैषिसुगताय० ।

विष्णुर्ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ॥ अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ॥ ९७ ॥ ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ॥ जगद्धितैषिसुगतः कुमारः कुशलागमः ॥ ९८ ॥ हिरण्यवर्णो ज्योतिष्मान्नानाभूतधरो ध्वनिः ॥ अरोगो नियमाध्यक्षो विश्वामित्रो द्विजोत्तमः ॥ ९९ ॥ बृहज्ज्योतिः सुधामा च महाज्योतिरनुत्तमः ॥ मातामहो मातरिश्वा नभस्वान्नागहारधृक् ॥ १०० ॥ पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ निरावरणधर्मज्ञो विरिंचो विष्टरश्रवाः ॥ १०१ ॥

जगद्धितमिच्छंति ते जगद्धितैषिणस्तेषां सुष्ठुसुखेन गतं गमनं यस्मिन् स जगद्धितैषिसुगतः । ३४ कुमाराय० । कुमारयति जगद्रूपेण क्रीडत इति कुमारः । ३५ कुशलागमाय० । कुशलस्य कल्याणस्यागमः प्राप्तिर्यस्मात्स कुशलागमः ॥९८॥ ३६ हिरण्यवर्णाय० । हिरण्यवत्सुवर्णवद्वर्णो यस्य स हिरण्यवर्णः । ३७ ज्योतिष्मते ज्योतिष्मान्नित्यकांतियुक्त इत्यर्थः । ३८ नानाभूतधराय० । नानाभूतानामनंतजीवानां धरो धारक इत्यर्थः । ३९ ध्वनये० । ध्वनिर्नादतत्त्वनिरूपः । ४० अरोगाय० । नास्ति रोगो यस्मात्सोऽरोगः । ४१ नियमाध्यक्षाय० । नियमानामध्यक्षः प्रभुरित्यर्थः । ४२ विश्वामित्राय द्विजोत्तमाय० । विश्वामित्रस्तत्संज्ञस्तस्मै द्विजोत्तमाय ब्राह्मणश्रेष्ठायेत्यर्थः ॥ ९९ ॥ ४३ बृहज्ज्योतिषे० । बृहत्सूर्यरूपं ज्योतिर्यस्मात्स बृहज्ज्योतिः । ४४ सुधाम्ने सुष्ठु धाम तेजो यस्य स सुधामा । ४५ महाज्योतिषे० । महदपरिच्छिन्नं ज्योतिस्तेजोरूपः । ४६ अनुत्तमाय० । नास्ति उत्तमो यस्मात्सोऽनुत्तमः । ४७ मातामहाय० । मातुः जगज्जनन्याः मायायाः पिता जनको मातामहः । ४८ मातरिश्वने० । मातरि अंतरिक्षे श्वयति वर्धते इति मातरिश्वा वायुरूपः 'मातरीति सप्तमीप्रतिरूपकमव्ययमनरव्याख्यायामुक्तम् । ४९ नभस्वते० । नभस्वान् ... नागहारं धृष्णोति प्रगल्भं करोतीति नागहारधृक् नागहारस्य निर्भयधारक इत्यर्थः ॥ १०० ॥ ५१ पुलस्त्याय० । पुलस्त्यस्तत्संज्ञऋषिरूपः । ५२ पुलहाय० । पुलहस्तदभिरूपः । ५३ अगस्त्याय० ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अगस्त्योगस्त्यमुनिरूपः । ५४ जातूकर्ण्याय० । जातूकर्ण्यस्तत्संज्ञकमुनिरूपः । ५५ पराशराय० । पराशरस्तत्संज्ञकऋषिरूपः । ५६ निरावरणधर्मज्ञाय० । निर्गतमा वरणं यस्मात्तादृश धर्म मोक्षधर्म जानातीति निरावरणधर्मज्ञः । ५७ विरिंचाय० । विशेषेण रचयतीति विरिंचो ब्रह्मरूपः पृषोदरादित्वात्साधुरित्यमरव्याख्यायामुक्तम् । ५८ विष्ट रश्रवसे० । विष्टरे अश्वत्थवृक्षे श्रूयत इति विष्टरश्रवाः "वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः" इति त्रिकांडशेषः । श्रुधातो रौणादिक असुन् विष्णुरूप इत्यर्थः ॥ १०१ ॥ ५९ आत्मभुवे० । आत्मनि मनस्येव भवतीत्यात्मभूः प्रद्युम्नरूपः 'शंबरारिर्मनसिजः' इत्यमरः । ६० अनिरुद्धाय० । न निरुद्धोऽनिरुद्धः बाणासुरान्मोचित इयं कथा भागवते विस्तृता । ६१ अत्रिज्ञानमूर्तये० । अत्रिश्चासौ ज्ञानमूर्तिश्चात्रिज्ञानमूर्तिः । ६२ महायशसे० । महत्सर्वपूज्यं यशो यस्य स महायशाः । ६३ लोकचूडामणये० । लोकेषु चूडामणिः शिरोरत्नरूपः । ६४ वीराय० । वीरोऽपराजित इत्यर्थः । ६५ चंडसत्यपराक्रमाय० । चंडस्तत्संज्ञकगणः सत्यपराक्रमो यस्मात्स चंडसत्यपराक्रमः ॥ २ ॥ ६६ व्यालकल्पाय० । व्यालानां सर्पाणां कल्पः प्रथमो वासुकिरूपः 'सर्पाणामस्मि वासुकिः' इति भगवद्गीतोक्तेः । ६७ महाकल्पाय० । महान्पूज्यः कल्पो न्यायो यस्मात्स महाकल्पः । ६८ महा वृक्षाय० । महान् वृक्षः संसारपिप्पलो यस्मात्स महावृक्षः तदुक्तं भगवद्गीतायां "ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्" इति । ६९ कलाधराय० । कलाश्चंद्रकलायाः धरः कलाधरः । ७० अलंकरिष्णवे० । अलं पर्याप्तं सर्वं स्वभक्तेभ्यः करोति तच्छीलोऽलंकरिष्णुः अलंकृञेतीष्णुच् । ७१ अचलाय० । न चलोऽचलः हिमालयरूपः 'स्थावराणां हिमा

आत्मभूरनिरुद्धोत्रिज्ञानमूर्तिर्महायशाः ॥ लोकचूडामणिर्वीरः चंडसत्यपराक्रमः ॥ २ ॥ व्यालकल्पो महाकल्पो महावृक्षः कलाधरः ॥ अलंक रिष्णुस्त्वचलो रोचिष्णुर्विक्रमोत्तमः ॥ ३ ॥ आशुशब्दपतिर्वेगी प्लवनः शिखिसारथिः ॥ असंसृष्टोऽतिथिः शक्रः प्रमाथी पापनाशनः ॥ ४ ॥ वसुश्रवाः कव्यवाहः प्रततो विश्वभोजनः ॥ जर्यो जराधिशमनो लोहितश्च तनूनपात् ॥ ५ ॥

लयः" इति भगवद्गीतोक्तेः । ७२ रोचिष्णवे० । रुचं दीप्तिं साधु करोतीति रोचिष्णुः आङ्केस्तच्छीलतद्धर्मतत्साधुकारिष्विष्णुचित्युक्तत्वात् । ७३ विक्रमोत्तमाय० । विक्रमः उत्तमः सर्वश्रेष्ठो यस्य स विक्रमोत्तमः ॥ ३ ॥ ७४ आशुशब्दपतये० । आशु सत्वरं शब्दपतयः शब्दस्वामिनो यस्मात्स आशुशब्दपतिः "आशु व्रीहौ च सत्वरे" इति विश्वः ७५ वेगिने० । वेगः स्वभक्तकार्यकरणत्वरास्ति यस्य स वेगी । ७६ प्लवनाय० । प्लवंते संसारसागरं तरंत्यनेनेति प्लवनः । ७७ शिखिसारथये० । शिखिनः वह्नेः सारथिः सहायः शिखि सारथिः वायुरूप इत्यर्थः । ७८ असंसृष्टाय० । न संसृष्टोऽसंसृष्टः मायासंपृक्त इत्यर्थः । ७९ अतिथये० । नास्ति तिथिः संकेतागमदिनं यस्य सोऽतिथिस्तत्स्वरूपः तदुक्तं मार्कंडेये "अज्ञातकुलनामानं तत्काले समुपस्थितम् । शोभनाशोभनाकारं तं मन्येत प्रजापतिम्" इति अस्मिस्त्वेकोनाविंशेदेयं सर्व शिवायार्थे शिव एवातिथिः स्वयम् इति । ८० शक्राय प्रमाथिने० । शक्नोतीति शक्रस्तस्मै प्रमथनशीलोऽसुरसैन्यविलोडनशीलः प्रमाथी इंद्ररूप इत्यर्थः ८१ पापनाशनाय० । पापं नश्यत्यनेनेति पापनाशनः ॥ ४ ॥ ८२ वसुश्रवसे० । वसु मधुरं श्रवः श्रवणं यस्य स वसुश्रवाः 'वसुस्मृतं स्यान्मधुरेप्यवच्च' इति विश्वः । ८३ कव्यवाहाय० । कव्यं श्राद्धीयं हविर्वहति प्रापयतीति कव्यवाहस्तत्संज्ञक वह्निरूपः ८४ प्रतताय० । प्रकृष्टं ततं तपो यस्य स प्रततः । ८५ विश्वभोजनाय० । विश्वं भोजनं यस्य स विश्वभोजनः । ८६ जर्याय० । जरितुं योग्यो जर्यः अन्नरूप इत्यर्थः ।

८७ जराधिशमनाय० । जरा वार्धक्यमाधिर्मानसी पीडा ते शमयति नाशयतीति जराधिशमनः । ८८ लोहिताय० । लोहितो रक्तवर्ण इत्यर्थः । ८९ तनूनपाते० । तनूं स्वशरीरमपि न स्पाति स्वभक्तेभ्यः प्रयच्छतीति तनूनपात् 'न भ्राण् न पात्' इति निपातनान्नञः प्रकृतिभावः ॥ ५ ॥ ९० पृषदश्वाय० । पृषतामंबुकणानाम् अश्व इवाश्वस्तदश्ववाहकः पृषदश्वः वायुरूप इत्यर्थः । ९१ नभसे० । नहति जगद्बध्नातीति नभोंतरिक्षरूपः णह बंधनेऽस्मान्नहेर्दिवि भश्चेत्यसुन् । ९२ योनये० । योनिर्जगदाकाररूपः 'योनिः स्यादाकरे भगे' इति विश्वः । ९३ सुप्रतीकाय० । सुष्ठु प्रतीकाः अवयवाः यस्य स सुप्रतीकः 'प्रतीकोवयवे प्रोक्तः' इति विश्वः । ९४ तमिस्रघ्ने० । तमिस्रमज्ञानं हंतीति तमिस्रहा । ९५ निदाघाय तपनाय० । नितरां दह्यतेऽनेनेति निदाघस्तस्मै तपनो ग्रीष्मर्तुरूप इत्यर्थः । अत्र न्यंक्वादित्वात्कुत्वम् । ९६ मेघाय पक्षाय० । मेहते सिंचतीति मेघस्तस्मै पक्षाय पर्वतपक्षभवायेत्यर्थः । तदुक्तमस्मिन् चतुःपंचाशत्तमे 'काष्ठा याह्नाश्च वैरिच्याः पक्षाश्चैव पृथग्विधाः' इत्यादिना । ९७ परपुरंजयाय० । परपुराणि स्वभक्तशत्रुपुराणि जयतीति परपुरंजयः अत्र संज्ञायां भृतॄवृजीति खच् ॥ ६ ॥ ९८ सुखानिलाय० । सुखे अनिलो वायुर्यस्मात्स सुखानिलः यस्सतया सर्वसुखेषु प्राणवायुसंचार इत्यर्थः । ९९ सुनिष्पन्नाय० । सुशोभनं निष्पन्नं यस्मात्स सुनिष्पन्नः सर्वशोभनजनक इत्यर्थः । ६०० सुरभये० । सुष्ठु रमंते हृष्यंति यस्मिन्नसौ सुरभिः रभ राभस्ये इन् औणादिकः ॥ इति षष्ठशतकं समाप्तम् ॥ ६ ॥ १ शिशिरात्म

पृषदश्वो नभोयोनिः सुप्रतीकस्तामिस्रहा ॥ निदाघस्तपनो मेघः पक्षः परपुरंजयः ॥ ६ ॥ सुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ वसंतो माधवो ग्रीष्मो नभस्यो बीजवाहनः ॥ ७ ॥ अंगिरामुनिरात्रेयो विमलो विश्ववाहनः ॥ पावनः पुरुजिच्छक्रस्त्रिविद्यो नरवाहनः ॥ ८ ॥ मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ॥ तेजोनिधिर्ज्ञाननिधिर्विपाको विघ्नकारकः ॥ ९ ॥

काय० । शिशिरस्तत्संज्ञकऋतुरात्मा स्वरूपं यस्य स शिशिरात्मकः । २ वसंताय माधवाय० । वसंतस्तत्संज्ञकऋतुरूपस्तस्मै मधु मकरंदोऽस्त्यस्मिन्निति माधवः । ३ ग्रीष्माय० । ग्रसतीति ग्रीष्मः सर्वरसशोषकतत्संज्ञकऋतुरूपः । ४ नभस्याय नमः । नभसि श्रावणे भवतीति नभस्यो वर्षाऋतुरूपः । ५ बीजवाहनाय० । बीजानि धान्यानि वहति प्रापयतीति बीजवाहनः शरद्धेमंतऋतुरूप इत्यर्थः ॥ ७ ॥ ६ अंगिरसे० । अंगिरास्तत्संज्ञकमुनिरूपः । ७ मुनये आत्रेयाय० । मुनये मननशीलाय तस्मै आत्रेयाय अत्रिऋषि पुत्ररूपायेत्यर्थः । ८ विमलाय० । विगतः मलो यस्मात्स विमलः शुद्ध इत्यर्थः । ९ विश्ववाहनाय० । विश्वं जगद्वहति नैरंतर्येण प्राप्नोति यस्मिन्निति विश्ववाहनः । १० पावनाय । पावयतीति पावनः सकलपातकनाशकर इत्यर्थः । ११ पुरुजिते० । पुरून्बहूनपि जयतीति पुरुजित् । १२ शक्राय० । शक्नोतीति शक्रः सर्वं कर्तुमकर्तुं समर्थ इत्यर्थः । १३ त्रिविद्याय० । त्रिगुणा विद्याप्रकृतिर्यस्य स त्रिविद्यः । १४ नरवाहनाय० । नराः वाहने यस्य स नरवाहनः कुबेररूपः ॥ ८ ॥ १५ मनोबुद्धये० । मनसा बुद्धिर्मनोबुद्धिः मनःसंयुक्तबुद्धिरूप इत्यर्थः । १६ अहंकाराय० । अहम् अहमिति प्रत्ययं करोतीति अहंकारः अहमिति विभक्तिप्रतिरूपकमव्ययममरव्याख्यायामुक्तम् । १७ क्षेत्रज्ञाय० । क्षेत्रं लिंगशरीरं जानातीति क्षेत्रज्ञो जीवरूपः । १८ क्षेत्रपालकाय० । क्षेत्राणि सिद्धस्थानानि पालयतीति क्षेत्रपालकः 'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति विश्वः । १९ तेजोनिधये० । तेजांसि नितरां धीयंते यस्मिन्निति तेजोनिधिः । २० ज्ञाननिधये । ज्ञानानां निधिः स्थानभूतः । २१ विपाकाय० । विशेषेण पाको यस्मात्स विपाकः सकलकर्मफलप्रद इत्यर्थः । २२ विघ्नकारकाय० । विघ्नान्यसुरसत्कर्मविघ्नानि करोतीति विघ्नकारकः गणेशरूपः ॥ ९ ॥ २३ अधराय० । नास्ति धरा यस्य सोऽधरः सर्वाधार इत्यर्थः । २४ अनुत्तराय० । नास्ति उत्तरो यस्मात्सोऽनुत्तरः सर्वोपरिवर्तमानः । २५ ज्ञेयाय० । ज्ञातुं सुकृतिभिर्वेत्तुं योग्यो ज्ञेयः । २६ ज्येष्ठाय० । ज्येष्ठः सर्वेभ्यो वयोधिकः । २७ निःश्रेयसालयाय० । नितरां श्रेयो निःश्रेयसं मोक्षस्तस्यालयः स्थानरूप इत्यर्थः । २८ शैलाय० । शिलायां भवः शैलः नार्मदादिलिंगरूपः । २९ नगाय० । नगः श्रीशैलादिपर्वतरूपः तदुक्तं 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इति । ३० तनवे । तनुरत्यंतसूक्ष्मरूपो योगिनामप्यदृश्यः । ३१ दोहाय० । दोग्धि सर्वं प्रपूरयतीति दोहः । ३२ दानवारये० । दानवानां दनुजानामरिर्नाशकर इत्यर्थः । ३३ अरिंदमाय० । अरीन् स्वभक्तशत्रून् दमयतीत्यरिंदमः संज्ञायामिति दमः खच् ॥ १० ॥ ३४ चारु धिये जनकाय० । चार्वी सूक्ष्मा धीर्बुद्धिर्यस्य स चारुधीस्तस्मै जनकाय विदेहनृपरूपायेत्यर्थः । ३५ चारुविशल्याय० । चारवः सुन्दधियो विशल्याः विगतदुःखा यस्मात्स चारु विशल्यः । ३६ लोकशल्यकृते० । लोकयंति ते लोकाः पृथक्दृष्टयस्तेषां शल्यं दुःखं करोतीति लोकशल्यकृत् । ३७ चतुर्वेदाय० । चत्वार ऋगादयः वेदाः यस्मात्स चतुर्वेदः"

अधरोऽनुत्तरोज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥ शैलो नगस्तनुर्दोहो दानवारिररिंदमः ॥ १० ॥ चारुधीर्जनकश्चारु विशल्यो लोकशल्यकृत् ॥ चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥ ११ ॥ आम्नायोथ समाम्नायस्तीर्थदेवशिवालयः ॥ बहुरूपो महारूपः सर्वरूपश्चराचरः ॥ १२ ॥ न्यायनिर्वा हको न्यायो न्यायगम्यो निरंजनः ॥ सहस्रमूर्धा देवेंद्रः सर्वशस्त्रप्रभंजनः ॥ १३ ॥ मुंडो विरूपो विकृतो दंडी दांतो गुणोत्तमः ॥ पिंगलाक्षोथ हर्यक्षो नीलग्रीवो निरामयः ॥ १४ ॥

तदुक्तं 'यस्य निश्वसितं वेदाः' इति । ३८ चतुर्भावाय० । चत्वारो भावाः धर्मादयो यस्मात्स चतुर्भावः । ३९ चतुराय चतुरप्रियाय० । चतुरः कुशलस्तस्मै अत एव चतुराः प्रियाः यस्य स चतुरप्रियः ॥ ११ ॥ ४० आम्नायाय० । आम्नायो वेदरूपः । ४१ समाम्नाय० । समस्तुत्यः आम्नायो वेदो येन स समाम्नायायः वेदस्यापि प्रमाणभूतः । यद्वा सर्वप्रमाणत्वेन सम्यगाम्नायो वेदो यस्मात्स समाम्नायः । ४२ तीर्थदेवशिवालयाय० । तीर्थान्यवतारऋषिमुख्यास्ति तेषु दीव्यंति मोदंति ते तीर्थदेवास्तेषां शिवस्य कल्याण स्यालयः स्थानभूतः । ४३ बहुरूपाय० । बहून्यसंख्यानि रूपाणि यस्य स बहुरूपः । ४४ महारूपाय० । महांति पूज्यानि रूपाणि यस्य स महारूपः । ४५ सर्वरू पाय० । सर्वं विश्वं रूपं यस्य स सर्वरूपः । ४६ चराचराय० । चरा अस्थिरा लक्ष्मीरचरा स्थिरा यस्मिन्स चराचरः ॥ १२ ॥ ४७ न्यायनिर्वाहकाय० । न्यायस्य सत्पक्षस्य निर्वा हको न्यायनिर्वाहकः । ४८ न्यायाय० । न्यायो नीतिरूपः । ४९ न्यायगम्याय० । न्यायेन नीत्या गम्यते ज्ञायत इति न्यायगम्यः । ५० निरंजनाय० । निर्गतमंजनं मायातिमिरं यस्मात्स निरंजनः । ५१ सहस्रमूर्ध्ने० । सहस्रमसंख्या मूर्धानः शीर्षाणि यस्य स सहस्रमूर्धा । ५२ देवेंद्राय० । देवानामिंद्रः परमेश्वर इत्यर्थः । ५३ सर्वशस्त्रप्रभंजनाय० । सर्वशस्त्राणि प्रकर्षेण भंजयति नाशयतीति [illegible] मुंडाय० । मुंडो [illegible] । ५५ विरूपाय० । विशिष्टं सर्वश्रेष्ठं रूपं यस्य स विरूपः । ५६ विकृताय० ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विशिष्टं कृत कमयस्य स विकृतः। ५७ दंडिने०। दंडः कालदंडोऽस्ति यस्य स दंडी। ५८ दांताय०। दांतो जितेंद्रिय इत्यर्थः। ५९ गुणोत्तमाय०। गुणा उत्तमा यस्मात्स गुणोत्तमः। ६० पिंगलाक्षाय०। पिंगलानि पिंगवर्णान्यक्षीणि यस्य स पिंगलाक्षः। ६१ हर्यक्षाय०। हरेर्विष्णोरक्षि नेत्रं समर्पितं यस्मिन्स हर्यक्षः। ६२ नीलग्रीवाय०। नीला नीलवर्णा ग्रीवा यस्य स नीलग्रीवः। ६३ निरामयाय०। निर्गता आमयाः सर्वरोगाः यस्मात्स निरामयः 'भिषक्तमं त्वा भिषजां शृणोमि' इति श्रुतेः॥१४॥ ६४ सहस्रबाहवे सर्वेशाय०। सहस्रसंख्याः बाहवो यस्य स सहस्रबाहुस्तस्मै सर्वेषां निखिलजीवानामीशो नियंतेत्यर्थः। ६५ शरण्याय०। शरणेषु साधुः शरण्यः। ६६ सर्वलोकभृते०। सर्वलोकान् भूरादीन्बिभर्ति धारयतीति सर्वलोकभृत्। ६७ पद्मासनाय०। पद्मं हृत्कमलमासनं यस्य स पद्मासनः। ६८ परंज्योतिषे०। परं सर्वोत्कृष्ट ज्योतिः तेजो यस्य स परंज्योतिः ६९ परावरपरंफलाये० अवरम् ऐहिकं परं पारलौकिकं च परावरम्। अभ्यर्हितत्वात्परशब्दस्य पूर्वनिपातस्तस्मात्परं मोक्षाख्यं परं फलं यस्मात्स परावरपरंफलः ॥ १५ ॥ ७० पद्मगर्भाय०। पद्मं भुवनकोशाख्यं गर्भो वीर्यजं यस्य स पद्मगर्भः। ७१ महागर्भाय०। महान्पूज्यः गर्भः विराड्रूपो यस्य स महागर्भः। ७२ विश्वगर्भाय०। विश्वं जगद्गर्भो यस्य स विश्वगर्भः। ७३ विचक्षणाय०। विशेषेण चष्टेनेनेति विचक्षणः तदुक्तं मूकं करोति वाचालमिति। ७४ परावरज्ञाय०। परावरं भविष्यद्वर्तमानं जानातीति परावरज्ञः। ७५ बीजेशाय०। बीजं संसारकारणभूतोऽहं

सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकभृत् ॥ पद्मासनः परंज्योतिः परावरपरंफलः ॥१५॥ पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ॥ परावरज्ञो बीजेशः सुमुखः सुमहास्वनः ॥१६॥ देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ देवासुरमहामात्रो देवासुरमहाश्रयः ॥१७॥ देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥ देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ॥ १८ ॥ सर्वदेवमयोऽचिंत्यो देवतात्मात्मसंभवः ॥ ईड्योनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ॥१९॥

कारस्तस्येशो नियंतेत्यर्थः ७६। सुमुखाय सुमहास्वनाय०। सुष्ठु मुखं यस्य स सुमुखो गजाननरूपस्तस्मै सुशोभनो महास्वनो यस्य स सुमहास्वनः ॥१६॥ ७७ देवासुरगुरवे देवाय देवासुरौ हि श्रेष्ठत्वेन देवेष्वपि विश्रुतावतस्तद्धेतुकनामानि क्रमशः कानिचिदाह देवासुरेत्यादिना। देवाः इंद्रादयः असुराः हिरण्यकशिप्वादयस्तेषां गुरुर्हितोपदेशकस्तस्मै देवाय क्रीडमानायेत्यर्थः। ७८ देवासुरनमस्कृताय०। देवासुरैरपि नमस्कृतो देवासुरनमस्कृतः। ७९ देवासुरमहामात्राय०। देवासुररूपौ मत्तगजसदृशदुर्दांतौ तेषां महामात्रो नियंतेत्यर्थः। ८० देवासुरमहाश्रयाय०। देवासुराणां महानाश्रयो यस्य स देवासुरमहाश्रयः॥१७॥८१ देवादिदेवाय०। देवानामादयः कारणाः देवादयो देवाः ब्रह्मविष्णुमहेश्वराः यस्मात्स देवादिदेवः। ८२ देवर्षिदेवासुरवरप्रदाय०। देवानां ऋषिरतींद्रियदर्शकश्चासौ देवासुराणां वरानभिलषितार्थान् प्रकर्षेण ददातीति देवर्षिदेवासुरवरप्रदः। ८३ देवासुरेश्वराय०। देवासुराः ईश्वराः यस्मात्स देवासुरेश्वरः। ८४ दिव्याय०। दिवि भवो दिव्यः निर्विकार इत्यर्थः। ८५ देवासुरमहेश्वराय०। देवासुराणां महेश्वरः पूज्यः स्वामीत्यर्थः ॥ १८ ॥ ८६ सर्वदेवमयाय०। सर्वदेवमयः सर्वदेवावयव इत्यर्थः। ८७ अचिंत्याय०। अस्य विष्णोरपि चिंत्यः अचिंत्यः। ८८ देवतात्मने०। देवताः गौर्यादयः आत्मा स्वरूपं यस्य स देवतात्मा। ८९ आत्मसंभवाय०। आत्मनां जीवानां संभवो यस्मात्स आत्मसंभवः। ९० ईड्याय०। ईडितुं स्तोतुं योग्य ईड्यः सर्वस्तुत्य इत्यर्थः। ९१ अनीशाय०। न ईशो यस्य सोऽनीशः। ९२ सुरव्याघ्राय०। सुरेषु व्याघ्र इव सुरव्याघ्रः। ९३ देवसिंहाय०। देवेषु सिंह इव देवसिंहः। ९४ दिवाकराय०। दिवा दिवसं करोतीति दिवाकरः दिवाविभेति कृञः टः ॥ १९ ॥ ९५ विबुधाग्रवरश्रेष्ठाय०। विबुधाग्र इंद्रस्तस्माद्वराः प्रजापतयस्तेभ्योऽपि श्रेष्ठो विबुधाग्रवरश्रेष्ठः। ९६ सर्वदेवोत्तमोत्तमाय०। सर्वदेवेषूत्तमाः ब्रह्मादयस्तेभ्योऽप्युत्तमः सर्वदेवोत्तमोत्तमः। ९७ शिवज्ञानरताय०। शिवास्तद्रूपा ज्ञानरता यस्मात्स शिवज्ञानरतः। ९८ श्रीमते०। श्रीस्त्रिवर्गसंपत्तिर्नित्यं यस्मिन्स श्रीमान् 'श्रीर्लक्ष्म्यां त्रिवर्गसंपत्तौ' इति विश्वः। ९९ शिखिश्रीपर्वतप्रियाय०। शिखा चूडास्ति यस्य स शिखी शिखिने स्कंदकुमारार्थं श्रीपर्वतः प्रियो यस्य स शिखिश्रीपर्वतप्रियः इयं कथा ज्योतिर्लिंगवर्णने शिवपुराणे उक्ता 'शिखा शिखायां चूडायाम्' इति विश्वः ॥ १२० ॥ ७०० जयस्तंभाय०। जयस्य स्तंभ आधारभूत इत्यर्थः। इति सप्तमं शतकं समाप्तम् ॥ ७ ॥ १ विशिष्टंभाय०। विशिष्टं सर्वोत्कृष्टमंभः गंगोदकं यस्मिन्स विशिष्टंभः शंकरस्यादित्यापररूपम्। २ नरसिंहनिपातनाय०। नरसिंहं तत्संज्ञकावतारं निपातयति शरभरूपेण नाशयतीति नरसिंहनिपातनः। ३ ब्रह्मचारिणे०। ब्रह्मणि चरति तच्छीलो ब्रह्मचारी। ४ लोकचारिणे०। लोकेषु भूरादिषु चरति तच्छीलो लोक

विबुधाग्रवरश्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः ॥ १२० ॥ जयस्तंभो विशिष्टंभो नरसिंहनिपातनः ॥ ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ॥ २१ ॥ नंदी नंदीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ लिंगाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगावहः ॥ २२ ॥ स्ववशः सवशः स्वर्गः स्वरः स्वरमयः स्वनः ॥ बीजाध्यक्षो बीजकर्ता धनकृद्धर्मवर्धनः॥२३॥ दंभोऽदंभो महादंभः सर्वभूतमहेश्वरः ॥ श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ॥ २४ ॥

चारी। ५ धर्मचारिणे०। धर्मं चरति तच्छीलो धर्मचारी। ६ धनाधिपाय०। धनानामधिपः सकलधनस्वामीत्यर्थः ॥ २१ ॥ ७ नंदिने०। नंदी शैलादिरूपः। ८ नंदीश्वराय०। नंदिनः ईश्वरो नंदीश्वरः। ९ नग्नाय०। नग्नो दिगंबररूपः। १० नग्नव्रतधराय०। नग्नाः विगतवाससोऽत्यद्भुताः व्रतधराः यस्य स नग्नव्रतधरः। ११ शुचये०। शुचिरनुपहतः। शुचिः शुद्धेनुपहते' इति विश्वः। १२ लिंगाध्यक्षाय०। लिंगे बाणादिलिंगरूपे अध्यक्षं प्रत्यक्षं यस्य स लिंगाध्यक्षः। १३ सुराध्यक्षाय०। सुराणां देवानामध्यक्षः प्रभुरित्यर्थः। १४ युगाध्यक्षाय०। युगानां कृतादीनामध्यक्षः प्रभुरित्यर्थः। १५ युगावहाय०। युगानां कृतादीनामावहस्तत्तत्काले प्रापक इत्यर्थः ॥ २२ ॥ १६ स्ववशाय०। स्वस्यैव वशः स्ववशः इतरानधीन इत्यर्थः। १७ सवशाय०। वशेन इंद्रियनिग्रहेण सहितः सवशः। १८ स्वर्गस्वराय०। स्वर्गे तत्संज्ञकलोके स्वरो नासासमीरणो यस्य स स्वर्गस्वरः। 'स्वरो नासासमीरणे' इति विश्वः। १९ स्वरमयस्वनाय०। स्वरमयः षड्जादिसप्तस्वरावयवः स्वनः शब्दो यस्मात्स स्वरमयस्वनः तदुक्तं छंदःसूत्रे 'स्वराः षड्जऋषभगांधारमध्यमपंचमधैवतनिषादाः' इति। २० बीजाध्यक्षाय०। बीजस्य शुक्रस्याध्यक्षः प्रभुरित्यर्थः। २१ बीजकर्त्रे०। बीजं शुक्रं करोत्युत्पादयतीति बीजकर्ता। २२ धनकृद्धर्मवर्धनाय०। धनं करोतीति धनकृत्स चासौ धर्मवर्धनश्च धनकृद्धर्मवर्धनः॥ २३ ॥ २३ दंभाय०। दंभो भक्तपरीक्षार्थं कैतवरूपः 'दंभस्तु कैतवे कल्के' इति विश्वः। २४ अदंभाय०। नास्ति दंभं कैतवं यस्मिन्सोऽदंभः। २५ महादंभाय०। महत्पूज्यं दंभं कैतवमपि यस्य स महादंभः। २६ सर्वभूतमहेश्वराय०। सर्वभूतानां महेश्वरः सर्वभूतमहेश्वरः। २७ श्मशाननिलयाय०। श्मशानः सकलशवाधिष्ठानो महाप्रलयस्तस्यापि नितरां लयो नाशो यस्मात्स श्मशाननिलयः। २८ तिष्याय०। तिष्यः पृथिवीरूपः 'तिष्यः पुष्ये कलौ धात्र्याम्' इति विश्वः। २९ सेतवे०। सेतुर्भवांबुधौ मार्गरूपः। ३० अप्रतिमाकृतये०। अप्रतिमा उपमाशून्या आकृतिः स्वरूपं यस्य सोऽप्रतिमाकृतिः ॥ २४ ॥ ३१ लोकोत्तरस्फुटालोकाय०। लोक्यत इति लोकस्तस्मादुत्तरोऽचक्षुर्ग्राह्यः स्फुटो विकसमानः आलोक आत्मप्रकाशो यस्य स लोकोत्तरस्फुटालोकः। ३२ त्र्यंबकाय०। त्रीण्यंबकानि नेत्राणि यस्य स त्र्यंबकः। ३३ नागभूषणाय०। नागाः शेषादयः भूषणानि यस्य स नागभूषणः। ३४ अंधकारये०। अंधकस्य तत्संज्ञकहिरण्याक्षपुत्रदैत्यस्यारिर्नाशक इत्यर्थः। ३५ मखद्वेषिणे०। मखद्वेषो दक्षयज्ञद्वेषोऽस्ति यस्य स मखद्वेषी। ३६ विष्णुकंधरपातनाय०। विष्णोः कंधरां ग्रीवां पातयतीति विष्णुकंधरपातनः ॥ २५ ॥ ३७ वीतदोषाय०। वीताः गताः दोषा वैषम्यनैर्घृण्यादयो यस्मात्स वीतदोषः। ३८ अक्षयगुणाय०। अक्षयाः नाशशून्याः गुणाः योगादिषोडशाध्यायोक्तद्वात्रिंशद्गुणाः यस्मिन्सोऽक्षयगुणः। ३९ दक्षारये०। दक्षस्य दक्षप्रजापतेरारिः शत्रुरित्यर्थः। पूषदंतहृते० ४० पूषदंतान् हरतीति पूषदंतहृत्। ४१ धूर्जटये०। धूः सर्वश्रेष्ठा जटिः केशसंघातो

लोकोत्तरस्फुटालोकस्त्र्यंबको नागभूषणः ॥ अंधकारिर्मखद्वेषी विष्णुकंधरपातनः ॥ २५ ॥ वीतदोषोऽक्षयगुणो दक्षारिः पूषदंतहृत् ॥ धूर्जटिः खंडपरशुः सकलो निष्कलोनघः ॥ २६ ॥ आधारः सकलाधारः पांडुराभो मृडो नटः ॥ पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ॥ २७ ॥ सामगेयः प्रियकरः पुण्यकीर्तिरनामयः ॥ मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ॥ २८ ॥

यस्य स धूर्जटिः जट–संघाते तस्मात्सर्वधातुभ्य औणादिक इञ्। ४२ खंडपरशवे०। खंडयतीति खंडः सर्वच्छेदकः परशुर्यस्य स खंडपरशुः। ४३ सकलाय। कलया चंद्रकलया सहितः सकलः। ४४ निष्कलाय०। निष्कलः शुद्ध इत्यर्थः। ४५ अनघाय०। नास्त्यघं पातकं यस्मिन्सोऽनघः ॥ २६ ॥ ४६ आधाराय०। आसर्वमभिव्याप्य धारो धरणं यस्य स आधारः। ४७ सकलाधाराय०। सकला आधारा यस्मात्स सकलाधारः। ४८ पांडुराभाय०। पांडुरा श्वेता आभा कांतिर्यस्य स पांडुराभः। ४९ मृडाय०। मृडयति सर्वान् सुखयतीति मृडः। ५० नटाय०। नटश्चित्ररूपः। ५१ पूर्णाय०। पूर्ण ऐश्वर्यादिसकलशक्तिसंपन्न इत्यर्थः। ५२ पूरयित्रे०। पूरयतीति पूरयिता स्वभक्ताभिलाषपूरकः। ५३ पुण्याय०। पुण्यः स्मृतिमात्रेण कल्मषनाशकः। ५४ सुकुमाराय०। सुशोभनः कुमारः स्कंदो यस्य स सुकुमारः। ५५ सुलोचनाय०। सुष्ठु लोचनानि नेत्राणि यस्य स सुलोचनः ॥ २७ ॥ ५६ सामगेयाय०। सामभिर्गेयो गातुं योग्य इत्यर्थः। ५७ प्रियकराय०। प्रियं करोति तच्छीलः प्रियकरः। ५८ पुण्यकीर्तये०। पुण्या पावनाशिका कीर्तिर्यस्य स पुण्यकीर्तिः। ५९ अनामयाय०। नामभिः शब्दैर्याति प्राप्नोतीति नामयः न नामयोऽनामयः शक्त्या शब्दाप्रतिपाद्यः 'यतो वाचो निवर्तंते' इति श्रुतेः। अत्र सुपीति योगविभागात्कः। ६० मनोजवाय०। मनसः अजवो यस्मिन् स मनोजवः 'अप्राप्य मनसा सह' इति श्रुतेः। ६१ तीर्थकराय०। तीर्थानि पुष्कराद्यानि करोतीति तीर्थकरस्तीर्थहेतुरित्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

६२जटिलाय०।जटिलो जटाविशिष्टः। ६३ जीवितेश्वराय० । जीवितस्यायुष्यस्य इश्वरः स्वामीत्यर्थः॥२८॥ ६४ जीवितांतकराय० । जीवितस्यांतकरो नाशहेतुः । ६५ नित्याय० । नितरां त्यजति भवबंधं दूरीकरोतीति नित्यः त्यजधातोरन्यत्रापि दृश्यत इति डः । ६६ वसुरेतसे० । वसु सुवर्णं रेतो यस्य स वसुरेताः । ६७ वसुप्रियाय० । वसुर्धनाधिपः प्रियो यस्य स वसुप्रियः । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः ।६८सद्गतये० । सती अव्यभिचारिणी गतिर्यस्मात्स सद्गतिः । ६९सत्कृतये० । सती प्रशस्ता कृतिर्यस्य स सत्कृतिः । ७० सक्ताय० । सक्तोंविकासंसक्तः । ७१ कालकंठाय० । कालो महाकालः कंठे समीपे यस्य स कालकंठः । ७२ कलाधराय० । कलानां चतुःषष्टिकलानां धरो धारक इत्यर्थः ॥ २९ ॥ ७३ मानिने० । मानोस्यास्तीति मानी नित्यसन्मानविशिष्टः । ७४ मान्याय० । मानयितुं स्वकल्याणार्थमत्यंतसत्कारं कर्तुं योग्यो मान्यः तदुक्तं भागवते प्रह्लादेन "नैवात्मनः प्रभुरसौ निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मनः प्रतिमुखस्य यथा मुखश्रीः" इति ।७५॥ महाकालाय० । महानपरिमितः कालो यस्य स महाकालः । ७६ सद्भूतये० सती प्रशस्ता भूतिर्यस्मात्स सद्भूतिः । ७७ सत्परायणाय० । सतां परायणः परमस्थानरूपः । ७८ चंद्रसंजीवनाय० । चंद्रस्य संजीवनः क्षयरोगनिवारक इत्यर्थः । ७९ शास्त्रे लोकगूढाय० । शास्ता सकलानुशासकस्तस्मै लोकानां जनानां गूढोऽप्रत्यक्ष इत्यर्थः । ८० अमराधिपाय० । अमराणां देवानामधिपः

जीवितांतकरो नित्यो वसुरेता वसुप्रियः ॥ सद्गतिः सत्कृतिः सक्तः कालकंठः कलाधरः ॥ २९ ॥ मानी मान्यो महाकालः सद्भूतिः सत्परायणः ॥
चंद्रसंजीवनः शास्ता लोकगूढोमराधिपः ॥ १३० ॥ लोकबंधुर्लोकनाथः कृतज्ञः कृतिभूषणः ॥ अनपाय्यक्षरः कांतः सर्वशास्त्रभृतां वरः ॥ ३१ ॥
तेजोमयो द्युतिधरो लोकमायोग्रणीरणुः ॥ शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ॥ ३२ ॥ ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ॥
तुंबवीणी महाकायो विशोकः शोकनाशनः ॥ ३३ ॥

स्वामीत्यर्थः ॥ १३० ॥ ८१ लोकबंधवे० । लोकानां जीवानां बंधुरिव भ्रातृसदृशो लोकबंधुः । ८२ लोकनाथाय० । लोकानां चतुर्दशभुवनानां नाथ ईश्वरः । ८३ कृतज्ञाय कृतिभूषणाय० । कृतं सत्कर्म जानातीति कृतज्ञस्तस्मै अत एव कृतिः स्वभक्तयत्नः भूष्यतेनेनेति कृतिभूषणः।८४ अनपाय्यक्षराय०।नास्त्यपायो नाशो येषां तान्यनपायीनि अक्षराणि यस्य सोनपाय्यक्षरः वेदरूप इत्यर्थः । ८५ कांताय० कस्य शमनस्याप्यंतो नाशो यस्मात्स कांतः 'को ब्रह्मात्मानिलार्केषु शमने च ' इति विश्वः । ८६ सर्वशास्त्रभृतांवराय० सर्वं शास्त्राणि बिभ्रति पोषयंति ते सर्वशास्त्रभृतस्तेषां मध्ये वरः श्रेष्ठ इत्यर्थः ॥ ३१ ॥ ८७ तेजोमयाय० द्युतिधराय तेजोमयस्तेजःप्रचुरस्तस्मै अत एव द्युतेः कांतेः धरो धारक इत्यर्थः । ८८ लोकमायाय० । लोकाः मायास्य स लोकमायः । ८९ अग्रण्ये० । अग्रं सर्वश्रेष्ठस्थानं नयति स्वभक्तेभ्यः प्रापयतीत्यग्रणीः । ९० अणवे० । अणुः परमसूक्ष्मरूपः ९१ शुचिस्मिताय० । शुचि शुद्धं स्मितं हास्यं यस्य स शुचिस्मितः । ९२ प्रसन्नात्मने० । प्रसन्नः आत्मा स्वभावो यस्य स प्रसन्नात्मा । ९३दुर्जयाय० दुःखेनापि जेतुमशक्यो दुर्जयः। ९४ दुरतिक्रमाय० । दुःखेनापि क्रमितुमशक्यो दुरतिक्रमः ॥ ३२ ॥ ९५ ज्योतिर्मयाय० । ज्योतिर्मयो ज्योतिर्लिंगरूपः । ९६ निराकाराय० । निर्गतः आकारो यस्मात्स निराकारः निर्गुणरूपः । ९७ जगन्नाथाय जगतां निखिलविश्वानां नाथो जगन्नाथः । ९८ जलेश्वराय० । जलानां सकलोदकानामीश्वरो जलेश्वरः । ९९ तुम्बवीणिने० । तुंबफलद्वययुक्ता वीणास्ति यस्य स तुंबवीणी अत एव सा लोके रुद्रवीणेत्युच्यते । ८०० महाकायाय० महान्पूज्यः कायो मूर्तिर्यस्य स महाकायः 'कायः कदैवते मूर्तौ" इति विश्वः ॥ इति अष्टमं शतकं समाप्तम् ॥८॥ १ विशोकाय० । विगतः शोको यस्मात्स विशोकः ।२ शोकनाशनाय० । शोकं भक्तशोकं नाशयतीति शोकनाशनः ॥ ३३ ॥ ३ त्रिलोकात्मने० । त्रिलोकाः त्रैलोक्यमात्मा देहो यस्य स त्रिलोकात्मा । ४ त्रिलोकेशाय० । त्रिलोकानामीशस्त्रिलोकेशः । शुद्धाय० ।५ शुद्धो निष्कल्मष इत्यर्थः । ६ शुद्धये० । शुद्धिः शौचरूपः । ७ रथाक्षजाय० । रथाक्षं सुदर्शनचक्रं जनयतीति रथाक्षजः 'अक्षः कर्षे तुषे चक्रे' इति विश्वः।८ अव्यक्तलक्षणाय०। अव्यक्तान्यस्पष्टानि लक्षणानि यस्य सोऽव्यक्तलक्षणः। ९ अव्यक्ताय०। अः विष्णुर्व्यक्तो यस्मात्सोव्यक्तः।१० विशांपतये०। विशां सकलप्रजानां पतिः पालक इत्यर्थः॥३४॥११ वरशीलाय०। वरं सर्वश्रेष्ठं शीलं सद्वृत्तं यस्मात्स वरशीलः।१२ वरतुलाय० । वरं सर्वश्रेष्ठं तुलमुन्मानं यस्य स वरतुलः।१३ मानाय०। मानः सकलप्रमाणभूतः।१४ मानधनाय मयाय०। मानेन सन्मानेन धनं यस्मात्स मानधनस्तस्मै अत एव मयः सुखरूपः । १५ ब्रह्मणे० । ब्रह्मा पितामहरूप इत्यर्थः ।१६ विष्णवे प्रजापालाय० । विष्णुर्व्यापकस्तस्मै प्रजाः पालयतीति प्रजापालो रक्षकर्त्तारित्यर्थः । १७ हंसाय० । हंति अज्ञानं नाशयतीति हंसः परमात्मरूपः 'हंसो विहंगभेदे स्यादर्के विष्णौ हयांतरे ॥ योगिमंत्रादिभेदेषु परमात्मनि मत्सरे" इति विश्वः। 'भवेद्वर्णागमाद्धंसः' इत्युक्तेः।१८ हंसगतये० । हंसानां योगि

त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धिरथाक्षजः ॥ अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशांपतिः ॥ ३४ ॥ वरशीलो वरतुलो मानो मानधनो
मयः ॥ ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्यमः ॥ ३५ ॥ वेधा धाता विधाता च अत्ता हर्ता चतुर्मुखः ॥ कैलासशिखरावासी सर्वावासी
सतां गतिः ॥ ३६ ॥ हिरण्यगर्भो हरिणः पुरुषः पूर्वजः पिता ॥ भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ॥ ३७ ॥ संयोगी योगविद्ब्रह्मा ब्रह्मण्यो
ब्राह्मणप्रियः ॥ देवप्रियो देवनाथो देवज्ञो देवचिंतकः ॥ ३८ ॥

नां गतिर्यस्मिन् स हंसगतिः । १९ यमाय० यमस्तत्संज्ञकप्रथमयोगांगरूपः । तथा च पातंजलसूत्रम् "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" इति॥३५॥२० वेधसे० विशेषेण दधातीति वेधाः सकलाधारभूतः विधात्रोर्वेधादेशोऽसिप्रत्यय औणादिकोऽमरव्याख्यायामुक्तः । २१ धात्रे०।दधाति जगत्पुष्णातीति धाता । २२ विधात्रे०। विशेषेण दधाति ब्रह्मांडं पुष्णातीति विधाता ।२३ अत्रे हर्त्रे०।अत्ति जगद्भक्षयतीत्यत्ता तस्मै अत एव हराति जगत्संहारं करोतीति हर्ता ।२४चतुर्मुखाय०चत्वारि मुखानि यस्य स चतुर्मुखो ब्रह्मरूपः।२५ कैलासशिखरावासिने० । कैलासशिखरे आवसति तच्छीलः कैलासशिखरावासी ।२६ सर्वावासिने० । सर्वत्रावसति तच्छीलः सर्वावासी ।२७सतां गतये०। सतां साधूनां गतिर्मार्गरूपः ॥३६॥२८ हिरण्यगर्भाय० हिरण्यं गर्भः वीर्यजं यस्य स हिरण्यगर्भः।२९हरिणाय०।हरिणः पांडुरवर्णः 'पांडुरः पांडुः' हरिणः इत्यमरः ।३० पुरुषाय०पुरुषस्तत्संज्ञकस्तदुक्तमुपरिभागे "पुरुषं शंकरं प्राहुर्गौरीं च प्रकृतिं द्विजाः" इति। ३१ पूर्वजाय पित्रे० पूर्वं सकलादौ जायते प्रादुर्भवतीति पूर्वजस्तस्मै पित्रे सकलजनकायेत्यर्थः। ३२ भूतालयाय० । भूतं भूतसंज्ञकवनमालयः स्थानं यस्य स भूतालयः। इयं कथा पूर्वमुक्ता। ३३ भूतपतये० । भूतानां गगनादीनां पतिः पालक इत्यर्थः।३४ भूतिदाय० । भूतिमैश्वर्यं ददातीति भूतिदः । ३५ भुवनेश्वराय० । भुवनानामीश्वराः स्वामिनो यस्मात्स भुवनेश्वरः ॥ ३७ ॥ ३६ संयोगिने० । सम्यक् योजयति तच्छीलः संयोगी यथायथं कर्मफलप्रापकः
३७योगविद्ब्रह्मणे० । योगवित्सकलोपायज्ञः ब्रह्मा यस्मात्स योगविद्ब्रह्मा । ३८ ब्रह्मण्याय० । ब्रह्मणे तपसे हितो ब्रह्मण्यः । ३९ ब्राह्मणप्रियाय० । ब्राह्मणाः प्रियाः यस्य स ब्राह्मणप्रियः । ४० देवप्रियाय० । देवाः प्रिया यस्य स देवप्रियः । ४१ देवनाथाय० । देवानां नाथः स्वामीत्यर्थः । ४२ देवज्ञाय० । देवाः ज्ञाः ज्ञानिनो यस्मात्स देवज्ञः ज्ञा अवबोधनेऽस्मादिगुपधेति कः । ४३ देवचिंतकाय० । देवा अपि चिंतका यस्य स देवचिंतकः ॥ ३८ ॥ ४४ विषमाक्षाय० । विषमाणि त्रीण्यक्षीणि यस्य स विषमाक्षः बहुव्रीहौ सक्थ्यक्ष्णो रिति षच् समासांतः । ४५ कलाध्यक्षाय० । कलानां चतुःषष्टिकलानामध्यक्षः प्रभुरित्यर्थः । ४६ वृषांकाय० । वृषो धर्म एव अंकः भूषणं यस्य स वृषांकः 'अंकश्चित्रयुद्धे च भूषणे' इति विश्वः । ४७ वृषवर्धनाय० । वृषो धर्मः वर्धत्यनेनेति वृषवर्धनः । ४८ निर्मदाय निरहंकाराय० । निर्गतः मदो यस्मात्स निर्मदस्तस्मै अत एव निर्गतः अहंकारो यस्मात्स निरहंकारः । ४९ निर्मोहाय० । निर्गतः मोहो वैचित्यं यस्मात्स निर्मोहः । ५० निरुपद्रवाय० । निर्गतः उपद्रवो यस्मात्स निरुपद्रवः ॥ ३९ ॥ ५१ दर्पघ्ने० । दर्पमुत्सेकं सर्वेषां हंतीति दर्पहा । ५२ दर्पिताय० । दर्पो हर्षः संजातो यस्य स दर्पितो नित्यतुष्ट इत्यर्थः । ५३ दृप्ताय० । दृप्तः स्वात्मामृतास्वादेन नित्यहर्षित इत्यर्थः । ५४ सर्वर्तुपरिवर्तकाय० । सर्वं र्तून् वसंतादीन्परिवर्तयति भ्रामयतीति सर्वर्तुपरिवर्तकः । ५५ सप्तजिह्वाय० । सप्त तत्संख्याकाः जिह्वाः यस्य स सप्तजिह्वः 'सप्त ते अग्ने समिधः सप्तजिह्वा' इति श्रुतेः । ५६

विषमाक्षः कलाध्यक्षो वृषांको वृषवर्धनः ॥ निर्मदो निरहंकारो निर्मोहो निरुपद्रवः ॥ ३९ ॥ दर्पहा दर्पितो दृप्तः सर्वर्तुपरिवर्तकः ॥ सप्तजिह्वः
सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ॥ ४० ॥ भूतभव्यभवन्नाथः प्रभवो भ्रांतिनाशनः ॥ अर्थोनर्थो महाकोशः परकार्यैकपंडितः ॥ ४१ ॥ निष्कं-
टकः कृतानंदो निर्व्याजो व्याजमर्दनः ॥ सत्त्ववान्सात्त्विकः सत्यकीर्तिस्तंभकृतागमः ॥ ४२ ॥ अकंपितो गुणग्राही नैकात्मा नैककर्मकृत् ॥
सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणोनलः ॥ ४३ ॥

सहस्रार्चिषे० । सहस्रमसंख्याताः अर्चिषो दीप्तयो यस्य स सहस्रार्चिः । ५७ स्निग्धाय० । स्निग्धो दयार्द्र इत्यर्थः । ५८ प्रकृतिदक्षिणाय० । प्रकृत्या स्वभावेन दक्षिणः सरलः प्रकृतिदक्षिणः ' दक्षिणः सरलोपि च ' इति त्रिकांडशेषः ॥ १४० ॥ ५९ भूतभव्यभवन्नाथाय० । भूतं पूर्वोत्पन्नं भव्यं भविष्यद्भवद्वर्तमानं च तेषां नाथः स्वामीत्यर्थः । ६० प्रभवाय० । प्रकर्षेण भवः संसारो यस्मात्स प्रभवः । ६१ भ्रांतिनाशनाय० । भ्रांतिं देहादावात्मबुद्धिं नाशयतीति भ्रांतिनाशनः । ६२ अर्थाय० । अर्थ्यत इत्यर्थः सर्वप्रार्थ्य इत्यर्थः । ६३ अनर्थाय० । नास्त्यर्थः प्रयोजनं यस्य सोऽनर्थः आप्तकाम इत्यर्थः । ६४ महाकोशाय० । महानपरिमितः कोशो धनं यस्मात्स महाकोशः । ६५ परकार्यैकपंडिताय० । परं च तत्कार्यं च परकार्यं मोक्षाख्यं तस्मिन्नेकोऽद्वितीयः पंडितः परकार्यैकपंडितः ॥ ४१ ॥ ६६ निष्कंटकाय० । निर्गताः कंटकाः कामादिशत्रवो यस्मात्स निष्कंटकः ' कंटकः क्षुद्रशत्रौ च ' इति विश्वः । ६७ कृतानंदाय० । कृतोऽच्छिन्नः आनंदो यस्मात्स कृतानंदः ' कृतं तु वेष्टितेऽच्छिन्ने ' इति विश्वः । ६८ निर्व्याजाय० । निर्गतं व्याजं कपटं यस्मात्स निर्व्याजः । ६९ व्याजमर्दनाय० । व्याजं मिषं मर्दयतीति व्याजमर्दनः । ७० सत्ववते० । सत्वं शौर्यवीर्यादिकं नित्यं यस्मिन्स सत्ववान् । ७१ सात्त्विकाय० । सात्त्विकः सत्वगुणप्रधानः । ७२ सत्यकीर्तिस्तंभकृतागमाय० । सत्यकीर्तिस्तंभकृतः आगमो वेदो येन स सत्यकीर्तिस्तंभकृतागमः ॥ ४२ ॥ ७३ अकंपिताय० । न कंपितोऽकंपितः

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

निश्चल इत्यर्थः । ७४ गुणग्राहिणे० । गुणान्स्वभक्तगुणान् गृह्णाति तच्छीलो गुणग्राही । ७५ नैकात्मने नैककर्मकृते० । न एकः आत्मा स्वरूपं यस्य स नैकात्मा सकलजीवरूप स्तस्मै अत एव नैककर्माणि सर्वकर्माणि करोतीति नैककर्मकृत् अत्र न शब्देन सुप्सुपेति समासः । ७६ सुप्रीताय० । सु शोभनं प्रीतं प्रसादो यस्य स सुप्रीतः तदुक्तं सौमंतिन्या ब्रह्मोत्तरखंडे " तुष्टे च पार्वतीनाथे किमसाध्यं शरीरिणाम् " इति । ७७ सुमुखाय० सुष्ठु मुखं संसारनिः सरणं यस्मात्स सुमुखः 'मुखं निःसरणे वक्त्रे' इति विश्वः।७८ सूक्ष्माय० । सूक्ष्मः सर्वगतः 'सर्वगतं सूक्ष्मम्' इति श्रुतेः । ७९ सुकराय० । सुष्ठु वरदत्वेन शोभनः करो हस्तो यस्य स सुकरः । ८० दक्षिणाय० । दक्षिणः सम्यग्मार्गरूपः 'दक्षिणः सरलावामपरच्छंदानुवर्तिषु' इति विश्वः । ८१ अनलाय० । नास्त्यलो भूषणं यस्य सो ऽनलः स्वयमेव भूषणभूत इत्यर्थः ॥४३॥ ८२ स्कंधाय० । स्कंधस्तत्त्वप्रकांडरूपः 'स्कंध प्रकांड' इति विश्वः । ८३ स्कंधधराय० । स्कंधानां तत्त्वप्रकांडानां धरो धारक इत्यर्थः । ८४ धुर्याय० । धुरं समस्तभूतजन्मादिलक्षणां वहतीति धुर्यः । ८५ प्रकटाय० । प्रकटः सूर्यादिरूपेण सर्वप्रत्यक्ष इत्यर्थः 'उतैनं गोपा अदृशन्नदृशन्नुदहार्यः' इति श्रुतेः । ८६ प्रीतिवर्धनाय० । । प्रीतिरपारमहिमत्वाद्भक्तप्रेम वर्धतेऽस्मिन्निति प्रीतिवर्धनः । ८७ अपराजिताय० । न पराजितोऽपराजितः पराभवशून्यः । ८८ सर्वसहाय० । सर्वं वस्तु जातं सहतीति सर्वसहः । ८९ विदग्धाय० । विशिष्टं निर्मूलं दग्धं

स्कंधः स्कंधधरो धुर्यः प्रकटः प्रीतिवर्धनः ॥ अपराजितः सर्वसहो विदग्धः सर्ववाहनः ॥४४ ॥ अधृतः स्वधृतः साध्यः पूर्तमूर्तिर्यशोधरः ॥ वराहशृंगधृग्वायुर्बलवानेकनायकः ॥ ४५ ॥ श्रुतिप्रकाशः श्रुतिमानेकबंधुरनेकधृक ॥ श्रीवल्लभशिवारंभः शांतभद्रः समंजसः ॥ ४६ ॥ भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ॥ अकायो भक्तकायस्थः कालज्ञानी कलावपुः ॥ ४७ ॥

यस्मात्स विदग्धः तदुक्तं गीतायां " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन: " इति । ९० सर्ववाहनाय० । सर्वं वाह्यते प्राप्यतेऽनेनेति सर्ववाहनः ॥ ४४ ॥ ९१ अधृताय० । न धृतोऽधृतः अनन्याधार इत्यर्थः । ९२ स्वधृताय० । स्वेनात्मनैव धृतः स्वधृतः 'स्वं ज्ञातावात्मधनयोः' इति विश्वः । ९३ साध्याय० । साधितुं योग्यः साध्यः । ९४ पूर्तमूर्तये पूर्तं वापीकूपादिकरणं मूर्तिः स्वरूपं यस्य स पूर्तमूर्तिः । ९५ यशोधराय० । यशसः धरो यशोधरः । ९६ वराहशृंगधृषे० । वराहशृंगं यज्ञवराहदंष्ट्रां धृष्णोतीति वराहशृंगधृक ९७ वायवे० । वाति गच्छतीति वायुस्तद्रूपः । ९८बलवते० बलं सामर्थ्यं नित्यं विद्यते यस्य स बलवान् ।९९ एकनायकाय० । एकोऽद्वितीयो नायकः श्रेष्ठ इत्यर्थः 'नायको नेतरि श्रेष्ठे' इति विश्वः ॥ ४५ ॥ ९०० ॥ श्रुतिप्रकाशाय० । श्रुतिभिः प्रकाशो यस्य स श्रुतिप्रकाशः 'औपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । इति नवमं शतकं समाप्तम् । १ श्रुतिमते० । श्रुतिर्वेदोऽस्ति नित्यं यस्य स श्रुतिमान् । २एकबंधवे० । एकोऽद्वितीयो बंधुरेकबंधुः प्रत्युपकारानपेक्षोपकारीत्यर्थः । ३ अनेकधृषे० । अनेकानसंख्यस्वभक्तान्धृष्णोति प्रगल्भान्करोतीत्यनेकधृक त्रिधृषा । प्रागल्भ्येऽस्माकिप् । ४ श्रीवल्लभशिवारंभाय० । श्रीवल्लभस्य विष्णोः शिवारंभः कल्याणप्रारंभो यस्मात्स श्रीवल्लभशिवारंभः । ५ शांतभद्राय० । शांतानां भद्रं यस्मात्स शांतभद्रः । ६ समंजसाय० । सम्यगनक्ति यथार्थं जानातीति समंजसः ॥ ४६ ॥ ७ भूशयाय० । भूः भूमिः शयः शय्या यस्य स भूशयः 'शयः शय्याहिपाणिषु' इति विश्वः । ८ भूतिकृद्भूतये० । भूतिकृतां सकलैश्वर्यप्रदानामपि भूतिरैश्वर्यं यस्मात्स भूतिकृद्भूतिः । ९ भूषणाय० । भूष्यते सकलमलंक्रियतेऽनेनेति भूषणः । १० भूतवाहनाय० । भूतानि वाहनानि यस्य स भूतवाहनः । ११ अकायाय० । नास्ति कायः शरीरं यस्य सोऽकायः । १२ भक्तकायस्थाय० । भक्तकायेषु स्वभक्तहृत्कमलेषु तिष्ठतीति भक्तकायस्थः । १३ कालज्ञानिने० । कालज्ञानं नित्यमस्यास्तीति कालज्ञानी । १४ कलावपुषे० । कलावच्चरीवद्वपुर्यस्य स कलावपुः चिंतनमात्रेण संसारार्णवतारक इत्यर्थः 'कला च रजसि स्त्रीणां तरिकपटयोः' इति विश्वः ॥ ४७ ॥ १५सत्यव्रतमहात्यागिने० । त्यागोऽस्ति यस्य स त्यागी महांश्चासौ त्यागी च महात्यागी सत्यव्रतानामदांभिकानां महात्यागी सत्यव्रतमहात्यागी । १६ निष्ठाशांतिपरायणाय० । निष्ठा मरणपर्यंतं शांतिर्निष्ठाशांतिः परायणं परमस्थानं यस्य स निष्ठाशांतिपरायणः । १७ परार्थवृत्तये० । परार्था मोक्षार्था वृत्तिर्विवरणं यस्य स परार्थवृत्तिः 'वृत्ति र्विवरणे जीव्ये' इति विश्वः । १८ वरदाय० । वरानावरकमायाविलासान्द्यति खंडयतीति वरदः । १९ विविक्ताय० । विविक्तो जडविश्वात्पृथक्स्थित इत्यर्थः । २० श्रुतिसागराय० । श्रुतीनां सागरः समुद्रवदपारः ॥ ४८ ॥ २१ अनिर्विण्णाय० । न निर्विण्णोऽनिर्विण्णः जगत्सर्गादौ नित्योद्यत इत्यर्थः । २२ गुणग्राहिणे० । गुणैः सर्वप्रदत्वादिभिः गृह्णाति भक्तचेतांस्याकर्षति तच्छीलो गुणग्राही । २३ कलंकांकाय० । कलंकः अंकश्चिह्नं यस्य स कलंकांकश्चंद्ररूपः । २४ कलंकघ्ने० । कलंकमपवादं हंतीति कलंकहा 'कलं

सत्यव्रतमहात्यागी निष्ठाशांतिपरायणः ॥ परार्थवृत्तिर्वरदो विविक्तः श्रुतिसागरः ॥ ४८ ॥ अनिर्विण्णो गुणग्राही कलंकांकः कलंकहा ॥ स्वभावरुद्रो मध्यस्थः शत्रुघ्नो मध्यनाशकः ॥ ४९ ॥ शिखंडी कवची शूली चंडी मुंडी च कुंडली ॥ मेखली कवची खड्गी मायी संसारसारथिः ॥१५० ॥ अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ॥ असंख्येयोऽप्रमेयात्मावीर्यवान्कार्यकोविदः ॥ ५१ ॥

कोऽपवादे च' इति विश्वः । २५ स्वभावरुद्राय० । रोदयतीति रुत् अज्ञानं द्रावयतीति रुद्रः स्वभावः रुद्रो यस्य स स्वभावरुद्रः । २६ मध्यस्थाय० । मध्ये ब्रह्मविष्णुमध्य भागे तिष्ठतीति मध्यस्थः । २७ शत्रुघ्नाय० । शत्रूनंधकादीनपि हंति परमगतिं प्रापयतीति शत्रुघ्नः । २८ मध्यनाशकाय० मध्येन मध्यभवरुद्रेण नाशयति जगत्संहारं करोतीति मध्यनाशकः ॥ ४९ ॥ २९ शिखंडिने० । शिखंडश्चूडोऽस्ति यस्य स शिखंडी 'शिखंडो बर्हचूडयोः' इति विश्वः । ३० कवचिने० । कवचं सुवर्णतनुत्रमस्यास्तीति कवची । ३१ शूलिने० । शूलं तत्संज्ञकायुधमस्यास्तीति शूली । ३२ चंडिने० । चंडस्तत्संज्ञकगणोऽस्ति यस्य स चंडी । ३३ मुंडिने० । मुंडो मूर्धमुंडितगणोऽस्ति यस्य स मुंडी । ३४ कुंडलिने० । कुंडले सर्पकुंडले स्तः यस्य स कुंडली तदुक्तं शिवगीतायम् 'कंबलाश्वतरौ शंभोः कर्णकुंडलतां गतौ' इति । ३५ मेखलिने० । मेखला कटिसूत्रं यस्यास्तीति मेखली । ३६ कवचिने० । कवचः पटहोऽस्ति यस्य स कवची 'कवचोऽगदभांडे स्यात्सन्नाहे पटहेऽपि च' इति विश्वः । ३७ खड्गिने० । खड्गश्चंद्रहाससंज्ञोऽस्ति यस्य स खड्गी । ३८ मायिने संसारसारथये० । मायास्ति यस्य स मायी तस्मै अत एव संसारस्य सारथिः सहाय इत्यर्थः ॥१५०॥ ३९ अमृत्यवे सर्वदृशे० । नास्ति मृत्युर्यस्य सोऽमृत्युस्तस्मै अत एव सर्वं पश्यतीति सर्वदृक् । ४० सिंहाय० । हिनस्तीति सिंहः पृषोदरादित्वात्साधुः । ४१ तेजोराशये महामणये० । तेजसां राशिस्तेजोराशिस्तस्मै महान् पूज्यो यो मणिः कौस्तुभादिस्तद्रूपः । ४२ असंख्येयाय० । संख्यातुं योग्यः संख्येयो न संख्येयोऽसंख्येयोऽपार इत्यर्थः । ४३ अप्रमेयात्मने० । अप्रमेयः प्रमातुमशक्य आत्मा देहो यस्य सोऽप्रमेयात्मा । ४४ वीर्यवते० । वीर्यं प्रभावोऽस्ति नित्यं यस्य स वीर्यवान् । ४५ कार्यकोविदाय० । कार्येषु सकलकार्येषु कोविदो निपुण इत्यर्थः ॥ ५१ ॥ ४६ वेद्याय० । वेत्तुं मुमुक्षुभिर्ज्ञातुं योग्यो वेद्यः । ४७ वेदार्थविद्गोप्त्रे० । वेदार्थविदां गोप्ता रक्षक इत्यर्थः । ४८ सर्वाचाराय० । सर्वः आचारो यस्मात्स सर्वाचारः । ४९ मुनीश्वराय० । मुनीनामीश्वरो मुनीश्वरः । ५० अनुत्तमाय० । नौतीति नुत् अतिशयेन नुदिति नुत्तमः नास्ति नुत्तमो वा अः विष्णुः नुत्तमो यस्य सोऽनुत्तमः । ५१ दुराधर्षाय० । दुःखेनापि आधर्षितुमशक्यो दुराधर्षः । ५२ मधुराय० । मधु क्षौद्रं राति ददातीति मधुरः । 'मधु क्षौद्रे जले क्षीरे मद्यपुष्परसे मधु' इति विश्वः । ५३ प्रियदर्शनाय० । प्रियः सर्वश्रेष्ठ आत्मा दृश्यतेऽनेनेति प्रियदर्शनः ॥ ५२ ॥ ५४ सुरेशाय० । सुरा ईशा यस्मात्स सुरेशः 'भीषोदेति सूर्यः' इति श्रुतेः । ५५शरणाय० शरणं सकलरक्षितेत्यर्थः । ५६ सर्वस्मै० । सर्वो विश्वरूप इत्यर्थः । ५७ शब्दब्रह्मसतांगतये० । शब्दरूपं ब्रह्म शब्दब्रह्म शब्दब्रह्मणि संति ते शब्दब्रह्मसंतस्तेषां गतिर्मार्गरूपः । ५८ कालभक्षाय० । कालेन कालरूपेण भक्षतीति कालभक्षः । ५९ कलंकारये० । कलंकस्य चित्तादिमलस्यारिर्नाशकः । ६० कंकणीकृतवासुकये० । न कंकणमकंकणम् अकंकणं कंकणं यथा स्यात्तथा कृतः कंकणीकृतः वासुकिस्तत्संज्ञकसर्पराजो येन स कंक

वेद्यो वेदार्थविद्गोप्ता सर्वाचारो मुनीश्वरः ॥ अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ॥ ५२ ॥ सुरेशः शरणं सर्वः शब्दब्रह्मसतांगतिः ॥ कालभक्षः कलंकारिः कंकणीकृतवासुकिः ॥ ५३ ॥ महेष्वासो महीभर्ता निष्कलंको विशृंखलः ॥ द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ॥ ५४ ॥ निवृत्तः संवृतः शिल्पो व्यूढोरस्को महाभुजः ॥ एकज्योतिर्निरातंको नरो नारायणप्रियः ॥ ५५॥ निर्लेपो निष्प्रपंचात्मा निर्व्यग्रो व्यग्रनाशनः ॥ स्तव्यस्तवप्रियः स्तोता व्यासमूर्तिरनाकुलः ॥ ५६ ॥

णीकृतवासुकिः ॥ ५३ ॥ ६१ महेष्वासाय० । महांतावक्षयौ इष्वासौ इषुधी यस्य स महेष्वासः । ६२ महीभर्त्रे० । मह्याः जगत्या अपि भर्ता धारक इत्यर्थः । ६३ निष्कलंकाय० । निर्गतः कलंकोऽविद्यामलो यस्मात्स निष्कलंकः 'कलंकोऽपवादे च कालायसमलेऽपि च' इति विश्वः । ६४विशृंखलाय० । विशिष्टा शृंखला मायाबंधो यस्मात्स विशृंखलः 'शृंखलापुंस्कटीवस्त्रे बंधेऽपि निगडेऽपि च' इति विश्वः । ६५ द्युमणये तरणये० । दिवः मणिः रत्नरूपो द्युमणिस्तस्मै तरणये सूर्यरूपायेत्यर्थः 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । ६६धन्याय० । धन्यः कृतकृत्य इत्यर्थः । ६७ सिद्धिदाय० । सिद्धीरणिमादीर्ददातीति सिद्धिदः । ६८ सिद्धिसाधनाय० । सिद्धीनां साधनः यस्मात्ससिद्धिसाधनः ॥५४॥ ६९ निवृत्ताय० । नितरां वृत्तं प्रसवबंधो यस्मात्स निवृत्तः 'वृत्तं प्रसवबंधे स्यात्' इति विश्वः । ७० संवृताय० । संवृतोऽच्छादिकया विद्यया वेष्टित इत्यर्थः । ७१ शिल्पाय० । शिल्पमनेकब्रह्मांडकौशलमस्यास्तीति शिल्पः । ७२ व्यूढोरस्काय० । व्यूढं विस्तीर्णमुरो यस्य स व्यूढोरस्कः । ७३ महाभुजाय० । महांतः दीर्घाः भुजा यस्य स महाभुजः । ७४ एकज्योतिषे० । एकमद्वितीयं ज्योतिश्चिद्रूपं यस्य स एकज्योतिः । ७५ निरातंकाय० । निर्गता आतंका रोगा यस्मात्स निरातंकः । ७६ नराय नारायणप्रियाय० । नरस्तत्संज्ञकधर्मपुत्ररूपस्तस्मै [illegible] ॥ ५५ ॥ ७७ निर्लेपाय० । निर्गतः लेपः कर्मसंबंधो यस्य स निर्लेपः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

७८ निष्प्रपंचात्मने०।निर्गतः प्रपंचः पंचभूतसमुदायो यस्मात्स निष्प्रपंचः आत्मा देहो यस्य स निष्प्रपंचात्मा ।७९ निर्व्यग्राय० । निर्गताः व्यग्राः कर्मासक्तितःकारणाः यस्मात्सं निर्व्यग्रः । ८० व्यग्रनाशनाय० । व्यग्रान्काम्यकर्मासक्तांतःकारणान्नाशयति मृत्युना मारयतीति व्यग्रनाशनः । ८१ स्तव्यस्तवप्रियाय० । स्तोतुं योग्यास्तव्या ज्ञानिनस्तेषां स्तवः प्रियो यस्य स स्तव्यस्तवप्रियः । ८२ स्तोत्रे व्यासमूर्तये० । स्तौतीति स्तोता तस्मै व्यासाः वेदविभाजकऋषयो मूर्तयः स्वरूपाणि यस्य स व्यासमूर्तिः । ८३ अनाकुलाय० । न आकुलः कामादिशत्रुव्याप्तोऽनाकुलः ॥ ५६ ॥ ८४ निरवद्यपदोपायाय० निरवद्यपदस्य मोक्षस्योपायः साधनरूपो निरवद्यपदोपायः । ८५ विद्याराशये० । विद्यानां सर्वविद्यानां राशिः समुदायो यस्मात्स विद्याराशिः ।८६ अविक्रमाय० । नास्ति विक्रमो यस्मिन्सोऽविक्रमः प्रसादैकगम्य इत्यर्थः । ८७ प्रशांतबुद्धये अक्षुद्राय० । प्रकर्षेण शांता बुद्धिर्यस्य स प्रशांतबुद्धिस्तस्मै अत एवाक्षुद्रो वैषम्यरहितः । ८८ क्षुद्रघ्ने० । क्षुद्रान् विषमबुद्धीन् हंति नाशयतीति क्षुद्रहा । ८९ नित्यसुंदराय० । नित्यं सर्वकालं सुंदरो नित्यसुंदरः ॥ ५७ ॥ ९० धैर्याग्र्यधुर्याय० । धैर्यमग्र्यं श्रेष्ठं येषां ते धैर्याग्र्यास्तेषु धुर्यः प्रथम इत्यर्थः । ९१ धात्रीशाय० । दधातीति धात्री पृथ्वी तस्याः ईशः स्वामी

निरवद्यपदोपायो विद्याराशिरविक्रमः ॥ प्रशांतबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुंदरः ॥५७॥ धैर्याग्र्यधुर्यो धात्रीशः शाकल्यः शर्वरीपतिः ॥ परमार्थगुरुर्दृष्टिर्गुरुराश्रितवत्सलः ॥ ५८ ॥ रसो रसज्ञः सर्वज्ञः सर्वसत्त्वावलंबनः ॥ सूत उवाच ॥ एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् ॥ ५९ ॥ स्नापयामास च विभुः पूजयामास पंकजैः ॥ परीक्षार्थं हरेः पूजाकमलेषु महेश्वरः ॥ १६० ॥ गोपयामास कमलं तदेकं भुवनेश्वरः ॥ हृतपुष्पो हरिस्तत्र किमिदं त्वभ्यचिंतयन् ॥ ६१ ॥ ज्ञात्वा स्वनेत्रमुद्धृत्य सर्वसत्त्वावलंबनम् ॥ पूजयामास भावेन नाम्ना तेन जगद्गुरुम् ॥६२॥ ततस्तत्र विभुर्दृष्ट्वा तथाभूतं हरो हरिम् ॥ तस्मादवततराशु मंडलात्पावकस्य च ॥ ६३ ॥ कोटिभास्करसंकाशं जटामुकुटमंडितम् ॥ ज्वालामालावृतं दिव्यं तीक्ष्णदंष्ट्रं भयंकरम् ॥ ६४ ॥

त्यर्थः । ९२ शाकल्याय० । शाकल्यस्तत्संज्ञकऋषिरूपः । ९३ शर्वरीपतये० । शर्वरीणां रात्रीणां पतिः शर्वरीपतिः । ९४ परमार्थगुरवे दृष्टये० । परमार्थस्य मोक्षस्य गुरुरुपदेशकः वेदरूपः तस्मै अत एव दृष्टिश्चक्षूरूपः तदुक्तम् 'वेदैः पश्यंति वाडवाः' इति । ९५ गुरवे० गृणाति सर्वेषां हितमुपदिशतीति गुरुः । ९६ आश्रितवत्सलाय० । आश्रितेषु स्वभक्तेषु वत्सलोऽत्यंतकरुण इत्यर्थः ॥ ५८ ॥ ९७ रसाय० । रसो ब्रह्मरसरूपः 'रसो वै सः' इति श्रुतेः । ९८ रसज्ञाय० । रसस्य ब्रह्मरसस्य ज्ञा वेत्तारः भक्तजना यस्मात्स रसज्ञः । ९९ सर्वज्ञाय० । सर्वस्य निखिलब्रह्मांडस्य ज्ञा वेत्तारो योगिनो यस्मात्स सर्वज्ञः । १००० सर्वसत्त्वावलंबनाय नमः । सर्वसत्त्वानां निखिलप्राणिनामवलंबन आश्रयभूत इत्यर्थः । इति दशमं शतकं समाप्तम् ॥१०॥ सूतः सहस्रनामोक्त्वाग्रिमवृत्तं कथयति एवमित्यादिना । एवं पूर्वोक्तानुपूर्व्येत्यर्थः ॥ ५९ ॥ हरेः परीक्षार्थं विष्णुभावं परीक्षितुमित्यर्थः । महेश्वरः पूजाकमलेषु मध्ये एकं कमलं गोपयामास स्वमायया विष्ण्वज्ञातं चकारेत्यग्रिमेणान्वयः ॥ १६० ॥ ६१ ॥ ज्ञात्वा स्वस्मिन् भ्रांत्यभावाद्धरचेष्टितं बुद्धेत्यर्थः । तेन सर्वसत्त्वावलंबनरूपेण ॥६२॥ तथाभूतं समर्पितनेत्रमित्यर्थः तस्माल्लिंगात्पावकस्य च मंडलादाशु अवततारेत्यन्वयः ॥ ६३॥ शिवरूपं रौद्रं वर्णयति कोटिभास्करेत्यादिना ॥ ६४ ॥ ॥ ६५ ॥ ६६ ६७ ॥ ६८ ॥ ६९ ॥ १७० ॥ अत्युग्ररूपप्रदर्शनहेतुं कथयति यद्रूपमित्यादिना ॥ ७१ ॥ शांतं सौम्यरूपं रणाजिरे देवानां दुःखसाधनं शांतस्यास्त्रं च शांतः स्यात्तेन शांतिनास्त्रेण किं फलं किमपि नेत्यर्थः ॥ ७२ ॥ शांतस्य तपस्विनं प्रति समरे शांतिरेवास्त्रं योद्धुः संमहारकर्तुः शांत्या परस्य बलवृद्धिदः बलच्छेदः स्यादिति शेषः

शूलटंकगदाचक्रकुंतपाशधरं हरम् ॥ वरदाभयहस्तं च द्वीपिचर्मोत्तरीयकम् ॥ ६५ ॥ इत्थंभूतं तदा दृष्ट्वा भवं भस्मविभूषितम् ॥ हृष्टो नमश्चकाराशु देवदेवं जनार्दनः ॥ ६६ ॥ दुद्रुवुस्तं परिक्रम्य सेंद्रा देवास्त्रिलोचनम् ॥ चचाल ब्रह्मभुवनं चकंपे च वसुंधरा ॥ ६७ ॥ ददाह तेजस्तच्छंभोः प्रांतं वै शतयोजनम् ॥ अधस्ताचोर्ध्वतश्चैव हाहेत्यकृत भूतले ॥ ६८ ॥ तदा प्राह महादेवः प्रहसन्निव शंकरः ॥ संप्रेक्ष्य प्रणयाद्विष्णुं कृतांजलिपुटं स्थितम् ॥ ६९ ॥ ज्ञातं मयेदमधुना देवकार्यं जनार्दन ॥ सुदर्शनाख्यं चक्रं च ददामि तव शोभनम् ॥ ७० ॥ यद्रूपं भवता दृष्टं सर्वलोकभयंकरम् ॥ हिताय तव यत्नेन तव भावाय सुव्रत ॥ ७१ ॥ शांतं रणाजिरे विष्णो देवानां दुःखसाधनम् ॥ शांतस्य चास्त्रं शांतः स्याच्छांतेनास्त्रेण किं फलम् ॥ ७२ ॥ शांतस्य समरे चास्त्रं शांतिरेव तपस्विनम् ॥ योद्धुः शांत्या बलच्छेदः परस्य बलवृद्धिदः ॥ ७३ ॥ देवैरशांतैर्यद्रूपं मदीयं भावयाव्ययम् ॥ किमायुधेन कार्यं वै योद्धुं देवारिसूदन ॥ ७४ ॥ क्षमा युधि न कार्यं वै योद्धुं देवारिसूदन ॥ अनागते व्यतीते च दौर्बल्ये स्वजनोत्करे ॥ ७५ ॥ अकालिके त्वधर्मे च अनर्थेवारिसूदन ॥ एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ॥ ७६ ॥ नेत्रं च नेता जगतां प्रभुर्वै पद्मसन्निभम् ॥ तदाप्रभृति तं प्राहुः पद्माक्षमिति सुव्रतम् ॥ ७७ ॥ दत्त्वैनं नयनं चक्रं विष्णवे नीललोहितः ॥ पस्पर्श च कराभ्यां वै सुशुभाभ्यामुवाच ह ॥ ७८ ॥ वरदोहं वरश्रेष्ठ वरान्वरय चेप्सितान् ॥ भक्त्या वशीकृतो नूनं त्वयाहं पुरुषोत्तम ॥ ७९ ॥ इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम् ॥ त्वयि भक्तिर्महादेव प्रसीद वरमुत्तमम् ॥१८०॥ नान्यमिच्छामि भक्तानामार्तयो नास्ति यत्प्रभो ॥ तच्छ्रुत्वा वचनं तस्य दयावान् सुतरां भवः ॥ ८१ ॥ पस्पर्श च ददौ तस्मै श्रद्धां शीतांशुभूषणः ॥ प्राह चैवं महादेवः परमात्मानमच्युतम् ॥ ८२ ॥

॥ ७३ ॥ अशांतैर्देवैः सह देवारिसूदन यद्घोरं रूपं मदीयमव्ययं भावय वै तथा च आयुधेन किं कार्यं किमपि नेत्यर्थः ॥ ७४ ॥ अक्षमास्थानानि कथयति क्षमेत्यादिना ॥ ७५ ॥ चक्रं वारिभवसुदर्शनाख्यम् ॥ ७६ ॥ नेत्रं लोचनमित्यर्थः ॥ ७७ ॥ ७८ ॥ ७९ ॥ १८० ॥ नास्ति न संतीत्यर्थः ॥ ८१ ॥ स्वस्मिन श्रद्धादानात्तथा च 'यो यच्छ्रद्धः स एव सः' इति भगवद्गीतोक्तनियमादच्युते परमात्मेति विशेषणसंगतिः एवं वक्ष्यमाणमित्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ हैमवती हिमवत्पुत्रीत्यर्थः ॥ ८५ ॥ ८६ ॥ तदाप्रभृति पार्वतीप्रदानानंतरमित्यर्थः ॥ ८७ ॥ ८८ ॥ मुनिभिः । समं महादेवं ब्रह्माणमयाचतेत्यनेनैतत्सहस्रनामस्तवादेर्वक्ष्यमाणफलं सर्वसंमतमिति बोध्यते ॥ ८९ ॥ १९० ॥ ॥ ९१ ॥ ९२ ॥ ९३ ॥ जगद्गुरुमेनं शिवं प्रणिपत्य ब्रह्मविष्णू जग्मतुरित्यन्वयः तस्मात्पूर्वोक्तकारणादनघो निष्पापः पूजाधिकारी नाम्नां सहस्रेण पूजयेत्पूजासामग्र्यभावे यो

मयि भक्तश्च वंद्यश्च पूज्यश्चैव सुरासुरैः ॥ भविष्यसि न संदेहो मत्प्रसादात्सुरोत्तम ॥ ८३ ॥ यदा सती दक्षपुत्री विनिंद्यैव सुलोचना ॥ मातरं पितरं दक्षं भविष्यति सुरेश्वरी ॥ ८४ ॥ दिव्या हैमवती विष्णो तदा त्वमपि सुव्रत ॥ भगिनीं तव कल्याणीं देवीं हैमवतीमुमाम् ॥ ८५ ॥ नियोगाद्ब्रह्मणः साध्वीं प्रदास्यसि ममैव ताम् ॥ मत्संबंधी च लोकानां मध्ये पूज्यो भविष्यसि ॥ ८६ ॥ मां दिव्येन च भावेन तदा प्रभृति शंकरम् ॥ द्रक्ष्यसे च प्रसन्नेन मित्रभूतमिवात्मना ॥ ८७ ॥ इत्युक्त्वांतर्दधे रुद्रो भगवान्नीललोहितः ॥ जनार्दनोपि भगवान्देवानामपि सन्निधौ ॥ ८८ ॥ अयाचत महादेवं ब्रह्माणं मुनिभिः समम् ॥ मया प्रोक्तं स्तवं दिव्यं पद्मयोने सुशोभनम् ॥ ८९ ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ प्रतिनाम्नि हिरण्यस्य दत्तस्य फलमाप्नुयात् ॥ १९० ॥ अश्वमेधसहस्रेण फलं भवति तस्य वै ॥ घृताद्यैः स्नापयेद्रुद्रं स्थाल्या वै कलशैः शुभैः ॥ ९१ ॥ नाम्नां सहस्रेणानेन श्रद्धया शिवमीश्वरम् ॥ सोपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः ॥ ९२ ॥ पूज्यो भवति रुद्रस्य प्रीतिर्भवति तस्य वै ॥ तथास्त्विति तथा प्राह पद्मयोनेर्जनार्दनम् ॥ ९३ ॥ जग्मतुः प्रणिपत्यैनं देवदेवं जगद्गुरुम् ॥ तस्मान्नाम्नां सहस्रेण पूजयेदनघो द्विजाः ॥ ९४ ॥ जपेन्नाम्नां सहस्रं च स याति परमां गतिम् ॥ १९५ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे सहस्रनामभिः पूजनाद्विष्णुचक्रलाभो नामाष्टनवतितमोध्यायः ॥ ९८ ॥ ऋषय ऊचुः ॥ संभवः सूचितो देव्यास्त्वया सूत महामते ॥ सविस्तरं वदस्वाद्य सतीत्वे च यथातथम् ॥ १ ॥ मेनाजत्वं महादेव्या दक्षयज्ञविमर्दनम् ॥ विष्णुना च कथं दत्ता देवदेवाय शंभवे ॥ २ ॥ कल्याणं वा कथं तस्य वक्तुमर्हसि सांप्रतम् ॥ तेषां तद्वचनं श्रुत्वा सूतः पौराणिकोत्तमः ॥ ३ ॥

नाम्नां साहस्रं जपन् स च परमां गतिं मोक्षं यातीत्यग्रिमेणान्वयः द्विजेति ऋषिसंबोधनम् ॥९४॥१९५॥ "अमोघास्त्रं लब्धुं सकलविबुधानां हि ऋषभो हरिः सांबं दिव्यैरभिमतमैर्नामदशभिः ॥ शतैरस्तौद्भक्त्या तदिदमखिलं शंकरमुदे सहस्रं व्याख्यातं भवतु विबुधानां प्रियकरम् ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टनवतितमोऽध्यायः ॥९८॥ "नवनवतिसंख्याके महादेव्यास्तु संभवः ॥ वामांगाद्दक्षपुत्रीत्वं पार्वतीत्वं च वर्ण्यते ॥ १ ॥" [illegible] इत्यादिना ॥१॥२॥ तस्य विष्णोरि

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मां नारायणं ब्रह्माणं वापि यजंते पूजयंति वा यज्ञैरग्निष्टोमादिभिर्यजंति तैरपि विघ्नेशाग्रे प्रथमं पूज्यो भविष्यसीत्यनेन विघ्ननिवारकत्वं कथितम् ॥ २२ ॥ अपूजने विघ्नोत्पादकत्वं कथयति त्वामनभ्यर्च्येति ॥ २३ ॥ सर्वपूज्यत्वं कथयति ब्राह्मणैरित्यादिना ॥ २४ ॥ २५ ॥ पूजाफलं कथयति अभ्यर्चयंतीति ॥ २६ ॥ अजादीनपि फलार्थिनः त्वां नार्चयंति तान् विघ्नैर्बाधयसीत्यनेन विघ्नविषये प्रतिहताज्ञत्वमुक्तम् ॥ २७ ॥ तदा वरलाभकाल इत्यर्थः । नमस्कृत्वेत्यत्र ल्यबभाव आर्षः ॥२८॥ तदाप्रभृति शिववरदानमारभ्येत्यर्थः ॥२९॥ सूत अध्यायफलं कथयति एतदिति ॥ ३० ॥ " पुत्रेण लोकान् जयती इति वेदं स्वस्मिन्यथार्थं भगवांश्चिकीर्षुः ॥ सर्वाग्रपूज्यं हि सुतं विधाय रराज सोऽवतमदं प्रतत्रः ॥ १ ॥"

मां च नारायणं वापि ब्रह्माणमपि पुत्रक ॥ यजंति यज्ञैर्वा विघ्नेशाग्रे पूज्यो भविष्यसि ॥ २२ ॥ त्वामनभ्यर्च्य कल्याणं श्रौतं स्मार्तं च लौकिकम् ॥ कुरुते तस्य कल्याणम कल्याणं भविष्यति॥२३॥ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैव गजानन ॥संपूज्य सर्वसिध्यर्थं भक्ष्यभोज्यादिभिः शुभैः ॥२४॥त्वां गंधपुष्पधूपाद्यैरनभ्यर्च्य जगत्त्रये ॥ देवैरपि तथान्यैश्च लब्धव्यं नास्ति कुत्रचित् ॥ २५ ॥ अभ्यर्चयंति ये लोका मानवास्तु विनायकम् ॥ ते चार्चनीयाः शक्राद्यैर्भविष्यंति न संशयः॥२६॥ अजं हरिं च मां वापि शक्रमन्यान्सुरानपि ॥ विघ्नैर्बाधयसि त्वं चेन्नार्चयंति फलार्थिनः ॥ २७ ॥ ससर्ज च तदा विघ्नगणं गणपतिः प्रभुः ॥ गणैः सार्धं नमस्कृत्वाप्यतिष्ठत्तस्य चाग्रतः ॥ २८ ॥ तदा प्रभृति लोकेऽस्मिन्पूजयंति गणेश्वरम् ॥ दैत्यानां धर्मविघ्नं च चकारासौ गणेश्वरः ॥ २९ ॥ एतद्वः कथितं सर्वं स्कंदाग्रजसमुद्भवम् ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा सुखी भवेत् ॥ ३० ॥ इति श्रीलिंगमहापुराणे पूर्वभागे विनायकोत्पत्तिर्नाम पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ऋषय ऊचुः ॥ नृत्यारंभः कथं शंभोः किमर्थं वा यथातथम् ॥ वक्तुमर्हसि चास्माकं श्रुतः स्कंदाग्रजोद्भवः ॥ १ ॥ सूत उवाच ॥ दारुकोऽसुरसंभूतस्तपसा लब्धविक्रमः ॥ सूदयामास कालाग्निरिव देवान्द्विजोत्तमान् ॥ २ ॥ दारुकेण तदा देवास्ताडिताः पीडिता भृशम् ॥ ब्रह्माणं च तथेशानं कुमारं विष्णुमेव च ॥ ३ ॥ यममिंद्रमनुप्राप्य स्त्रीवध्य इति चासुरः ॥ स्त्रीरूपधारिभिस्तुत्यैर्ब्रह्माद्यैर्युधि संस्थितैः ॥ ४ ॥

इति श्रीलिंगमहापुराणे शिवतोषिण्यां टीकायां पंचाधिकशततमोऽध्यायः॥१०५॥"षष्ठाधिकशताध्याये नृत्यारंभप्रसंगतः ॥ काल्याः समुद्भवश्चैव क्षेत्रपालस्य कीर्त्यते॥१॥" ऋषयः शंभोर्नृत्यकारणमपृच्छन् नृत्येति । शंभोः शिवस्य किमर्थं वा कथं वा केन रूपेण नृत्यारंभः यथातथमस्माकं वक्तुमर्हसीत्यन्वयः ॥ १ ॥ दारुकस्तत्संज्ञः असुरेषु दैत्येषु संभूतोऽसुरसंभूत इत्यर्थः ॥ २ ॥ तदा तस्मिन्काले दारुकेण ब्रह्मादीननुप्राप्य देवास्ताडिताः अत एव भृशं पीडिता आसन्निति शेषः ॥ ३॥ स्त्रीवध्य इति हेतोः ब्रह्माद्यैरपगतद्गुणसंविज्ञानो बहुव्रीहिः । स्तुत्यैर्ब्रह्मान्यदेवैः स्त्रीवेषधारिभिर्युधि असुरः दारुकः अयुध्यत इति शेषः ॥ ४ ॥ ते स्त्रीरूपधारिणोऽपीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ एकेनांशेन स्वकीयषोडशभागेनेत्यर्थः ॥ १२ ॥ १३ ॥ तां पार्वतीं तथाभूतां विषभूतामित्यर्थः । तृतीयेनेक्षणेन भालस्थवह्निरूपेणेत्यर्थः ॥ १४ ॥ कालिम्ना विषेण कालः कृष्णवर्णः कंठो यस्याः सा कालिमकालकंठी ॥ १५ ॥ गरेण विषेणालंकृतः कालः कृष्णः कंठो यस्याः सा गरालंकृतकालकंठी ॥ १६ ॥ तथैव शिवसदृशमेवेत्यर्थः । कंठे करालं विषं निशितं

बाधितास्तेन ते सर्वे ब्रह्माणं प्राप्य वै द्विजाः ॥ विज्ञाप्य तस्मै तत्सर्वं तेन सार्धमुमापतिम् ॥ ५ ॥ संप्राप्य तुष्टुवुः सर्वे पितामहपुरोगमाः ॥ ब्रह्मा प्राप्य च देवेशं प्रणम्य बहुधानतः ॥ ६ ॥ दारुणो भगवन्दारुः पूर्वं तेन विनिर्जिताः ॥ निहत्य दारुकं दैत्यं स्त्रीवध्यं त्रातुमर्हसि ॥ ७ ॥ विज्ञप्तिं ब्रह्मणः श्रुत्वा भगवान् भगनेत्रहा ॥ देवीमुवाच देवेशो गिरिजां प्रहसन्निव ॥ ८ ॥ भवतीं प्रार्थयाम्यद्य हिताय जगतां शुभे ॥ वधार्थं दारुकस्यास्य स्त्रीवध्यस्य वरानने ॥ ९ ॥ अथ सा तस्य वचनं निशम्य जगतोरणिः ॥ विवेश देहे देवस्य देवशी जन्मतत्परा ॥ १० ॥ एकेनांशेन देवेशं प्रविष्टा देवसत्तमम् ॥ न विवेद तदा ब्रह्मा देवाश्चेंद्रपुरोगमाः ॥ ११ ॥ गिरिजां पूर्ववच्छंभोर्दृष्ट्वा पार्श्वस्थितां शुभाम् ॥ मायया मोहितस्तस्याः सर्वज्ञोपि चतुर्मुखः ॥ १२ ॥ सा प्रविष्टा तनुं तस्य देवदेवस्य पार्वती ॥ कंठस्थेन विषेणास्य तनुं चक्रे तदात्मनः ॥ १३ ॥ तां च ज्ञात्वा तथाभूतां तृतीयेनेक्षणेन वै ॥ ससर्ज कालीं कामारिः कालकंठीं कपर्दिनीम् ॥ १४ ॥ जाता यदा कालिमकालकंठी जाता तदानीं विपुला जयश्रीः ॥ देवेतराणामजयस्त्वसिद्ध्या तुष्टिर्भवान्याः परमेश्वरस्य ॥ १५ ॥ जातां तदानीं सुरसिद्धसंघा दृष्ट्वा भयाद्दुद्रुवुरग्निकल्पाम् ॥ कालीं गरालंकृतकालकंठीमुपेंद्रपद्मोद्भवशक्रमुख्याः ॥१६॥ तथैव जातं नयनं ललाटे सितांशुलेखा च शिरस्युदग्रा ॥ कंठे करालं निशितं त्रिशूलं करे करालं च विभूषणानि ॥ १७ ॥ सार्धं दिव्यांबरा देव्याः सर्वाभरणभूषिताः ॥ सिद्धेंद्रसिद्धाश्च तथा पिशाचा जज्ञिरे पुनः ॥ १८ ॥ आज्ञया दारुकं तस्याः पार्वत्याः परमेश्वरी ॥ दानवं सूदयामास सूदयंतं सुराधिपान् ॥ १९ ॥ संरंभातिप्रसंगाद्धि तस्याः सर्वमिदं जगत् ॥ क्रोधाग्निना च विप्रेंद्राः संबभूव तदातुरम् ॥ २० ॥ भवोपि बालरूपेण श्मशाने प्रेतसंकुले ॥ रुरोद मायया तस्याः क्रोधाग्निं पातुमीश्वरः ॥ २१ ॥

तीक्ष्णं त्रिशूलं कर हस्ते करालं खड्गे विभूषणानि सर्पहारकुंडलादीनीत्यर्थः ॥ १७ ॥ सार्धं काल्या सह दिव्यांबरा देव्यः सिद्धेंद्राश्च सिद्धाश्च सिद्धेंद्रसिद्धाः तथा पुनः पिशाचाश्च जज्ञिरे बभूवुरित्यर्थः ॥ १८ ॥ १९ ॥ तस्या काल्याः संरंभातिप्रसंगाद्वेगातिशयादित्यर्थः ॥ २०॥ भवः शिवोपि मायया बालरूपेण तस्याः काल्याः क्रोधाग्निं पातुं श्मशाने काश्यां रुरोदेत्यन्वयः ॥ २१ ॥२२॥ स्तनजेन सार्द्धं दुग्धेन सहास्याः काल्याः कोपं पपौ अनेन शांतकोपत्वेनेत्यर्थः ॥ २३ ॥ क्षेत्रपालस्य भैरवस्याप्यष्टौ मूर्तयः अभवन्निति शेषः । तास्तु काश्यां प्रसिद्धाः एवं पूर्वोक्तप्रकारेण तेन बालेन सा काली क्रोधः मूर्छितो नष्टसंज्ञो यस्याः सा क्रोधमूर्छिता कृतेत्यन्वयः ॥ २४ ॥ ऋषिपृष्टं नृत्यारंभं सकारणं कथयति कृतमिति ॥ २५ ॥ २६ ॥ २७ ॥ अपरे सनकादयः योगानंदेनापि विभोः शिवस्य तांडवमाहुरिति शेषः ॥ २८ ॥ " यो दारुकासुरविमर्दितसर्वदेवैः संप्रार्थितः पशुपतिर्हिमराजपुत्रीम्॥ संप्रार्थ्य वह्निनयनाज्जनयन्मुरारां कालीं जयं प्रदवहत्स जये ममास्तु ॥ १ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां शिवतांडवकथनंनामषडधिकशत

तं दृष्ट्वा बालमीशानं मायया तस्य मोहिता ॥ उत्थाप्याघ्राय वक्षोजं स्तनं सा प्रददौ द्विजाः ॥ २२ ॥ स्तनजेन तदा सार्धं कोपमस्याः पपौ पुनः ॥ क्रोधेनानेन वै बालः क्षेत्राणां रक्षकोऽभवत् ॥ २३ ॥ मूर्तयोऽष्टौ च तस्यापि क्षेत्रपालस्य धीमतः ॥ एवं वै तेन बालेन कृता सा क्रोधमूर्छिता ॥ २४ ॥ कृतमस्याः प्रसादार्थं देवदेन तांडवम् ॥ संध्यायां सर्वभूतेन्द्रैः प्रेतैः प्रीतेन शूलिना ॥ २५ ॥ पीत्वा नृत्तामृतं शंभोराकंठं परमेश्वरी ॥ ननर्त सा च योगिन्यः प्रेतस्थाने यथासुखम् ॥२६॥ तत्र सब्रह्मका देवाः सेंद्रोपेंद्राः समंततः ॥ प्रणेमुस्तुष्टुवुः कालीं पुनर्देवीं च पार्वतीम् ॥ २७ ॥ एवं संक्षेपतः प्रोक्तं तांडवं शूलिनः प्रभोः ॥ योगानंदेन च विभोः तांडवं चेति चापरे ॥२८॥ इतिश्रीलिंगमहापुराणे पूर्वभागे शिवतांडवकथनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥ ऋषय ऊचुः ॥ पुरोपमन्युना सूत गाणपत्यं महेश्वरात् ॥ क्षीरार्णवः कथं लब्धो वक्तुमर्हसि सांप्रतम् ॥ १ ॥ सूत उवाच ॥ एवं कालीमुपालभ्य गते देवे त्रियंबके ॥ उपमन्युः समभ्यर्च्य तपसा लब्धवान्फलम् ॥ २ ॥ उपमन्युरिति ख्यातो मुनिश्च द्विजसत्तमाः ॥ कुमार इव तेजस्वी क्रीडमानो यदृच्छया ॥ ३ ॥ कदाचित्क्षीरमल्पं च पीतवान्मातुलाश्रमे ॥ ईर्ष्यया मातुलसुतो ह्यपिबत् क्षीरमुत्तमम् ॥ ४ ॥ पीत्वा स्थितं यथाकामं दृष्ट्वा प्रोवाच मातरम् ॥ मातर्मातर्महाभागे मम देहि तपस्विनि ॥ ५ ॥ गव्यं क्षीरमतिस्वादु नाल्पमुष्णं नमाम्यहम् ॥ सूत उवाच ॥ उपलालितैवं पुत्रेण पुत्रमालिंग्य सादरम् ॥ ६ ॥ दुःखिता विललापार्ता स्मृत्वा नैर्धन्यमात्मनः ॥ स्मृत्वा स्मृत्वा पुनः क्षीरमुपमन्युरपि द्विजाः ॥ देहिदेहीति तामाह रोदमानो महाद्युतिः ॥ ७ ॥ उंछवृत्त्यार्जितान्बीजान्स्वयं पिष्ट्वा च सा तदा ॥ बीजपिष्टं तदालोड्य तोयेन कलभाषिणी ॥ ८ ॥

तमोऽध्यायः ॥१०६॥ "सप्ताधिकशताध्याये भक्त्या प्रीतान्महेश्वरात् ॥ प्रसाद उपमन्योर्वै शाश्वतः समुदीर्यते॥ १॥" ऋषय उपमन्युवृत्तमपृच्छन्पुरेति ॥१॥ एवं पूर्वोक्तप्रकारेण कालीमुपालभ्य उत्पाद्येत्यर्थः ॥ २ ॥ कुमार इव स्कंदसदृश इत्यर्थः ॥ ३ ॥ ईर्ष्यया भागिनेयमत्सरेण ॥ ४ ॥ मातर्मातरियमादराद्विरुक्तिः अहं नमामि गव्यमतिस्वादु क्षीरं नाल्पमुष्णं मम देहीत्यग्रिमस्यैरन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ ९ ॥ १० ॥ ११ ॥ ये शिवे भक्तिहीना अत एव भाग्यहीनास्ते रत्नपूर्णाः स्वर्गपातालगोचराः तटिनीर्नदीरपि न पश्यंतीत्यन्वयः ॥ १२ ॥ येषां सदा भवः शिवो नो तुष्यति ते राज्यादिकं प्रियाणि च न लभंते न प्राप्नुवंतीत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ क्षीरोदं दुग्धसमुद्रमित्यर्थः ॥ १८ ॥ तं तप उद्युक्तं सुतं पुत्रं माता सुतरां शुभं कल्याणं यस्मात्तत्सुशुभं शिवाराधनं सुतरामत्यंतं कुर्वित्याहेत्यन्वयः ॥ १९ ॥ विभूषितं ततमित्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ क्षीरार्थमयं सार्धश्लोकः ॥ २४ ॥

ऐह्येहि मम पुत्रेति सामपूर्वं ततः सुतम् ॥ आलिंग्यादाय दुःखार्ता प्रददौ कृत्रिमं पयः ॥ ९ ॥ पीत्वा च कृत्रिमं क्षीरं मात्रा दत्तं द्विजोत्तमः ॥ नैतत्क्षीरमिति प्राह मातरं चातिविह्वलः ॥ १० ॥ दुःखिता सा तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि ॥ संमार्ज्य नेत्रे पुत्रस्य कराभ्यां कमलायते ॥ ११ ॥ तटनी रत्नपूर्णास्ते स्वर्गपातालगोचराः ॥ भाग्यहीना न पश्यंति भक्तिहीनाश्च ये शिवे ॥ १२ ॥ राज्यं स्वर्गं च मोक्षं च भोजनं क्षीरसंभवम् ॥ न लभंते प्रियाण्येषां नो तुष्यति सदा भवः ॥१३॥ भवप्रसादजं सर्वं नान्यदेवप्रसादजम् ॥ अन्यदेवेषु निरता दुःखार्त्ता विभ्रमंति च ॥१४॥ क्षीरं तत्र कुतोऽस्माकं महादेवो न पूजितः ॥ पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुत ॥१५॥ तदेव लभ्यं नान्यत्तु विष्णुमुद्दिश्य वा प्रभुम् ॥ १६ ॥ निशम्य वचनं मातुरुपमन्युर्महाद्युतिः ॥ १६ ॥ बालोऽपि मातरं प्राह प्रणिपत्य तपस्विनीम् ॥ त्यज शोकं महाभागे महादेवोऽस्ति चेत्क्वचित् ॥ १७ ॥ चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥ सूत उवाच ॥ तां प्रणम्यैवमुक्त्वा स तपः कर्तुं प्रचक्रमे ॥ १८ ॥ तमाह माता सुशुभं कुर्विति सुतरां सुतम् ॥ अनुज्ञातस्तया तत्र तपस्तेपे सुदुस्तरम् ॥ १९ ॥ हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥ तपसा तस्य विप्रस्य विभूषितमभूज्जगत् ॥ २० ॥ प्रणम्याहुस्तु तत्सर्वं हरये देवसत्तमाः ॥ श्रुत्वा तेषां तदा वाक्यं भगवान्पुरुषोत्तमः ॥ २१ ॥ किमिदं त्विति संचिंत्य ज्ञात्वा तत्कारणं च सः ॥ जगाम मंदरं तूर्णं महेश्वरदिदृक्षया ॥ २२ ॥ दृष्ट्वा देवं प्रणम्यैवं प्रोवाचेदं कृतांजलिः ॥ भगवन्ब्राह्मणः कश्चिदुपमन्युरिति श्रुतः ॥ २३ ॥ क्षीरार्थमदहत्सर्वं तपसा तं निवारय ॥ एतस्मिन्नंतरे देवः पिनाकी परमेश्वरः ॥२४॥ शक्ररूपं समास्थाय गंतुं चक्रे मतिं तदा ॥ अथ जगाम मुनेस्तु तपोवनं गजवरेण सितेन सदाशिवः ॥ सह सुरासुरसिद्धमहोरगैरमरराजतनुं स्वयमास्थितः ॥ २५ ॥

शिवगमनं द्रुतविलंबितेन कथयति अथेति । तदुक्तं छंदसि 'द्रुतविलंबितंम्भौ्रौ' इति तदुपवर्णितं कालि दासेन "अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा ॥ विरतिजं च तथैव विचक्षणे द्रुतविलंबितमित्युपदिश्यते" इति ॥ २५ ॥

तदागमनकाले शच्या सहितं सुरेंद्रं तं शिवं सहैव विवस्वान्सूर्यः द्विपं हस्तिनमारुह्य वामेन बालव्यजनमन्येन करेण सितातपत्रं प्रगृह्य सिषेवे इति शेषः॥२६॥२७॥२८॥ मुनिवरा इति शौनकादिसंबोधनम् ॥ २९ ॥३०॥ ३१ ॥ धौम्याग्रज धौम्यज्येष्ठभ्रातरित्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥३५॥३६॥३७॥३८॥ देवदेवस्य रुद्रस्य निर्गुणत्वमल्पत्वं त्वयैव कथितम्

सहैव चारुह्य तदा द्विपं तं प्रगृह्य बालव्यजनं विवस्वान् ॥ वामेन शच्या सहितं सुरेन्द्रं करेण चान्येन सितातपत्रम् ॥२६॥ रराज भगवान् सोमः शक्ररूपी सदाशिवः ॥ सितातपत्रेण यथा चंद्रबिंबेन मंदरः ॥२७॥ आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः ॥ जगामानुग्रहं कर्त्तुमुपमन्योस्तदाश्रमम् ॥२८॥ तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम् ॥ प्रणम्य शिरसा प्राह मुनिर्मुनिवराः स्वयम् ॥ २९ ॥ पावितश्चाश्रमश्चायं मम देवेश्वरः स्वयम् ॥ प्राप्तः शक्रो जगन्नाथो भगवान्भानुना प्रभुः ॥ ३० ॥ एवमुक्त्वा स्थितं वीक्ष्य कृतांजलिपुटं द्विजम् ॥ प्राह गंभीरया वाचा शक्ररूपधरो हरः ॥ ३१ ॥ तुष्टोऽस्मि ते वरं ब्रूहि तपसानेन सुव्रत ॥ ददामि चेप्सितान्सर्वान्धौम्याग्रज महामते ॥ ३२ ॥ एवमुक्तस्तदा तेन शक्रेण मुनिसत्तमः ॥ वरयामि शिवे भक्तिमित्युवाच कृतांजलिः ॥ ३३ ॥ ततो निशम्य वचनं मुनेः कुपितवत्प्रभुः ॥ प्राह सव्यग्रमीशानः शक्ररूपधरः स्वयम् ॥ ३४ ॥ मां न जानासि देवर्षे देवराजानमीश्वरम् ॥ त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम् ॥ ३५ ॥ मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा ॥ ददामि सर्वं भद्रं ते त्यज रुद्रं च निर्गुणम् ॥ ३६ ॥ ततः शक्रस्य वचनं श्रुत्वा श्रोत्रविदारणम् ॥ उपमन्युरिदं प्राह जपन्पंचाक्षरं शुभम् ॥ ३७ ॥ मन्ये शक्रस्य रूपेण नूनमत्रागतः स्वयम् ॥ कर्त्तुं दैत्याधमः कश्चिद्धर्मविघ्नं च नान्यथा ॥ ३८ ॥ त्वयैव कथितं सर्वं भवनिंदारतेन वै ॥ प्रसंगाद्देवदेवस्य निर्गुणत्वं महात्मनः ॥ ३९ ॥ बहुनात्र किमुक्तेन मयाद्यानुमितं महत् ॥ भवांतरकृतं पापं श्रुत्वा निंदा भवस्य तु ॥ ४० ॥ श्रुत्वा निंदां भवस्याथ तत्क्षणादेव संत्यजेत् ॥ स्वदेहं तं निहत्याशु शिवलोकं स गच्छति ॥ ४१ ॥ यो वाचोत्पाटयेज्जिह्वां शिवनिंदारतस्य तु ॥ त्रिःसप्तकुलमुद्धृत्य शिवलोकं स गच्छति ॥ ४२ ॥ आस्तां तावन्ममेच्छाया क्षीरं प्रति सुराधम ॥ निहत्य त्वां शिवास्त्रेण त्यजाम्येतत्कलेवरम् ॥ ४३ ॥ पुरा मात्रा तु कथितं तत्थ्यमेव न संशयः ॥ पूर्वजन्मनि चास्माभिरपूजित इति प्रभुः ॥ ४४ ॥ एवमुक्त्वा तु तं देवमुपमन्युरभीतवत् ॥ शक्रं चक्रे मतिं हंतुमथर्वास्त्रेण मंत्रवित् ॥ ४५ ॥ भस्माधारान्महातेजा भस्ममुष्टिं प्रगृह्य च ॥ अथर्वास्त्रं ततस्तस्मै ससर्ज च ननाद च ॥ ४६ ॥ दग्धुं स्वदेहमाग्नेयीं ध्यात्वा वै धारणां तदा ॥ अतिष्ठच्च महातेजाः शुष्केंधनमिवाव्ययः ॥ ४७ ॥

इत्येनन सर्वेषूज्यस्याल्पत्वं वदत एव मौर्ख्यं सूचितम् ॥३९॥ तव मौर्ख्यमास्तां तथापि महन्निंदाश्रोतुर्मम पातकमनुमीयत इति कथयति बहुनात्रेति॥४०॥ घोरशैवधर्मफलं कथयति श्रुत्वेत्यादिना ॥ ४१ ॥ ४२ ॥ उपमन्युः स्वकर्तव्यं कथयति आस्तामित्यादिना ॥ ४३ ॥ ४४ ॥ ४५ ॥ भस्माधारात् भस्माश्रयादित्यर्थः ॥ ४६ ॥ ४७ ॥

एवं व्यवसिते स्वदेहं दग्धुं निश्चित इत्यर्थः सौम्येन सोमधारणायोगेन तस्योपमन्योर्धारणामाग्नेयीं भगवान्वारयामासेत्यन्वयः ॥४८॥ तदा कालाग्निसदृशमथर्वास्त्रं नंदिनः शैलादे र्नियोगाच्चंद्रिकेण तत्संज्ञकगणेन संहृतमित्यन्वयः ॥ ४० ॥ प्रसादं कथयति स्वरूपमित्यादिना ॥ ५० ॥ ५१ ॥५२॥५३॥५४॥५५॥५६॥ ५७॥ ५८ ॥ ५९ ॥ शिवप्रसादोत्तरं गौरीप्रसादमाह देवीति ॥ ६० ॥ ६१ ॥ विरजेषु सात्विकेष्वेव ईक्षणं दृष्टिर्यस्य तम् ॥ ६२ ॥ ६३ ॥ ईप्सितं प्रार्थितमित्यर्थः ॥ ६४ ॥ "नादत्तमुपतिष्ठति सेप विधिर्वै न हि स्वभ

एवं व्यवसिते विप्रे भगवान्भगनेत्रहा ॥ वारयामास सौम्येन धारणां तस्य योगिनः ॥४८॥ अथर्वास्त्रं तदा तस्य संहृतं चंद्रकेण तु ॥ कालाग्निसदृशं चैव नियोगान्नंदिनस्तथा ॥४९॥ स्वरूपमेव भगवानास्थाय परमेश्वरः ॥ दर्शयामास विप्राय बालेंदुकृतशेखरम् ॥ ५० ॥ क्षीरधारासहस्रं च क्षीरोदार्णवमेव च ॥ दध्यादेरर्णवं चैव घृतोदार्णवमेव च ॥५१॥ फलार्णवं च बालस्य भक्ष्यभोज्यार्णवं तथा ॥ अपूपगिरयश्चैव तथातिष्ठन् समंततः ॥ ५२ ॥ उपमन्युमुवाच सस्मितो भगवान्भुजगैः समावृतम् ॥ गिरिजामवलोक्य सस्मितां सघृणं प्रेक्ष्य तु तं तदा घृणी ॥ ५३ ॥ भुंक्ष्व भोगान्यथाकामं बांधवैः पश्य वत्स मे ॥ उपमन्यो महाभाग तवांबा हि पार्वती ॥५४॥ मया पुत्रीकृतोस्यद्य दत्तः क्षीरोदधिस्तथा ॥ मधुनश्चार्णवश्चैव दध्नश्चार्णव एव च ॥५५॥ आज्योदनार्णवश्चैव फललेह्यार्णवस्तथा ॥ अपूपगिरयश्चैव भक्ष्यभोज्यार्णवः पुनः ॥५६॥ पिता तव महादेवः पिता वै जगतां मुने ॥ माता तव महाभागा जगन्माता न संशयः ॥ ५७ ॥ अमरत्वं मया दत्तं गाणपत्यं च शाश्वतम् ॥ वरान्वरय दास्यामि नात्र कार्या विचारणा ॥ ५८ ॥ एवमुक्त्वा महादेवः कराभ्यामुपगृह्य तम् ॥ आघ्राय मूर्धनि विभुर्ददौ देव्यास्तदा भवः ॥ ५९ ॥ देवी तनयमालोक्य ददौ तस्मै गिरीन्द्रजा ॥ योगैश्वर्यं तदा तुष्टा ब्रह्मविद्यां द्विजोत्तमाः ॥ ६० ॥ सोपि लब्ध्वा वरं तस्याः कुमारत्वं च सर्वदा ॥ तुष्टाव च महादेवं हर्षगद्गदया गिरा ॥ ६१ ॥ वरयामास च तदा वरेण्यं विरजेक्षणम् ॥ कृतांजलिपुटो भूत्वा प्रणिपत्य पुनःपुनः ॥ ६२ ॥ प्रसीद देवदेवेश त्वयि चाव्यभिचारिणी ॥ श्रद्धा चैव महादेव सान्निध्यं चैव सर्वदा ॥ ६३ ॥ एवमुक्तस्तदा तेन प्रहसन्निव शंकरः ॥ दत्त्वेप्सितं हि विप्राय तत्रैवांतरधीयत ॥ ६४ ॥ इति श्रीलिंगमहापुराणे पूर्वभागे उपमन्युचरितं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ऋषय ऊचुः ॥ दृष्टोऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्मणा ॥ धौम्याग्रजस्ततो लब्धं दिव्यं पाशुपतं व्रतम् ॥१॥ कथं लब्धं तदा ज्ञानं तस्मात्कृष्णेन धीमता ॥ वक्तुमर्हसि तां सूत कथां पातकनाशिनीम् ॥२॥

किपु ॥ उपमन्योरिति हेतोः क्षीरोदादीन ददद्धरः पायात् ॥१॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायां सप्ताधिकशततमोऽध्यायः ॥१०७॥ "अष्टाधिकशताध्याये श्रीकृष्णस्योपमन्युतः॥ शैवदीक्षादिकथितं दानं चोपस्करस्य वै॥१॥" ऋषय उपमन्योः श्रीकृष्णोपदेशकथामपृच्छन् दृष्ट इत्यादिना । असौ शिवयोः पुत्रीकृत उपमन्युः कृष्णेन दृष्टस्ततो दिव्यं पाशुपतं व्रतं लब्धमित्यन्वयः ॥ १ ॥ धीमता कृष्णेन तदा व्रतलाभकाल एव तस्मादुपमन्युसकाशात् ज्ञानं कथं केन प्रकारेण लब्धं तां संक्षेपोक्तां कथां सूत वक्तुम

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

हंसीत्यन्वयः॥२॥वासुदेवः स्वेच्छया अवतीर्णो न तु अन्यजीववत्कर्मादिहेतुनेत्यर्थः। तथाप्यन्यजीवोपदेशार्थं मानुष्यंनिंदयन्नेव देहशुद्धिं चकारेत्यन्वयः ॥ ३ ॥ पुत्रार्थं च शिवदर्शनपूर्वकपुत्रप्राप्त्यर्थमित्यर्थः ॥४॥ कृष्णस्यापि गुर्वभिनयं कथयति नम इति ॥ ५ ॥ उपमन्युप्रभावं कथयति ॥ तस्येति ॥ ६ ॥ पाशुपतव्रतदानप्रकारं कथयति भस्मनेति ॥ ७ ॥ पाशुपत पशुपतिप्रोक्तं दिव्यं ज्ञानमद्वैतज्ञानमित्यर्थः ॥ ८ ॥ सांबं पार्वतीसहितं सगण नंद्यादिगणयुक्तं महेश्वरं शिवमव्ययं तपसा एकवर्षांते कृष्णो दृष्ट्वा आत्मनः पुत्रं सांबाख्यं लब्धवानित्यन्वयः ॥ ९ ॥ तदाप्रभृति उपमन्यूपदेशमारभ्येत्यर्थः। संशितव्रताः अतिशुद्धव्रताः पाशुपताः शैवाः सर्वे मुनयो मार्कंडेयादयः सर्वदा कृष्णं संवृत्य तस्थुरित्य

सूत उवाच ॥ स्वेच्छया ह्यवतीर्णोऽपि वासुदेवः सनातनः ॥ निंदयन्नेव मानुष्यं देहशुद्धिं चकार सः ॥ ३ ॥ पुत्रार्थं भगवांस्तत्र तपस्तप्तुं जगाम च ॥ आश्रमं चोपमन्योर्वै दृष्टवांस्तत्र तं मुनिम् ॥ ४ ॥ नमश्चकार तं दृष्ट्वा धौम्याग्रजमहो द्विजाः ॥ बहुमानेन वै कृष्णस्त्रिः कृत्वा वै प्रदक्षिणम् ॥५॥ तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ॥ नष्टमेव मलं सर्वं कायजं कर्मजं तथा ॥६॥ भस्मनोद्धूलनं कृत्वा उपमन्युर्महाद्युतिः ॥ तमग्निरिति विप्रेंद्रा वायुरित्यादिभिः क्रमात् ॥ ७ ॥ दिव्यं पाशुपतं ज्ञानं प्रददौ प्रीतमानसः ॥ मुनेः प्रसादान्मान्योऽसौ कृष्णः पाशुपते द्विजाः ॥ ८ ॥ तपसा त्वेकवर्षान्ते दृष्ट्वा देवं महेश्वरम् ॥ सांबं सगणमव्ययं लब्धवान्पुत्रमात्मनः ॥ ९ ॥ तदाप्रभृति तं कृष्णं मुनयः संशितव्रताः ॥ दिव्याः पाशुपताः सर्वे तस्थुः संवृत्य सर्वदा ॥ १० ॥ अन्यं च कथयिष्यामि मुक्त्यर्थं प्राणिनां सदा ॥ सौवर्णीं मेखलां कृत्वा आधारं दंडधारणम् ॥ ११ ॥ सौवर्णं पिंडिकं चापि व्यजनं दंडमेव च ॥ नरैः स्त्रियाथ वा कार्यं मषीभाजनलेखनीम् ॥ १२ ॥ क्षुराकर्तरिका चापि अथ पात्रमथापि वा ॥ पाशुपताय दातव्यं भस्मोद्धूलितविग्रहैः ॥ १३ ॥ सौवर्णं राजतं वापि ताम्रं वाथ निवेदयेत् ॥ आत्मवित्तानुसारेण योगिनं पूजयेद्बुधः ॥ १४ ॥

न्वयः ॥१०॥ अन्यं पृष्टान्यद्दीक्षोपस्करदानरूपव्रतं प्राणिनां सदा मुक्त्यर्थं कथयिष्यामीत्यन्वयः। सौवर्णीं सुवर्णमयीं मेखलां परिनालिकाम् आधारं मेखलाधारं धार्यतेऽनेनेति धारणं दंडवद्धारणं जलनिवारकबहिर्भाग इत्यर्थः। पिंडिकं लिंगं व्यजनं वालव्यजनं दंडं दीक्षादंडं मषीभाजनेन मषिकापात्रेण युक्ता लेखनी मषीभाजनलेखनी तां क्षुरया सहिता कर्तरिका क्षुराकर्तरिका अथ पात्रमुदकपात्रमपि सौवर्णं कृत्वा भस्मोद्धूलितविग्रहैः नरैर्वाथ स्त्रिया पाशुपताय दातव्यमिति तृतीयेणान्वयः॥११॥१२॥१३॥शक्ताशक्तपक्षमाह सौवर्णमिति ॥ १४ ॥ ते पूर्वोक्तदानकारिणः ॥ १५ ॥ दानफलं कथयति तस्मादिति ॥ १६ ॥ योगिनां संप्रदानेन शिवः क्षिप्रं प्रसीदतीत्यतो यदि मोक्षमिच्छेत्तेन भव्यं राज्यादि सर्वस्वं वापि दातव्यमिति पूर्वस्थैरन्वयः ॥ १७ ॥ सर्वश्रेष्ठसाधनं कथयति अध्रुवेणेति । अध्रुवेणानित्येन शरीरेण भव्यं प्रशस्तं पाशुपतं पशुपतिप्रोक्तव्रतं प्रयत्नतः सर्वप्रयासेन साध्यमित्यर्थः ॥ १८ ॥ एतदुपमन्यूपदेशकृष्णचरितमित्यर्थः ॥ १९ ॥ "यस्य प्रसादादुपमन्युबालः कृष्णस्य वंद्यो ह्यभवन्मुनींद्र ॥ स एव भक्तार्तिहरः शिवो मे प्रसीदतामाश्रित

ते सर्वे पापनिर्मुक्ताः समस्तकुलसंयुताः ॥ यांति रुद्रपदं दिव्यं नात्र कार्या विचारणा ॥ १५ ॥ तस्माद्देनेन दानेन गृहस्थो मुच्यते भवात् ॥ योगिनां संप्रदानेन शिवः क्षिप्रं प्रसीदति ॥ १६ ॥ राज्यं पुत्रं धनं भव्यमश्वं यानमथापि वा ॥ सर्वस्वं वापि दातव्यं यदीच्छेन्मोक्षमुत्तमम् ॥ ॥ १७ ॥ अध्रुवेण शरीरेण ध्रुवं साध्यं प्रयत्नतः ॥ भव्यं पाशुपतं नित्यं संसारार्णवतारकम् ॥ १८ ॥ एतद्वः कथितं सर्वं संक्षेपान्न च संशयः ॥ यः पठेच्छृणुयाद्वापि विष्णुलोकं स गच्छति ॥ १९ ॥ इति श्रीलिंगमहापुराणे पूर्वभागेऽष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥ समाप्तश्चायं पूर्वभागः ॥ श्रीशंकरार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥

कामधेनुः ॥ १ ॥ लैंगस्य पूर्वभागोयं मया विश्वेशतुष्टये ॥ व्याख्यातः सज्जनानां च मुदे भूयान्निरंतरम् ॥ २ ॥ नातः कृत्यतमं मन्ये मनुजानां सतामिह ॥ जगन्मातस्य सांबस्य श्रद्धया भजनं विना ॥ ३ ॥" इति श्रीलिंगमहापुराणे पूर्वभागे शिवतोषिण्यां टीकायामष्टाधिकशततमोऽध्यायः समाप्तः ॥ १०८ ॥ श्रीमत्पार्वतीशंकरं नमामि ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥ अथ श्रीसटीकलिंगमहापुराणोत्तरभागप्रारंभः ॥

श्रीगणेशाय नमः॥"लैंगोत्तरेऽस्मिन्प्रथमे सांबस्यातिप्रियात्मनः॥ विष्णोर्गानात्तु परमा प्रीतिश्चेति कथोच्यते॥१॥" विष्णोः परमशिववल्लभत्वादृषयः स केन तुष्यतीत्यपृच्छन्कृष्ण इति ॥ १ ॥ २ ॥ पुराणश्चिरंजीवित्वाद्‌तिप्राचीनोऽत एव पुराणार्थेषु विशारदोऽतिनिपुण इत्यर्थः ॥ ३ ॥ नारायणानां नारायणनिर्मितानामित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ एव पाद्मकल्पवृत्तं समाश्रित्य यस्माद्ब्रह्मा ततः सर्वं मुच्यत इत्यन्वयः यन्नारायणात्यंतप्रियं मया दृष्टं विदितं तत्रेति शेषः एकमद्वितीयं धर्मं प्रवक्ष्यामीत्यन्वयः ॥ ८॥ ९ ॥ १० ॥ ताल

श्रीगणेशाय नमः ॥ ऋषय ऊचुः ॥ कृष्णस्तुष्यति केनेह सर्वदेवेश्वरेश्वरः ॥ वक्तुमर्हसि चास्माकं सूत सर्वार्थविद्भवान् ॥ १ ॥ सूत उवाच ॥ पुरा पृष्टो महातेजा मार्कंडेयो महामुनिः ॥ अंबरीषेण विप्रेंद्रास्तद्वदामि यथातथम् ॥ २ ॥ अंबरीष उवाच ॥ मुने समस्तधर्माणां पारगस्त्वं महामते ॥ मार्कंडेय पुराणोऽसि पुराणार्थविशारदः ॥ ३ ॥ नारायणानां दिव्यानां धर्माणां श्रेष्ठमुत्तमम् ॥ तत्किं ब्रूहि महाप्राज्ञ भक्तानामिह सुव्रत ॥ ४ ॥ सूत उवाच ॥ तस्य तद्वचनं श्रुत्वा समुत्थाय कृतांजलिः ॥ स्मरन्नारायणं देवं कृष्णमच्युतमव्ययम् ॥ ५ ॥ मार्कंडेय उवाच ॥ शृणु भूप यथान्यायं पुण्यं नारायणात्मकम् ॥ स्मरणं पूजनं चैव प्रणामो भक्तिपूर्वकम् ॥ ६ ॥ प्रत्येकमश्वमेधस्य यज्ञस्य सममुच्यते ॥ य एकः पुरुषः श्रेष्ठः परमात्मा जनार्दनः ॥ ७ ॥ यस्माद्ब्रह्मा ततः सर्वं समाश्रित्यैव मुच्यते ॥ धर्ममेकं प्रवक्ष्यामि यद्दृष्टं विदितं मया ॥ ८ ॥ पुरा त्रेतायुगे कश्चित् कौशिको नाम वै द्विजः ॥ वासुदेवपरो नित्यं सामगानरतः सदा ॥ ९ ॥ भोजनासनशय्यासु सदा तद्गतमानसः ॥ उदार चरितं विष्णोर्गायमानः पुनः पुनः ॥ १० ॥ विष्णोःस्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ॥ अगायत हरिं तत्र तालवर्णलयान्वितम् ॥ ११ ॥ मूर्छनास्वरयोगेन श्रुतिभेदेन भेदितम् ॥ भक्तियोगं समापन्नो भिक्षामात्रं हि तत्र वै ॥ १२ ॥ तत्रैनं गायमानं च दृष्ट्वा कश्चिद्द्विजस्तदा ॥ पद्माख्य इति विख्यातस्तस्मै चान्नं ददौ तदा ॥ १३ ॥ सकुटुंबो महातेजा ह्युष्णमन्नं हि तत्र वै ॥ कौशिको हि तदा हृष्टो गायन्नास्ते हरिं प्रभुम् ॥ १४ ॥ शृण्वन्नास्ते स पद्माख्यः काले काले विनिर्गतः ॥ कालयोगेन संप्राप्ताः शिष्या वै कौशिकस्य च ॥ १५ ॥

वर्णलयेन तौर्यत्रिकसाम्येनेत्यर्थः "लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च" इति विश्वः ॥ ११ ॥ श्रुतिभेदेन बृहद्रथंतरादिनेत्यर्थः तत्र विष्णुमंदिरे भिक्षामात्रं केवलभिक्षान्नं भुंजान इति शेषः ॥ १२ ॥ १३ ॥ सकुटुंबः कौशिकस्तत्र वै विष्णुमंदिर एव [illegible] ॥ १४ ॥ कौशिकस्य कालयोगेन केन

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

चिरकालेन विप्राणां राजन्यवैश्यानां कुलसंभवाः सप्तशिष्याः संमाता इत्यग्रिमस्थैरन्वयः ॥ १५ ॥ १६ ॥ तथान्नाद्यमन्नाद्युपस्करमित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

सप्त राजन्यवैश्यानां विप्राणां कुलसंभवाः ॥ ज्ञानविद्याधिकाः शुद्धा वासुदेवपरायणाः ॥ १६ ॥ तेषामपि तथान्नाद्यं पद्माक्षः प्रददौ स्वयम् ॥ शिष्यैश्च सहितो नित्यं कौशिको हृष्टमानसः ॥ १७ ॥ विष्णुस्थले हरिं तत्र आस्ते गायन्यथाविधि ॥ तत्रैव मालवो नाम वैश्यो विष्णुपरायणः ॥१८॥दीपमालां हरेर्नित्यं करोति प्रीतिमानसः ॥ मालवी नाम भार्या च तस्य नित्यं पतिव्रता ॥१९॥ गोमयेन समालिप्य हरेः क्षेत्रं समंततः ॥ भर्त्रा सहास्ते सुप्रीता शृण्वती गानमुत्तमम् ॥ २० ॥ कुशस्थलात्समापन्ना ब्राह्मणाः शंसितव्रताः ॥ पंचाशद्वै समापन्ना हरेर्गानार्थमुत्तमाः ॥ २१ ॥ साधयंतो हि कार्याणि कौशिकस्य महात्मनः ॥ ज्ञानविद्यार्थतत्त्वज्ञाः शृण्वंतो ह्यवसंस्तु ते ॥ २२ ॥ ख्यातमासीत्तदा तस्य गानं वै कौशिकस्य तत ॥ श्रुत्वा राजा समभ्येत्य कलिंगो वाक्यमब्रवीत् ॥२३॥ कौशिकाद्य गणैः सार्धं गायस्वेह च मां पुनः ॥ शृणुध्वं च तथा यूयं कुशस्थलजना अपि ॥ २४ ॥ तच्छ्रुत्वा कौशिकः प्राह राजानं सांत्वया गिरा ॥ न जिह्वा मे महाराजन् वाणी च मम सर्वदा ॥ २५ ॥ हरेरन्यमपींद्रं वा स्तौति नैव च वक्ष्यति ॥ एवमुक्ते तु तच्छिष्यो वासिष्ठो गौतमो हरिः ॥ २६ ॥ सारस्वतस्तथा चित्रश्चित्रमाल्यस्तथा शिशुः ऊचुस्ते पार्थिवं तद्वद्यथा प्राह च कौशिकः ॥ २७ ॥ श्रावकास्ते तथा प्रोचुः पार्थिवं विष्णुतत्पराः ॥ श्रोत्राणीमानि शृण्वंति हरेरन्यं न पार्थिव ॥ २८ ॥ गानकीर्तिं वयं तस्य शृणुमोन्यां न च स्तुतिम् ॥ तच्छ्रुत्वा पार्थिवो रुष्टो गायतामिति चाब्रवीत् ॥२९॥ स्वभृत्यान्ब्राह्मणा ह्येते कीर्तिं शृण्वंति मे यथा ॥ न शृण्वंति कथं तस्मात् गायमाने समंततः ॥ ३० ॥ एवमुक्तास्तदा भृत्या जगुः पार्थिवमुत्तमम् ॥ निरुद्धमार्गा विप्रास्ते गाने वृत्ते तु दुःखिताः ॥ ३१ ॥ काष्ठशंकुभिरन्योन्यं श्रोत्राणि विदधुर्द्विजाः ॥ कौशिकाद्याश्च तां ज्ञात्वा मनोवृत्तिं नृपस्य वै ॥ ३२ ॥ प्रसह्यास्मांस्तु गायेत स्वगानेसौ नृपःस्थितः ॥ इति विप्राः सुनियता जिह्वाग्रं चिच्छिदुः करैः ॥३३॥ ततो राजा सुसंक्रुद्धः स्वदेशात्तान्यवासयत् ॥ आदाय सर्वं वित्तं च ततस्ते जग्मुरुत्तराम्॥३४॥दिशमासाद्य कालेन कालधर्मेण योजिताः॥ तानागतान्यमो दृष्ट्वा किं कर्तव्यमिति स्म ह॥३५॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ३२ ॥ ३३ ॥ ३४ ॥ कालधर्मेण स्थूलदेहवियोगेनेत्यर्थः तान् कौशिकादीनागतान् प्राप्तान् यमो दृष्ट्वा किं कर्तव्यमिति स्म ह संभ्रान्तो बभूवेत्यर्थः ॥ ३५ ॥ तत्क्षणे यमचिंतनकाले ब्रह्मा चेष्टितं कौशिकादिचरित्रं बुध्वेति शेषः । सुराधिपानिंद्रादीनद्य यथासुखं कौशिकादीन् वासय ध्वमिति प्राहेत्यन्वयः ॥ ३६ ॥ कौशिकादीनां यमादि लोकेषु निवासोनुचित इति पुनराह गानयोगेनेति गानेन सामगानेन पश्चाज्जिह्वादिनाशे योगेन चित्तवृत्तिनिरोधेन ये जनार्दनं नित्यं पूजयंति तान्यूयं देवत्वमिच्छथ चेद्यदिआनयत प्रापयत वः भद्रं भविष्यतीति शेषः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ब्रह्मणा अतिगौरवमाचरितं दृष्ट्वा देवानामुल्बणं

चेष्टितं तत्क्षणे राजन् ब्रह्मा प्राह सुराधिपान् ॥ कौशिकादीन् द्विजानद्य वासयध्वं यथासुखम् ॥ ३६ ॥ गानयोगेन ये नित्यं पूजयंति जनार्दनम् ॥ तानानयत भद्रं वो यदि देवत्वमिच्छथ ॥ ३७ ॥ इत्युक्ता लोकपालास्ते कौशिकेति पुनः पुनः ॥ मालवेति तथा केचित् पद्माक्षेति तथा परे ॥ ३८ ॥ क्रोशमानाः समभ्येत्य तानादाय विहायसा ॥ ब्रह्मलोकं गताः शीघ्रं मुहूर्तेनैव ते सुराः ॥ ३९ ॥ कौशिकादींस्ततो दृष्ट्वा ब्रह्मा लोकपितामहः ॥ प्रत्युद्गम्य यथान्यायं स्वागतेनाभ्यपूजयत् ॥ ४० ॥ ततः कोलाहलमभूदतिगौरवमुल्बणम् ॥ ब्रह्मणा चरितं दृष्ट्वा देवानां नृपसत्तम ॥ ४१ ॥ हिरण्यगर्भो भगवांस्तान्निवार्य सुरोत्तमान् ॥ कौशिकादीन्समादाय मुनीन् देवैः समावृतः ॥ ४२ ॥ विष्णुलोकं ययौ शीघ्रं वासुदेवपरायणः ॥ तत्र नारायणो देवः श्वेतद्वीपनिवासिभिः ॥ ४३ ॥ ज्ञानयोगेश्वरैः सिद्धैर्विष्णुभक्तैः समाहितैः ॥ नारायणसमैर्दिव्यैश्चतुर्बाहुधरैः शुभैः ॥ ४४ ॥ विष्णुचिह्नसमापन्नैर्दीप्यमानैरकल्मषैः ॥ अष्टाशीतिसहस्रैश्च सेव्यमानो महाजनैः ॥ ४५ ॥ अस्माभिर्नारदाद्यैश्च सनकाद्यैरकल्मषैः ॥ भूतैर्नानाविधैश्चैव दिव्यस्त्रीभिः समंततः ॥ ४६ ॥ सेव्यमानोथ मध्ये वै सहस्रद्वारसंवृते ॥ सहस्रयोजनायामे दिव्ये मणिमये शुभे ॥ ४७ ॥ विमाने विमले चित्रे भद्रपीठासने हरिः ॥ लोककार्ये प्रसक्तानां दत्तदृष्टिश्च माधवः ॥ ४८ ॥ तस्मिन्कालेऽथ भगवान् कौशिकाद्यैश्च संवृतः ॥ आगम्य प्रणिपत्याग्रे तुष्टाव गरुडध्वजम् ॥ ४९ ॥ ततो विलोक्य भगवान् हरिर्नारायणः प्रभुः ॥ कौशिकेत्याह संप्रीत्या तान्सर्वांश्च यथाक्रमम् ॥ ५० ॥ जयघोषो महानासीन्महाश्चर्यं समागते ॥ ब्रह्माणमाह विश्वात्मा शृणु ब्रह्मन् मयोदितम् ॥ ५१ ॥ कौशिकस्य इमे विप्राः साध्यसाधनतत्पराः ॥ हिताय संप्रवृत्ता वै कुशस्थलनिवासिनः ॥ ५२ ॥ मत्कीर्तिश्रवणे युक्ता ज्ञानतत्त्वार्थकोविदाः ॥ अनन्यदेवताभक्ताः साध्या देवा भवंत्विमे ॥ ५३ ॥ मत्समीपे तथान्यत्र प्रवेशं देहि सर्वदा ॥ एवमुक्त्वा पुनर्देवः कौशिकं प्राह माधवः ॥ ५४ ॥

कोलाहलमभूदित्यन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ लोककार्ये प्रसक्तानामनेकब्रह्मादिदेवानां दत्ता दृष्टिर्दर्शनावसरो येन स दत्तदृष्टिर्माधवो विष्णुरासेति शेषः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

दिग्बंधः समीपवर्तीत्यर्थः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ विष्णुर्वरान् दत्त्वा ब्रह्मणे कारणान्याह कौशिकस्येत्यादिना ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ एवं पर्वोक्तप्रकारं तत्र समाजे हरिरुक्त्वा लोकैः सर्वैः पूजितो यथायोग्यमिति स्तुतिः अतिष्ठदिति शेषः ॥ ६७ ॥ लक्ष्म्यागमं कथयति

स्वशिष्यैस्त्वं महाप्राज्ञ दिग्बंधो भव मे सदा ॥ गणाधिपत्यमापन्नो यत्राहं त्वं समास्व वै ॥ ५५ ॥ मालवं मालवीं चैवं प्राह दामोदरो हरिः ॥ मम लोके यथाकामं भार्यया सह मालव ॥ ५६ ॥ दिव्यरूपधरः श्रीमान् शृण्वन्गानमिहाधिपः ॥ आस्व नित्यं यथाकामं यावल्लोका भवंति वै ॥ ५७॥ पद्माक्षमाह भगवान् धनदो भव माधवः ॥ धनानामीश्वरो भूत्वा यथाकालं हि मां पुनः ॥ ५८ ॥ आगम्य दृष्ट्वा मां नित्यं कुरु राज्यं यथासुखम्॥ एवमुक्त्वा हरिर्विष्णुर्ब्रह्माणमिदमब्रवीत् ॥ ५९ ॥ कौशिकस्यास्य गानेन योगनिद्रा च मे गता ॥ विष्णुस्थले च मां स्तौति शिष्यैरेष समन्ततः ॥६०॥ राज्ञा निरस्तः क्रूरेण कलिंगेन महीयसा ॥ स जिह्वाछेदनं कृत्वा हरेरन्यं कथंचन ॥६१॥ न स्तोष्यामीति नियतः प्राप्तोसौ मम लोकताम् ॥ एते च विप्रा नियता मम भक्ता यशस्विनः ॥ ६२ ॥ श्रोत्रच्छिद्रमथाहत्य शंकुभिर्वै परस्परम् ॥ श्रोष्यामो नैव चान्यद्व हरेः कीर्तिमिति स्म ह ॥ ६३ ॥ एते विप्राश्च देवत्वं मम सान्निध्यमेव च ॥ मालवो भार्यया सार्धं मत्क्षेत्रं परिमृज्य वै ॥ ६४ ॥ दीपमालादिभिर्नित्यमभ्यर्च्य सततं हि माम् ॥ गानं शृणोति नियतो मत्कीर्तिरचितान्वितम् ॥ ६५ ॥ तेनासौ प्राप्तवाल्लोकं मम ब्रह्म सनातनम् ॥ पद्माक्षोसौ ददौ भोज्यं कौशिकस्य महात्मनः ॥ ६६ ॥ धनेशत्वमवाप्तोसौ मम सान्निध्यमेव च ॥ एवमुक्त्वा हरिस्तत्र समाजे लोकपूजितः ॥ ६७ ॥ तस्मिन् क्षणे समापन्ना मधुराक्षरपेशलैः ॥ विपंचीगुणतत्त्वज्ञैर्वाद्यविद्याविशारदैः ॥ ६८ ॥ मंदं मंदस्मितादेवी विचित्राभरणान्विता ॥ गायमाना समायाता लक्ष्मीर्विष्णुपरिग्रहा ॥ ६९ ॥ वृता सहस्रकोटीभिरंगनाभिः समंततः ॥ ततो गणाधिपा दृष्ट्वा भुशुंडीपरिघायुधाः ॥ ७० ॥ ब्रह्मादींस्तर्जयंतस्ते मुनीन्देवान्समंततः ॥ उत्सारयंतः संदृष्टाधिष्ठिताः पर्वतोपमाः ॥ ७१ ॥ सर्वे वयं हि निर्याताः सार्धं वै ब्रह्मणा सुरैः ॥ तस्मिन् क्षणे समाहूतस्तुंबरुर्मुनिसत्तमः ॥ ७२ ॥ प्रविवेश समीपं वै देव्या देवस्य चैव हि ॥ तत्रासीनो यथायोगं नानामूर्छासमन्वितम् ॥ ७३ ॥ जगौ कलपदं हृष्टो विपंचीं चाभ्यवादयत् ॥ नानारत्नसमायुक्तैर्दिव्यैराभरणोत्तमैः ॥ ७४ ॥ दिव्यमाल्यैस्तथा शुभ्रैः पूजितो मुनिसत्तमः ॥ निर्गतस्तुंबरुर्हृष्टो अन्ये च ऋषयः सुराः ॥ ७५ ॥ दृष्ट्वा संपूजितं यांतं यथायोगमरिंदम ॥ नारदोथ मुनिर्दृष्ट्वा तुंबरोः सत्क्रियां हरेः ॥ ७६ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तस्मिन्नित्यादिना ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ तुंबरुस्तत्संज्ञकगंधर्वः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ संपूजितं यांतं तुंबरुं सुराः अन्ये च ऋषयः दृष्ट्वा

सुरिति शेषमादाय पर्वस्थैरन्वयः समानविद्ययोरेकस्योत्कर्षो ज्ञानिनोप्पसह्य इति नारदविषादं कथयति नारद इत्यादिना ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ निरुच्छ्वास समन्वितः प्राणायामयुक्त इत्यर्थः ॥ ८० ॥ ८१ ॥ मार्कंडेयोऽग्रिमवृत्तं सूचयति तत्र नारदविषय इत्यर्थः ॥ ८२ ॥ "कौशिकाद्या हरेर्गानाद्भक्त्या लोकं तु वैष्णवम् ॥ माप्तास्तथास्मान्कृपया सांब लोकं नय स्वकम् ॥ १ ॥" इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये प्रोच्यते साम्यं नारदस्य च तुंबरोः ॥ विष्णुप्रसादात्तत्स्थाने गानादिमहिमा तथा ॥ १ ॥" मार्कंडेयः संक्षेपाद्विष्णुप्रसादतो नारदस्य तुंबरुसाम्यप्राप्तिं कथयति तत इति ॥ १ ॥ २ ॥ ३ ॥

शोकाविष्टेन मनसा संतप्तहृदयेक्षणः ॥ चिंतामापेदिवांस्तत्र शोकमूर्छाकुलात्मकः ॥ ७७ ॥ केनाहं हि हरेर्यास्ये योगं देवी समीपतः ॥ अहो तुंबरुणा प्राप्तं धिङ्मां मूढं विचेतसम् ॥ ७८ ॥ योहं हरेः सन्निकाशं भूतैर्निर्यातितः कथम् ॥ जीवन्यास्यामि कुत्राहमहो तुंबरुणा कृतम् ॥ ७९ ॥ इति संचिंतयन् विप्रस्तप आस्थितवान्मुनिः ॥ दिव्यं वर्षसहस्रं तु निरुच्छ्वाससमन्वितः ॥ ८० ॥ ध्यायन्विष्णुमथाध्यास्ते तुंबरोः सत्क्रियां स्मरन् ॥ रोदमानो मुहुर्विद्वान्धिङ्मामिति च चिंतयन् ॥ ८१ ॥ तत्र यत्कृतवान्विष्णुस्तच्छृणुष्व नराधिप ॥ ८२ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे कौशिकवृत्तकथनं नाम प्रथमोऽध्यायः ॥ १ ॥ मार्कंडेय उवाच ॥ ततो नारायणो देवस्तस्मै सर्वं प्रदाय वै ॥ कालयोगेन विश्वात्मा समं चक्रेऽथ तुंबरोः ॥ १ ॥ नारदं मुनिशार्दूलमेवं वृत्तमभूत्पुरा ॥ नारायणस्य गीतानां गानं श्रेष्ठं पुनः पुनः ॥ २ ॥ गानेनाराधितो विष्णुः सत्कीर्तिं ज्ञानवर्चसी ॥ ददाति तुष्टिं स्थानं च यथाऽसौ कौशिकस्य वै ॥ ३ ॥ पद्माक्षप्रभृतीनां च संसिद्धिं प्रददौ हरिः ॥ तस्मात्त्वया महाराज विष्णुक्षेत्रे विशेषतः ॥ ४ ॥ अर्चनं गाननृत्याद्यं वाद्योत्सवसमन्वितम् ॥ कर्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशं नृप ॥ ५ ॥ श्रोतव्यं च सदा नित्यं श्रोतव्योऽसौ हरिस्तथा ॥ विष्णुक्षेत्रे तु यो विद्वान् कारयेद्भक्तिसंयुतः ॥ ६ ॥ गाननृत्यादिकं चैव विष्ण्वाख्यानं कथां तथा ॥ जातिस्मृतिं च मेधां च तथैवोपरमे स्मृतिम् ॥ ७ ॥ प्राप्नोति विष्णुसायुज्यं सत्यमेतन्नृपाधिप ॥ एतत्ते कथितं राजन् यन्मां त्वं परिपृच्छसि ॥ ८ ॥ किं वदामि च ते भूयो वद धर्मभृतां वर ॥ ९ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे विष्णुमाहात्म्यं नाम द्वितीयोऽध्यायः ॥ २ ॥

अंबरीषाय त्वयापि गानाद्यवश्यं कर्तव्यमित्याह तस्मादित्यादिना ॥ ४ ॥ ५ ॥ विष्ण्वालये गानादिमहिमानं कथयति विष्णुक्षेत्र इत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ सतां सद्धर्मप्रवचनस्वभाव एवेत्यतो मार्कंडेयः प्रश्नोत्तरमुक्त्वान्यत्प्रष्टव्यं पृच्छति किमिति धर्मभृतां वरेत्यनेन धर्मकथनसाफल्यं सूचितम् ॥ ९ ॥ "सांब मत्कृपयादत्तं त्वत्स्थाने विष्णुमंदिरे ॥ गानादिकारिणां गेहे जन्मस्यादपुनर्भवम् ॥ १ ॥" इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां द्वितीयोऽध्यायः ॥ २ ॥

"तृतीये हि प्रयासेन श्रीकृष्णस्य प्रसादतः ॥ गानप्राप्तिर्नारदस्य फलं गानस्य चोच्यते ॥ १ ॥" अंबरीषो नारदस्य गानप्राप्तिप्रकारं पृच्छति मार्कंडेय इत्यादिना ॥ १ ॥ २ ॥

अम्बरीष उवाच ॥ मार्कंडेय महाप्राज्ञ केन योगेन लब्धवान् ॥ गानविद्यां महाभाग नारदो भगवान्मुनिः ॥ १ ॥ तुंबरोश्च समानत्वं कस्मिन्काल उपेयिवान् ॥ एतदाचक्ष्व मे सर्वं सर्वज्ञोसि महामते ॥ २ ॥ मार्कंडेय उवाच ॥ श्रुतो मयायमर्थो वै नारदाद्देवदर्शनात् ॥ स्वयमाह महातेजा नारदोऽसौ महामतिः ॥ ३ ॥ संतप्यमानो भगवान् दिव्यं वर्षसहस्रकम् ॥ निरुच्छ्वासेन संयुक्तस्तुंबरोर्गौरवं स्मरन् ॥ ४ ॥ तताप च महाघोरं तपोराशिस्तपः परम् ॥ अथांतरिक्षे शुश्राव नारदोऽसौ महामुनिः ॥ ५ ॥ वाणीं दिव्यां महाघोषामद्भुतामशरीरिणीम् ॥ किमर्थं मुनिशार्दूल तपस्तपसि दुश्चरम् ॥ ६ ॥ उलूकं पश्य गत्वा त्वं यदि गाने रता मतिः ॥ मानसोत्तरशैले तु गानबंधुरिति स्मृतः ॥ ७ ॥ गच्छ शीघ्रं च पश्यैनं गानवित्त्वं भविष्यसि ॥ इत्युक्तो विस्मयाविष्टो नारदो वाग्विदां वरः ॥ ८ ॥ मानसोत्तरशैले तु गानबंधुं जगाम वै ॥ गंधर्वाः किन्नरा यक्षास्तथा चाप्सरसां गणाः ॥ ९ ॥ समासीनास्तु परितो गानबंधुं ततस्ततः ॥ गानविद्यां समापन्नाः शिक्षितास्तेन पक्षिणा ॥ १० ॥ स्निग्धकंठस्वरास्तत्र समासीना मुदान्विताः ॥ ततो नारदमालोक्य गानबंधुरुवाच ह ॥ ११ ॥ प्रणिपत्य यथान्यायं स्वागतेनाभ्यपूजयत् ॥ किमर्थं भगवानत्र चागतोऽसि महामते ॥ १२ ॥ किं कार्यं हि मया ब्रह्मन् ब्रूहि किं करवाणि ते ॥ नारद उवाच ॥ उलूकेंद्र महाप्राज्ञ शृणु सर्वं यथातथम् ॥ १३ ॥ मम वृत्तं प्रवक्ष्यामि पुरा भूतं महाद्भुतम् ॥ अतीते हि युगे विद्वन्नारायणसमीपगम् ॥ १४ ॥ मां विनिर्धूय संहृष्टः समाहूय च तुंबरुम् ॥ लक्ष्मीसमन्वितो विष्णुरशृणोद्गानमुत्तमम् ॥ १५ ॥ ब्रह्मादयः सुराः सर्वे निरस्ताः स्थानतोऽच्युताः ॥ कौशिकाद्याः समासीना गानयोगेन वै हरिम् ॥ १६ ॥ एवमाराध्य संप्राप्ता गाणपत्यं यथासुखम् ॥ तेनाहमतिदुःखार्तस्तपस्तप्तुमिहागतः ॥ १७ ॥ यद्दत्तं यद्धुतं चैव यथा वा श्रुतमेव च ॥ यदधीतं मया सर्वं कलां नार्हति षोडशीम् ॥ १८ ॥ विष्णोर्माहात्म्ययुक्तस्य गानयोगस्य वै ततः ॥ संचिंत्याहं तपोघोरं तदर्थं ततवान्द्विज ॥ १९ ॥ दिव्यवर्षसहस्रं वै ततो ह्यशृणुवं पुनः ॥ वाणीमाकाशसंभूतां त्वामुद्दिश्य विहंगम ॥ २० ॥ उलूकं गच्छ देवर्षे गानबंधुं मतिर्यदि ॥ गाने चेद्रतेते ब्रह्मन् तत्र त्वं वेत्स्यसे चिरात् ॥ २१ ॥ इत्यहं प्रेरितस्तेन त्वत्समीपमिहागतः ॥ किं करिष्यामि शिष्योहं तव मां पालयाव्यय ॥ २२ ॥

नारदः स्वयमाहेत्यनेन यथार्थज्ञानं सूचितम् ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ नारदो गानेऽत्यंतौत्सुक्यहेतुं कथयति उलूकेंद्रेत्यादिना ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ अश्वमेधसहस्रैर्वाजपेयायुतेन च इष्टेति शेषः ॥ २४ ॥ गवादीनां कोट्यर्बुदे विप्रेभ्यो दत्वा स्वके राज्ये द्विजगानमिति शेषः निवारयन् मेदिनीं पर्यपालयदित्यग्रिमेणान्वयः ॥ २५ ॥ २६ ॥ गानयोगेन केशवं वाऽन्यं देवतांतरं गानयोगेन गायन्यदि स द्विजः सर्वात्मना वध्यस्तस्माद्विजैरिति शेषः पुरः पुमानीश्वरो वेदैरीड्य इत्यन्वयः ॥ २७ ॥

गानबंधुरुवाच ॥ शृणु नारद यद्वृत्तं पुरा मम महामते ॥ अत्याश्चर्यसमायुक्तं सर्वपापहरं शुभम् ॥ २३ ॥ भुवनेश इति ख्यातो राजा भूद्धार्मिकः पुरा ॥ अश्वमेधसहस्रैश्च वाजपेयायुतेन च ॥ २४ ॥ गवां कोट्यर्बुदे चैव सुवर्णस्य तथैव च ॥ वाससां रथहस्तीनां कन्याश्वानां तथैव च ॥ ॥ २५ ॥ दत्वा स राजा विप्रेभ्यो मेदिनीं प्रतिपालयन् ॥ निवारयन् स्वके राज्ये गेययोगेन केशवम् ॥ २६ ॥ अन्यं वा गेययोगेन गायन्यदि समे भवेत् ॥ वध्यः सर्वात्मना तस्माद्वेदैरीड्यः परः पुमान् ॥ २७ ॥ गानयोगेन सर्वत्र स्त्रियो गायंतु नित्यशः ॥ सूतमागधसंघाश्च गीतं ते कारयंतु वै ॥ २८ ॥ इत्याज्ञाप्य महातेजा राज्यं वै पर्यपालयत ॥ तस्य गङ्गः पुराभ्याशे हरिमित्र इति श्रुतः ॥ २९ ॥ ब्राह्मणो विष्णुभक्तश्च सर्वद्वंद्वविवर्जितः ॥ नदीपुलिनमासाद्य प्रतिमां च हरेः शुभाम् ॥ ३० ॥ अभ्यर्च्य च यथान्यायं घृतदध्युत्तरं बहु ॥ मिष्टान्नं पायसं दत्वा हरेर्नैवेद्य पूपकम् ॥ ३१ ॥ प्रणिपत्य यथान्यायं तत्र विन्यस्तमानसः ॥ अगायत हरिं तत्र तालवर्णलयान्वितम् ॥ ३२ ॥ अतीव स्नेहसंयुक्तस्तद्गतेनांतरात्मना ॥ ततो राज्ञः समादेशाच्चारास्तत्र समागताः ॥ ३३ ॥ तदर्चनादि सकलं निर्धूय च समंततः ॥ ब्राह्मणं तं गृहीत्वा ते राज्ञे सम्यग्न्यवेदयन् ॥ ३४ ॥ ततो राजा द्विजश्रेष्ठं परिभर्त्स्य सुदुर्मतिः ॥ राज्यान्निर्यातयामास हृत्वा सर्वं धनादिकम् ॥ ३५ ॥ प्रतिमां च हरेश्चैव म्लेच्छा हृत्वा ययुः पुनः ॥ ततः कालेन महता कालधर्ममुपेयिवान् ॥ ३६ ॥ स राजा सर्वलोकेषु पूज्यमानः समंततः ॥ क्षुधार्तश्च तथा खिन्नो यममाह सुदुःखितः ॥ ३७ ॥ क्षुत्तृट् च वर्तेते देव स्वर्गतस्यापि मे सदा ॥ मया पापं कृतं किं वा किं करिष्यामि वै यम ॥ ३८ ॥ यम उवाच ॥ त्वया हि सुमहत्पापं कृतमज्ञानमोहतः ॥ हरिमित्रं प्रति तदा वासुदेवपरायणम् ॥ ३९ ॥ हरिमित्रे कृतं पापं वासुदेवार्चनादिषु ॥ तेन पापेन संप्राप्तः क्षुद्रोगस्त्वां सदा नृप ॥ ४० ॥ दानयज्ञादिकं सर्वं प्रनष्टं ते नराधिप ॥ गीतवाद्यसमोपेतं गायमानं महामतिम् ॥ ४१ ॥

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अतीवात्यंत इत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ हरेः प्रतिमां हरिमित्रपूजितां तत्रैव पतितां म्लेच्छाश्चोरा हृत्वा ययुरित्यन्वयः ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

॥४२॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ अवगच्छसि ज्ञानं प्राप्स्यसीत्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ मुने वर्षसहस्राणां षष्टिं तत्कालपर्यंतमित्यर्थः । गानयोगेन मे जिह्वा स्पष्टा प्रसादिता प्रसन्ना ततो गानमशिक्षयं शिक्षितवानित्यग्रिमेणान्वयः ॥ ५३ ॥ ततो वर्षसहस्राणां षष्ट्या द्विगुणेन कालेन ममेयं जिह्वा गानयोगसमायुक्ता अभूदित्यग्रिमस्थेनान्वयः ॥ ५४ ॥ तत्र गाने दशमन्वंतराः गताः अहं गानाचार्यो गानगुरुरभवं आचार्यत्वं गंधर्वाद्याः समागताः पूर्वं मासाः एते किन्नरसंघा उपागताः पश्चात्

हरिमित्रं समाहूय हृतवानसि तद्धनम् ॥ उपहारादिकं सर्वं वासुदेवस्य सन्निधौ॥४२॥तव भृत्यैस्तदा लुप्तं पापं चक्रुस्त्वदाज्ञया ॥ हरेः कीर्तिं विना चान्यद्ब्राह्मणेन नृपोत्तम ॥४३॥ न गेययोगे गातव्यं तस्मात्पापं कृतं त्वया ॥ नष्टस्ते सर्वलोकोद्य गच्छ पर्वतकोटरम् ॥४४॥ पूर्वोत्सृष्टं स्वदेहं तं खादन्नित्यं निकृत्य वै ॥ तस्मिन्कोणे त्विमं देहं खादन्नित्यं क्षुधान्वितः ॥ ४५ ॥ महानिरयसंस्थस्त्वं यावन्मन्वंतरं भवेत् ॥ मन्वंतरे ततोऽतीते भूम्यां त्वं च भविष्यसि ॥४६॥ ततः कालेन संप्राप्य मनुष्यमवगच्छसि॥ गानबंधुरुवाच ॥ एवमुक्त्वा यमो विद्वांस्तत्रैवांतरधीयत ॥४७॥ हरिमित्रो विमानेन स्तूयमानो गणाधिपैः ॥ विष्णुलोकं गतः श्रीमान्संगृह्य गणवांधवान्॥४८॥भुवनेशो नृपो ह्यस्मिन् कोटरे पर्वतस्य वै॥खादमानः शवं नित्यमास्ते क्षुत्तृट्समन्वितः॥४९॥अद्राक्षं तं नृपं तत्र सर्वमेतन्ममाकथयत्॥समालोक्याहमाज्ञाय हरिमित्रं समेयिवान्॥५०॥विमानेनार्कवर्णेन गच्छंतममरैर्वृतम् ॥ इंद्रद्युम्नप्रसादेन प्राप्तं मे ह्यायुरुत्तमम् ॥ ५१ ॥ तेनाहं हरिमित्रं वै दृष्टवानस्मि सुव्रत ॥ तदैश्वर्यप्रभावेन मनो मे समुपागतम् ॥ ५२ ॥ गानविद्यां प्रति तदा किन्नरैः समुपाविशम् ॥ षष्टिं वर्षसहस्राणां गानयोगेन मे मुने ॥ ५३ ॥ जिह्वा प्रसादिता स्पष्टा ततो गानमशिक्षयम् ॥ ततस्तु द्विगुणेनैव कालेनाभूदियं मम ॥ ५४ ॥ गानयोगसमायुक्ता गता मन्वंतरा दश ॥ गानाचार्योऽभवं तत्र गंधर्वाद्याः समागताः ॥ ५५ ॥ एते किन्नरसंघा वै मामाचार्यमुपागताः ॥ तपसा नैव शक्या वै गानविद्या तपोधन ॥ ५६ ॥ तस्माच्छ्रुतेन संयुक्तो मत्तस्त्वं गानमाप्नुहि ॥ एवमुक्तो मुनिस्तं वै प्रणिपत्य जगौ तदा ॥ ५७ ॥ तच्छ्रुत्वा मुनिश्रेष्ठ वासुदेवं नमस्य तु ॥ मार्कंडेय उवाच ॥ उलूकेनैवमुक्तस्तु नारदो मुनिसत्तमः ॥ ५८ ॥ शिक्षाक्रमेण संयुक्तस्तत्र गानमशिक्षयत् ॥ गानबंधुस्तदाहेदं त्यक्तलज्जो भवाधुना ॥ ५९ ॥ उलूक उवाच ॥ स्त्रीसंगमे तथा गीते द्यूते व्याख्यानसंगमे ॥ व्यवहारे तथाहारे त्वर्थानां च समागमे ॥ ६० ॥ आये व्यये तथा नित्यं त्यक्तलज्जस्तु वै भवेत् ॥ न कुंचितेन गूढेन नित्यं प्रावरणादिभिः ॥ ६१ ॥

प्राप्ता इत्यग्रिमस्थैरन्वयः ॥ ५५ ॥ सर्वसाधकं तपस्तेनापि गानविद्या अशक्या अभ्यास एवकारणमित्याह तपसेत्यादिना ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ कार्यार्थिनां लज्जा विघातिकेति तत्त्यागस्थानान्याह स्त्रीसंगम इत्यादिना ॥ ६० ॥ यानोपबृंहकनियमान् कथयति न कुंचितेनेत्यादिना ॥ ६१ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ तावद्ब्रह्मदिनसमाप्तिपर्यंतमायुषो भावः सत्ता मे शुभं शारीरादिकल्याणं मनसाध्याहितं चिंतित

हस्तविक्षेपभावेन व्यादितास्येन चैव हि ॥ निर्यातजिह्वायोगेन न गेयं हि कथंचन ॥ ६२ ॥ न गायेदूर्ध्वबाहुश्च नोर्ध्वदृष्टिः कथंचन ॥ स्वांगं निरीक्षमाणेन परं संप्रेक्षता तथा ॥ ६३ ॥ संघट्टे च तथोत्थाने कटिस्थानं न शस्यते ॥ हासो रोषस्तथा कंपस्तथान्यत्र स्मृतिः पुनः ॥ ६४ ॥ नैतानि शस्तरूपाणि गानयोगे महामते ॥ नैकहस्तेन शक्यं स्यात्तालसंवदनं मुने ॥६५॥ क्षुधार्तेन भयार्तेन तृष्णार्तेन तथैव च ॥ गानयोगो न कर्तव्यो नांधकारे कथंचन ॥६६॥ एवमादीनि चान्यानि न कर्तव्यानि गायता ॥ मार्कंडेय उवाच ॥ एवमुक्तः स भगवांस्तेनोक्तविधिलक्षणैः॥ अशिक्षयत्तथा गीतं दिव्यं वर्षसहस्रकम् ॥ ६७ ॥ ततः समस्तसंपन्नो गीतप्रस्तारकादिषु ॥ विपंच्यादिषु संपन्नः सर्वस्वरविभागवित् ॥ ६८ ॥ अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ स्वराणां भेदयोगेन ज्ञातवान्मुनिसत्तमः ॥६९॥ ततो गंधर्वसंघाश्च किन्नराणां तथैव च ॥ मुनिना सह संयुक्ताः प्रीतियुक्ता भवंति ते ॥ ७० ॥ गानबंधुं मुनिः प्राह प्राप्य गानमनुत्तमम् ॥ त्वां समासाद्य संपन्नस्त्वं हि गीतविशारदः ॥ ७१ ॥ ध्वांक्षशत्रो महाप्राज्ञ किमाचार्ये करोमि ते ॥ गानबंधुरुवाच ॥ ब्रह्मणो दिवसे ब्रह्मन् मनवस्तु चतुर्दश ॥ ७२ ॥ तावत्त्रैलोक्यसंभावो भविष्यति महामुने ॥ तावन्मे ह्यायुषो भावस्तावन्मे परमं शुभम् ॥ ७३ ॥ मनसाध्याहितं मे स्याद्दक्षिणा मुनिसत्तम ॥ नारद उवाच ॥ अतीतकल्पसंयोगे गरुडस्त्वं भविष्यसि ॥ ७४ ॥ स्वस्ति तेऽस्तु महाप्राज्ञ गमिष्यामि प्रसीद माम् ॥ मार्कंडेय उवाच ॥ एवमुक्त्वा जगामाथ नारदोऽपि जनार्दनम् ॥ ७५ ॥ श्वेतद्वीपे हृषीकेशं गापयामास गीतकान् ॥ तत्र श्रुत्वा तु भगवान्नारदं प्राह माधवः ॥ ७६ ॥ तुंबरोर्न विशिष्टोसि गीतेनद्यापि नारद ॥ यदा विशिष्टो भविता तं कालं प्रवदाम्यहम् ॥ ७७ ॥ गानबंधुं समासाद्य गानार्थज्ञो भवानसि ॥ मनोर्वैवस्वतस्याहमष्टाविंशति मे युगे ॥ ७८ ॥ द्वापरांते भविष्यामि यदुवंशकुलोद्भवः ॥ देवक्यां वसुदेवस्य कृष्णो नाम्ना महामते ॥ ७९ ॥ तदानीं मां समासाद्य स्मारयेथा यथातथम् ॥ तत्र त्वां गीतसंपन्नं करिष्यामि महाव्रतम् ॥ ८० ॥ तुंबरोश्च समं चैव तथातिशयसंयुतम् ॥ तावत्कालं यथायोगं देवगंधर्वयोनिषु ॥ ८१ ॥ शिक्षयस्व यथान्यायमित्युक्त्वांतरधीयत ॥ ततो मुनिः प्रणम्यैनं वीणावादनतत्परः ॥ ८२ ॥ देवर्षिर्देवसंकाशः सर्वाभरणभूषितः ॥ तपसां निधिरत्यंतं वासुदेवपरायणः ॥ ८३ ॥ स्कंधे विपंचीमासाद्य सर्वलोकांश्चचार सः ॥ वारुणं याम्यमाग्नेयमैंद्रं कौबेरमेव च ॥ ८४ ॥

च मुनिसत्तम मे दक्षिणा स्यादित्यग्रिमेणान्वयः ॥ ७३ ॥ अतीतात् कल्पोऽतीतकल्पस्तस्य संयोगे प्राप्ते गरुडस्त्वं भविष्यसीत्यनेनैव प्रार्थितप्राप्तिः सूचिता ॥ ७४ ॥ ॥ ७५ ॥ हृषीकेशं विष्णुं प्रतिगीतकान् गापयामास स्वार्थे णिच् अगायदित्यर्थः ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥

॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ स्वरकल्पाः स्वरप्रथमा इत्यर्थः 'कल्पः स्यात्प्रथमे न्याये' इति विश्वः । मताः मान्याः षड्जाद्याः सप्त स्थिताः क्रीडतः क्रीडमानांस्तानिति शेषः दृष्ट्वा भगवान्नारदः सुसत्वरं निर्गत इत्यन्वयः ॥ ९१ ॥ ९२ ॥ गानविद्यायां विशारदो निपुणो नारदः स्वरांगनाः स्वरस्त्रियः सप्त

वायव्यं च तथेशानं संसदं प्राप्य धर्मवित् ॥ गायमानो हरिं सम्यग्वीणावादविचक्षणः ॥ ८५ ॥ गंधर्वाप्सरसां संघैः पूज्यमानस्ततस्ततः ॥ ब्रह्मलोकं समासाद्य कस्मिंश्चित्कालपर्यये ॥ ८६ ॥ हाहाहूहूश्च गंधर्वौ गीतवाद्यविशारदौ ॥ ब्रह्मणो गायकौ दिव्यौ नित्यौ गंधर्वसत्तमौ ॥ ८७ ॥ तत्र ताभ्यां समालक्ष्य गायमानो हरिं प्रभुम् ॥ ब्रह्मणा च महातेजाः पूजितो मुनिसत्तमः ॥ ८८ ॥ तं प्रणम्य महात्मानं सर्वलोकपितामहम् ॥ चाचार च यथाकामं सर्वलोकेषु नारदः ॥ ८९ ॥ ततः कालेन महता गृहं प्राप्य च तुंबरोः ॥ वीणामादाय तत्रस्थो ह्यगायत महामुनिः ॥ ९० ॥ स्वरकल्पास्तु तत्रस्थाः षड्जाद्याः सप्त वै मताः ॥ क्रीडतो भगवान्दृष्ट्वा निर्गतश्च सुसत्वरम् ॥ ९१ ॥ शिक्षयामास बहुशस्तत्र तत्र महामतिः ॥ श्रमयोगेन संयुक्तो नारदोपि महामुनिः ॥ ९२ ॥ सप्तस्वरांगनाः पश्यन् गानविद्याविशारदः ॥ आसीद्वीणासमायोगे न तास्तस्य प्रपेदिरे ॥ ९३ ॥ ततो रैवतके कृष्णं प्रणिपत्य महामुनिः ॥ विज्ञापयदशेषं तु श्वेतद्वीपे तु यत्पुरा ॥ ९४ ॥ नारायणेन कथितं गानयोगमनुत्तमम् ॥ तच्छ्रुत्वा प्राहसन्कृष्णः प्राह जांबवतीं मुदा ॥ ९५ ॥ एवं मुनिवरं भद्रे शिक्षयस्व यथाविधि ॥ वीणागानसमायोगे तथेत्युक्त्वा च सा हरिम् ॥ ९६ ॥ प्रहसंती यथायोगं शिक्षयामास तं मुनिम् ॥ ततः संवत्सरे पूर्णे पुनरागम्य माधवम् ॥ ९७ ॥ प्रणिपत्याग्रतस्तस्थौ पुनराह स केशवः ॥ सत्या समीपमागच्छ शिक्षयस्व यथाविधि ॥ ९८ ॥ तथेत्युक्त्वा सत्यभामां प्रणिपत्य जगौ मुनिः ॥ तया स शिक्षितो विद्वान् पूर्णे संवत्सरे पुनः ॥ ९९ ॥ वासुदेवनियुक्तोऽसौ रुक्मिणीसदनं गतः ॥ अंगनाभिस्ततस्ताभिर्दासीभिर्मुनिसत्तमः ॥ १०० ॥ उक्तोऽसौ गायमानोपि न स्वरं वेत्सि वै मुने ॥ ततः श्रमेण महता वत्सरत्रयसंयुतम् ॥ १०१ ॥ शिक्षितोसौ तदा देव्या रुक्मिण्यापि जगौ मुनिः ॥ ततः स्वरांगनाः प्राप्य तंत्रीयोगं महामुनेः ॥ १०२ ॥ आहूय कृष्णो भगवान् स्वयमेव महामुनिम् ॥ अशिक्षयदमेयात्मा गानयोगमनुत्तमम् ॥ १०३ ॥ ततोऽतिशयमापन्नस्तुंबरोर्मुनिसत्तमः ॥ ततो ननर्त देवर्षिः प्रणिपत्य जनार्दनम् ॥ १०४ ॥

पश्यन्वीणासमायोगेन आसीदभवत् तंत्र्यस्ताः स्वरांगनाः न प्रपेदिरे न प्राप्तवत्यः ॥ ९३ ॥ रैवतके तत्संज्ञकपर्वते इत्यर्थः ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ॥ ९९ ॥ १०० ॥ १ ॥ ततो रुक्मिणीशिक्षणानंतरं महामुनेस्तंत्रीयोगं स्वरांगनाः प्राप्य स्थिता इति शेषः ॥ २ ॥ ३ ॥ ततः श्रीकृष्णशिक्षणादित्यर्थः ततः

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

समग्रगानविद्यालाभादेवर्षिः जनार्दनं प्रणिपत्य ननर्तेत्यन्वयः ॥ ४ ॥ गानयोगेन संगीतशास्त्रज्ञानयोगेनेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ तदा कृष्णस्य शिवपूजाकाले तस्य कृष्णरूपस्य हरेर्विष्णोर्नियोगान्मुनिर्नारदः रुक्मिण्या सत्या जांबवत्या कृष्णेन च सह जगावित्यग्रिमस्थेनान्वयः ॥ ८ ॥ मुनेर्नारदस्य गीतक्रमो गानप्राप्तिक्रम इत्यर्थः ॥ ९ ॥ वासुदेवाख्यां विष्णुस्तुतिं भृशं गायमानो ब्राह्मणः हरेः सालोक्यमाप्नोति रुद्रो गीयतेऽनेनेति रुद्रगानः अधिको हरिसरूपः भवेदित्यन्वयः ॥ १० ॥ अन्यत् हरिहर स्तुत्यन्यदन्यथा अभक्त्यादिप्रकारेण च गायमानो ब्राह्मणः नरकं गच्छेदेव हि ॥ ११ ॥ वासुदेवपरायणः कर्मणा मनसा वाचा गायन्वा शृण्वंस्तं आप्नोति तस्माद्विष्णुसालो

उवाच च हृषीकेशः सर्वज्ञस्त्वं महामुने ॥ प्रहस्य ज्ञानयोगेन गायस्व मम संनिधौ ॥ १०५ ॥ एतत्ते प्रार्थितं प्राप्तं मम लोके तथैव च ॥ नित्यं तुंबरुणा सार्धं गायस्व च यथातथम् ॥ १०६ ॥ एवमुक्तो मुनिस्तत्र यथायोगं चचार सः ॥ यदा संपूजयन्कृष्णो रुद्रं भुवननायकम् ॥ १०७ ॥ तदा जगौ हरेस्तस्य नियोगाच्छंकराय वै ॥ रुक्मिण्या सह सत्या च जांबवत्या महामुनिः ॥ १०८ ॥ कृष्णेन च नृपश्रेष्ठ श्रुतिजातिविशारदः ॥ एष वो मुनिशार्दूलाः प्रोक्तो गीतक्रमो मुनेः ॥ १०९ ॥ ब्राह्मणो वासुदेवाख्यां गायमानो भृशं नृप ॥ हरेः सालोक्यमाप्नोति रुद्रगानोऽधिको भवेत् ॥ ११० ॥ अन्यथा नरकं गच्छेद्गायमानोन्यदेव हि ॥ कर्मणा मनसा वाचा वासुदेवपरायणः ॥ १११ ॥ गायन्शृण्वंस्तमाप्नोति तस्माद्गेयं परं विदुः ॥ ११२ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे वैष्णवगीतकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥ ऋषय ऊचुः ॥ वैष्णवा इति ये प्रोक्ता वासुदेवपरायणाः ॥ कानि चिह्नानि तेषां वै तन्नो ब्रूहि महामते ॥१॥ तेषां वा किं करोत्येष भगवान्भूतभावनः ॥ एतन्मे सर्वं माचक्ष्व सूत सर्वार्थवित्तम ॥ २ ॥ सूत उवाच ॥ अंबरीषेण वै पृष्टो मार्कंडेयः पुरा मुनिः ॥ युष्माभिरद्य यत्प्रोक्तं तद्वदामि यथातथम् ॥३॥ मार्कंडेय उवाच ॥ शृणु राजन्यथान्यायं यन्मां त्वं परिपृच्छसि ॥ यत्रास्ते विष्णुभक्तस्तु तत्र नारायणः स्थितः ॥४॥ विष्णुरेव हि सर्वत्र येषां वै देवता स्मृता ॥ कीर्त्यमाने हरौ नित्यं रोमांचो यस्य वर्तते ॥ ५ ॥ कंपः स्वेदस्तथाक्षेषु दृश्यंते जलबिंदवः ॥ विष्णुभक्तिसमायुक्तान् श्रौतस्मार्तप्रवर्तकान् ॥ ६ ॥

स्यप्रदत्वात् गेयं परममुत्कृष्टं विदुरिति पूर्वस्थैरन्वयः ॥१२॥ "यत्पूजायां कृष्णो भक्त्या युक्तो जगौ सदा सांबम् ॥ पत्नीनारदसहितो वंदे तं वै दुरंतमहिमानम् ॥ १ ॥" इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां तृतीयोऽध्यायः ॥३॥ "लैंगोत्तरे चतुर्थेऽस्मिन्वैष्णवानां हि लक्षणम् ॥ माहात्म्यं चैव तेभ्यस्तु शैवानां श्रेष्ठतोच्यते ॥१॥" ऋषयो वैष्णवानां लक्षणादि पृच्छन्वैष्णवा इत्यादिना ॥ १ ॥ २ ॥ युष्माभिरद्य यत्पृष्टं तद्वै अंबरीषेण पृष्टो मार्कंडेयो मुनिराहेति शेषस्तद्यथातथं वदामीत्यन्वयः ॥ ३ ॥ 'यो यच्छ्रद्धः स एव स' इति भगवद्गीतोक्तनियमात् यत्र विष्णुभक्त आस्ते तत्र नारायणः स्थितो विद्यमान इत्यर्थः ॥ ४ ॥ विष्णुभक्तलक्षणानि कथयति विष्णुरित्यादिना ॥ ५ ॥ अक्षेषु इंद्रियेष्वित्यर्थः ॥ ६ ॥ जगतः अरणे दर्शने रक्षणनिमित्तं अन्यत् परिधानान्यद्वस्त्रं नाच्छादयेन्न शरीरावरणं कुर्यादित्यर्थः ॥ ७ ॥ ८ ॥ रूक्षाक्षराणि परुषशब्दान् क्षांत्या वदेत्तया भागवतेरितः प्रणाम पूर्वकं वदेत्स हि वैष्णव इत्यग्रिमेणान्वयः ॥ ९ ॥ १० ॥ शुभानि पुण्यकर्माण्येवेत्यर्थः ॥११ ॥ १२ ॥ विष्णुभक्तस्य सर्वं भोजनाराधनं यथाशक्त्या सदा यः करोति तत्फलमिति शेषः यथान्यायं वास्तवं हि कथ्यत इत्यग्रिमेणान्वयः ॥ १३ ॥ १४ ॥ १५ ॥ वैष्णवमाहात्म्यं कथयति वासुदेवपरमित्यादिना ॥ १६ ॥ १७ ॥ भृगुनंदनं च्यवन

प्रीतो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्तितः ॥ नान्यदाच्छादयेद्वस्त्रं वैष्णवो जगतोऽरणे ॥ ७ ॥ विष्णुभक्तमथायांतं यो दृष्ट्वा सन्मुखस्थितः ॥ प्रणमादि करोत्येवं वासुदेवे यथा तथा ॥ ८ ॥ स वै भक्त इति ज्ञेयः स जयी स्याज्जगत्त्रये ॥ रूक्षाक्षराणि शृण्वन्वै तथा भागवतेरितः ॥ ९ ॥ प्रणामपूर्वं क्षांत्या वै यो वदेद्वैष्णवो हि सः ॥ गंधपुष्पादिकं सर्वं शिरसा यो हि धारयेत् ॥ १० ॥ हरेः सर्वमितीत्येवं मत्त्वासौ वैष्णवः स्मृतः ॥ विष्णुक्षेत्रे शुभान्येव करोति स्नेहसंयुतः ॥ ११ ॥ प्रतिमां च हरेर्नित्यं पूजयेत्प्रयतात्मवान् ॥ विष्णुभक्तः स विज्ञेयः कर्मणा मनसा गिरा ॥ १२ ॥ नारायणपरो नित्यं महाभागवतो हि सः ॥ भोजनाराधनं सर्वं यथाशक्त्या करोति यः ॥ १३ ॥ विष्णुभक्तस्य च सदा यथान्यायं हि कथ्यते ॥ नारायणपरो विद्वान्यस्यान्नं प्रीतमानसः ॥ १४ ॥ आश्नाति तद्धरेरास्यं गतमन्नं न संशयः ॥ स्वार्चनादपि विश्वात्मा प्रीतो भवति माधवः ॥ १५ ॥ महाभागवते तच्च दृष्ट्वासौ भक्तवत्सलः ॥ वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् ॥ १६ ॥ देवापि भीतास्तं यांति प्रणिपत्य यथागतम् ॥ श्रूयतां हि पुरा वृत्तं विष्णुभक्तस्य वैभवम् ॥ १७ ॥ दृष्ट्वा यमोऽपि वै भक्तं वैष्णवं दग्धकिल्बिषम् ॥ उत्थाय प्रांजलिर्भूत्वा ननाम भृगुनंदनम् ॥ १८ ॥ तस्मात्संपूजयेद्भक्त्या वैष्णवान्विष्णुवन्नरः ॥ स याति विष्णुसामीप्यं नात्र कार्या विचारणा ॥ १९ ॥ अन्यभक्तसहस्रेभ्यो विष्णुभक्तो विशिष्यते ॥ विष्णुभक्तसहस्रेभ्यो रुद्रभक्तो विशिष्यते ॥ रुद्रभक्तात्परतरो नास्ति लोके न संशयः ॥ २० ॥ तस्मात्तु वैष्णवं चापि रुद्रभक्तमथापि वा ॥ पूजयेत्सर्वयत्नेन धर्मकामार्थमुक्तये ॥ २१ ॥ इति श्रीलिंगमहापुराणे उत्तरभागे विष्णुभक्तकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

मित्यर्थः ॥ १८ ॥ तस्मात्पूर्वोक्तकारणादित्यर्थः ॥ १९ ॥ अन्यभक्तसहस्रेभ्यः सौरादिभ्य इत्यर्थः रुद्रभक्तात् शैवात्परतरो लोके भूलोके नास्ति अत्र संशयो नेत्यन्वयः ॥ २० ॥ हरिहरभक्तावेवार्च्यावित्याह तस्मादिति ॥ २१ ॥ "शांत्यादिगुणयुक्तेभ्यो वैष्णवेभ्योऽपि ये पराः ॥ शैवा यतः शिवाभिन्नास्तान्नमाम्यभयप्रदान् ॥ १ ॥" इति श्रीलिंगमहापुराणे उत्तरभागे शिवतोषिण्यां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

"पंचमे वर्ण्यतेऽध्याये चरितं परमाद्भुतम् ॥ अंबरीषस्य राजर्षेर्विष्णुमायासमन्वितम् ॥ १ ॥" ऋषयः परमवैष्णवांबरीषचरितमपृच्छन्नैक्ष्वाकुरित्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अंबरीषो विष्णुप्रसादज इति तन्मातृचरितं कथयति त्रिशंकोरित्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ हविषां विष्णुसमर्पणीयान्नानामित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ देवेन

ऋषय ऊचुः ॥ ऐक्ष्वाकुरंबरीषो वै वासुदेवपरायणः ॥ पालयामास पृथिवीं विष्णोराज्ञापुरःसरः ॥१॥ श्रुतमेतन्महाबुद्धे तत्सर्वं वक्तुमर्हसि ॥ नित्यं तस्य हरेश्चक्रं शत्रुरोगभयादिकम् ॥२॥ हंतीति श्रूयते लोके धार्मिकस्य महात्मनः ॥ अंबरीषस्य चरितं तत्सर्वं ब्रूहि सत्तम ॥३॥ माहात्म्यमनुभावं च भक्तियोगमनुत्तमम् ॥ यथावच्छ्रोतुमिच्छामः सूत वक्तुं त्वमर्हसि ॥ ४ ॥ सूत उवाच ॥ श्रूयतां मुनिशार्दूलाश्चरितं तस्य धीमतः ॥ अंबरीषस्य माहात्म्यं सर्वपापहरं परम् ॥ ५ ॥ त्रिशंकोर्दयिता भार्या सर्वलक्षणशोभिता ॥ अंबरीषस्य जननी नित्यं शौचसमन्विता ॥६॥ योगनिद्रासमारूढं शेषपर्यंकशायिनम् ॥ नारायणं महात्मानं ब्रह्मांडकमलोद्भवम् ॥७॥ तमसा कालरुद्राख्यं रजसा कनकांडजम् ॥ सत्त्वेन सर्वगं विष्णुं सर्वदेवनमस्कृतम् ॥८॥ अर्चयामास सततं वाङ्मनःकायकर्मभिः ॥ माल्यदानादिकं सर्वं स्वयमेवमचीकरत् ॥९॥ गंधादिपेषणं चैव धूपद्रव्यादिकं तथा ॥ भूमेरालेपनादीनि हविषां पचनं तथा ॥१०॥ तत्कौतुकसमाविष्टा स्वयमेव चकार सा ॥ शुभा पद्मावती नित्यं वाचा नारायणेति वै ॥ ११ ॥ अनंतेत्येव सा नित्यं भाषमाणा पतिव्रता ॥ दशवर्षसहस्राणि तत्परेणांतरात्मना ॥ १२ ॥ अर्चयामास गोविंदं गंधपुष्पादिभिः शुचिः ॥ विष्णुभक्तान्महाभागान् सर्वपापविवर्जितान् ॥ १३ ॥ दानमानार्चनैर्नित्यं धनरत्नैरतोपयत् ॥ ततः कदाचित्सा देवी द्वादशीं समुपोष्य वै ॥ १४ ॥ हरेरग्रे महाभागा सुष्वाप पतिना सह ॥ तत्र नारायणो देवस्तामाह पुरुषोत्तमः ॥ १५ ॥ किमिच्छसि वरं भद्रे मत्तस्त्वं ब्रूहि भामिनि ॥ सा दृष्ट्वा तु वरं वव्रे पुत्रो मे वैष्णवो भवेत् ॥ १६ ॥ सार्वभौमो महातेजाः स्वकर्मनिरतः शुचिः ॥ तथेत्युक्त्वा ददौ तस्यै फलमेकं जनार्दनः ॥ १७ ॥ सा प्रबुद्धा फलं दृष्ट्वा भर्त्रे सर्वं न्यवेदयत् ॥ भक्षयामास संहृष्टा फलं तद्गतमानसा ॥ १८ ॥ ततः कालेन सा देवी पुत्रं कुलविवर्धनम् ॥ असूत सा सदाचारं वासुदेवपरायणम् ॥१९॥ शुभलक्षणसंपन्नं चक्रांकिततनूरुहम् ॥ जातं दृष्ट्वा पिता पुत्रं क्रियाः सर्वाश्चकार वै ॥ २० ॥

विष्णुना सहेत्यर्थः ॥१४॥१५॥ भामिनि दीप्तिमतीत्यर्थः । "भामः क्रोधे रवौ दीप्ताविति विश्वः" ॥ १६ ॥ १७ ॥ १८॥ सतामाचारो यस्मात्तं सदाचारम् ॥ १९ ॥ चक्रांकिताः तनूरुहाः केशा यस्य स चक्रांकिततनूरुहस्तं [illegible] ॥ २०॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

